६८

आश्लेषाधरबिम्बचुम्बनसुखालापस्मितान्यासतां
दूरे तावदिदं मिथो न सुलभं जातं मुखालोकनम् ।
इत्थं व्यर्थकृतैकदेहघटनोपन्यासयोरावयोः
केयं प्रेमविडम्बनेत्यवतु वः स्मेरोर्धनारीश्वरः ॥

शूरवर्मणः.

६९

मातर्जीव किमेतदञ्जलिपुटे तातेन गोपाय्यते
वत्स स्वादु फलं प्रयच्छति न मे गत्वा गृहाण स्वयम् ।
मात्रैवं प्रहिते गुहे विघटयत्याकृष्य संध्याञ्जलिं
शंभोर्भिन्नसमाधिरुद्धरभसो हासोद्गमः पातु वः ॥

चन्द्रकस्य.

७०

एकं दन्तच्छदस्य स्फुरति जपवशादर्धमन्यत्प्रकोपा-
देकः पाणिः प्रणन्तुं शिरसि कृतपदः क्षेप्तुमन्यस्तमेव ।
एकं ध्यानान्निमीलत्यपरमविषहं वीक्षितुं चक्षुरित्थं
तुल्यानिच्छापि वामा तनुरवतु स वो यस्य संध्यावसाने ॥

अर्भकस्य.

७१

शैलराजतनयास्तनयुग्मव्यापृतास्ययुगलस्य गुहस्य ।
शेषवक्त्रकमलानि मलं वो दुग्धपानविधुराणि हरन्तु ॥

कस्यापि.

७२

करजालमपूर्वचेष्टितं वस्तदभीष्टप्रदमस्तु तिग्मभासः ।
क्रियते भवबन्धनाद्विमुक्तिः प्रणतानामुपसेवितेन येन ॥

७३

युष्माकमम्बरमणेः प्रथमे मयूखा-
स्ते मङ्गलं विदधतूदयरागभाजः ।
कुर्वन्ति ये दिवसजन्ममहोत्सवेषु
सिन्दूरपाटलमुखीरिव दिक्पुरंध्रीः ॥

एतौ भा० अमृतदत्तस्य.

७४

आबाहूद्वृत्तमण्डलाग्ररुचयः संनद्धवक्षःस्थलाः
सोष्माणो व्रणिनो विपक्षहृदयप्रोन्माथिनः कर्कशाः ।
उत्सृष्टाम्बरदृष्टविग्रहभरा यस्य स्मराग्रेसरा
योधा वारवधूस्तनाश्च न दधुः क्षोभं स वोऽव्याज्जिनः ॥

७५

किं स्याद्भास्वान्न भानोरमृतघनरसस्यन्दिनः सन्ति पादाः
किं वा राकाशशाङ्को नहि तुहिनरुचिः कुत्रचिन्निष्कलङ्कः ।
साक्षाच्चिन्तामणिः किं विपुलफलमणेः सौकुमार्यं कुतस्त्यं
संदेहान्मुग्धधीभिः प्रथममिति मुनेः पातु दृष्टं वपुर्वः ॥

७६

चिरमाविष्कृतप्रीतिभीतयः पान्तु वो द्विषाम् ।
वलयज्यारवोन्मिश्राश्चण्डयाः कोदण्डकृष्टयः ॥

७७

दिश्यान्महासुरशिरःसरसीप्सितानि
प्रेङ्खन्नखावलिमयूखमृणालनालम् ।
चण्ड्याश्चलच्चटुलनूपुरचञ्चरीक-
झांकारहारि चरणाम्बुरुहद्वयं वः ॥

एते केषामपि.

७८

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

कस्यापि.

७९

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसं वहन्त्याः ।

भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥

भट्टनारायणस्य.

८०

पायाद्गजेन्द्रवदनः स इमां त्रिलोकीं
यस्योद्गतेन गगने महता करेण ।
मूलावलग्नसितदन्तबिसाङ्कुरेण
नालायितं तपनबिम्बसरोरुहस्य ॥

कस्यापि.

८१

सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसंकोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु सीत्कारवत्यः ॥

भवभूतेः

८२

धनुर्माला मौर्वी क्वणदलिकुलं लक्ष्यमबला
मनो भेद्यं शब्दप्रभृतय इमे पञ्च विशिखाः ।
इयाञ्जेतुं यस्य त्रिभुवनमदेहस्य विभवः
स कामः कामान्वो दिशतु दयितापाङ्गवसतिः ॥

घण्टकस्य.

८३

ब्रह्मा दक्षः कुबेरो यमवरुणमरुद्वह्निचन्द्रेन्द्ररुद्राः
शैला नद्यः समुद्रा ग्रहगणमनुजा दैत्यगन्धर्वनागाः ।
द्वीपा नक्षत्रतारारविवसुमुनयो व्योम भूरश्विनौ च
संलीना यस्य सर्वे वपुषि स भगवान्पातु वो विश्वरूपः ॥

कस्यापि.

८४

मुग्धे मुञ्च विषादमत्र बलजित्कम्पो गुरुस्त्यज्यतां
सद्भावं भज पुण्डरीकनयने मान्यानिमान्मानय ।

लक्ष्मीं बोधयतः स्वयंवरविधौ धन्वन्तरेर्वाक्छला-
दन्यत्र प्रतिषेधमात्मनि विधिं शृण्वन्हरिः पातु वः ॥

दाक्षिणात्यस्य कस्यापि.

८५

दिश्यात्सुखं नरहरिर्भुवनैकवीरो
यस्याहवे दितिसुतोद्दलनोद्यतस्य ।
क्रोधोद्धतं मुखमवेक्षितुमक्षमत्वं
जानेभवन्निजनखेष्वपि यन्नतास्ते ॥

प० श्रीबकस्य.

८६

स्वस्ति स्वागतमर्थ्यहं वद विभो किं दीयतां मेदिनी
का मात्रा मम विक्रमत्रयपदं दत्तं गृहीतं मया ।
मा देहीत्युशनाः कुतो हरिरयं पात्रं किमस्मात्परं
यो हीत्थं बलिनार्चितो मखमुखे पायात्स वो वामनः ॥

८७

चक्र ब्रूहि विभो गदे जय हरे कम्बो समाज्ञापय
भो भो नन्दक जीव पन्नगरिपो किं नाथ भिन्नो मया ।
को दैत्यः कतमो हिरण्यकशिपुः सत्यं भवद्भयः शपे ।
केनास्त्रेण नखैरिति प्रवदतो विष्णोर्मुखं पातु वः ॥

८८

चिन्ताचक्रिणि हन्त चक्रिणि भिया कुब्जासनेब्जासने
नश्यद्धामनि तिग्मधामनि धृताशङ्के शशाङ्के भृशम् ।
भ्रश्यच्चेतसि च प्रचेतसि शुचा तान्ते कृतान्ते च यो
व्यग्रोभूत्कटुकालकूटकवलीकाराय पायात्स वः ॥

एते कस्यापि.

८९

नित्यं निरावृति निजानुभवैकमान-
मानन्दधाम जगदङ्कुरबीजमेकम् ।

दिग्देशकालकलनादिसमस्तहस्त-
मर्दासहं दिशतु शर्म महन्महो वः ॥

९०

व्योम्नीव नीरदभरः सरसीव वीचि-
व्यूहः सहस्रमहसीव सुधांशुधाम ।
यस्मिन्निदं जगदुदेति च लीयते च
तच्छाम्भवं भवतु वैभवमृद्धये वः ॥

९१

लोकत्रयस्थितिलयोदयकेलिकारः
कार्येण यो हरिहरद्रुहिणत्वमेति ।
देवः स विश्वजनवाङ्मनसातिवृत्त-
शक्तिः शिवं दिशतु शश्वदनश्वरं वः ॥

९२

सर्वः किलायमवशः पुरुषाणुकर्म-
कायादिकारणगणो यदनुग्रहेण ।
विश्वप्रपञ्चरचनाचतुरत्वमेति
स त्रायतां त्रिभुवनैकमहेश्वरो वः ॥

९३

यः कन्दुकैरिव पुरंदरपद्मसद्म-
पद्मापतिप्रभृतिभिः प्रभुरप्रमेयः ।
खेलत्यलङ्घ्यमहिमा स हिमाद्रिकन्या-
कान्तः कृतान्तदलनो लघयत्वघं वः ॥

९४

मुक्तिर्हि नाम परमः पुरुषार्थ एक-
स्तामन्तरायमवयन्ति यदन्तरज्ञाः ।
किं भूयसा भवतु सैव सुधामयूख-
लेखाशिखाभरणभक्तिरभङ्गुरा वः ॥

१९७

साकूतं निजसंविदेकविषयं तत्त्वं सचेता ब्रुव-
न्नग्रे नूनमबोधमोहितधियां हास्यत्वमायास्यति ।
तद्युक्तं विदुषो जनस्य जडवज्जोषं नु नामासितुं
जात्यन्धं प्रतिरूपवर्णनविधौ कोऽयं वृथैवोद्यमः ॥

---

## अथ सज्जनवर्णनपद्धतिः

१९८

जयन्ति जितमत्सराः परहितार्थमभ्युद्यताः
पराभ्युदयसुस्थिताः परविपत्तिखेदाकुलाः ।
महापुरुषसत्कथाश्रवणजातकौतूहलाः
समस्तदुरितार्णवप्रकटसेतवः साधवः ॥

भदन्ताश्वघोषस्य.

१९९

परपरिवादे मूकः परनारीदर्शनेऽपि जात्यन्धः ।
पङ्गुः परधनहरणे स जयति लोके महापुरुषः ॥

कस्यापि.

२००

संपत्सु महतां चेतो भवत्युत्पलकोमलम् ।
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥

भर्तृहरेः.

२०१

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥

रविगुप्तस्य.

२०२

उपकारेण दूयन्ते न सहन्तेऽनुकम्पिताम् ।
आपत्स्वपि दुराराध्या नित्यदुःखा मनस्विनः ॥

२०३

जलसेकेन वर्धन्ते तरवो नाश्मसंचयाः ।
भव्यो हि द्रव्यतामेति क्रियां प्राप्य तथाविधाम् ॥

२०४

अवृत्तिभयमन्त्यानां मध्यानां मरणाद्भयम् ।
उत्तमानां तु सत्त्वानामवमानात्परं भयम् ॥

एते व्यासमुनेः.

२०५

तापं हन्ति सुखं सूते जीवयत्युज्ज्वलं यशः ।
अमृतस्य प्रकारोऽयं दुर्लभः साधुसंगमः ॥

२०६

रसायनमयी शीता परमानन्ददायिनी ।
नानन्दयति कं नाम साधुसंगतिचन्द्रिका ॥

२०७

साधुसंगतरोर्जातं विवेककुसुमं शुभम् ।
रक्षन्ति ये महात्मानो भाजनं ते फलश्रियः ॥

२०८

शून्यमाकीर्णतामेति मृत्युरप्युत्सवायते ।
आपत्संपदिवाभाति विद्वज्जनसमागमे ॥

२०९

हिममापत्सरोजिन्या मोहनीहारमारुतः ।
जयत्येको जगत्यस्मिन्साधुः साधुसमागमः ॥

२१०

परं विवर्धनं बुद्धेरज्ञानतरुशातनम् ।
समुत्सारणमाधीनां विद्धि साधुसमागमम् ॥

२११

यः स्नातः शीतसितया साधुसंगतिगङ्गया ।
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥

एते भगवद्वाल्मीकिमुनेः.

२१२

हृदयानि सतामेव कठिनानीति मे मतिः ।
खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्यतः ॥

तथागतेन्द्रसिंहस्य.

२१३

आः किमर्थमिदं चेतः सतामम्भोधिदुर्भरम् ।
इति क्रुधेव दुर्वेधाः परदुःखैरपूरयत् ॥

गोविन्दराजस्य.

२१४

काचो मणिर्मणिः काचो येषां तेऽन्ये हि देहिनः ।
सन्ति ते सुधियो येषां काचः काचो मणिर्मणिः ॥

भट्टमल्लटस्य.

२१५

दोषानपि गुणीकर्तुं दोषीकर्तुं गुणानपि ।
शक्तो वादी न तत्तथ्यं दोषा दोषा गुणा गुणाः ॥

कस्यापि.

२१६

गुणराशिमहाभारनिर्भरापूरितान्तराः ।
सन्तो गौरवमायान्ति यदि तत्र किमद्भुतम् ॥

२१७

स्वात्मन्येव लयं यातु तादृशो गुणिनां गुणः ।
स्वयं प्रख्याप्यमानोऽपि यस्तृणाय न मन्यते ॥

एतौ राजकुलभट्टस्य.

२१८

गुणवज्जनसंपर्काद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण तृणं शिरसि धार्यते ॥

२१९

सुवृत्तस्यैकरूपस्य परप्रीत्यै धृतोन्नतेः ।
साधोः स्तनयुगस्येव पतनं कस्य तुष्टये ॥

२२०

उदेति सविता रक्तो रक्त एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥

२२१

पातेन कन्दुक इवोत्पतत्यार्यः पतन्नपि ।
तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥

२२२

पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण हि सुवृत्तानामस्थायिन्यो विपत्तयः ॥

२२३

च्युतोऽप्युद्गच्छति पुनः प्रज्ञावान्न तु मूढधीः ।
कन्दुकः पतनोत्थायी न तु कान्ताकुचद्वयी ॥

क्षेमेन्द्रस्य.

२२४

अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।
सदा लोकहिते युक्ता रत्नदीपा इवोत्तमाः ॥

२२५

निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
नहि संहरते ज्योत्स्नां चन्द्रश्चण्डालवेश्मनि ॥

२२६

नालोकः क्रियते सूर्ये भूः प्रतीपं न धार्यते ।
नहि प्रत्युपकाराणामपेक्षा सत्सु विद्यते ॥

२२७

अपकुर्वन्नपि प्रायः प्राप्नोति महतः शुभम् ।
दहन्तमप्यौर्वमग्निं संतर्पयति वारिधिः ॥

२२८

दृष्टापि दृश्यते दृश्यं श्रुत्वापि श्रूयते पुनः ।
सत्यं न साधुवृत्तस्य दृश्यते पुनरुक्तता ॥

कस्यापि.

२२९

सत्पक्षा ऋजवः शुद्धाः सफला गुणसेविनः ।
तुल्यैरपि गुणैश्चित्रं सन्तः सन्तः शराः शराः ॥

भट्टवासुदेवस्य.

२३०

लाभप्रणयिनो नीचा मानकामा मनस्विनः ।
मद्गुः सरसि मत्स्यार्थी हंसस्येष्टा प्रसन्नता ॥

क्षेमेन्द्रस्य.

२३१

परदुःखं समाकर्ण्य स्वभावसरलो जनः ।
उपकारासमर्थत्वात्प्राप्नोति हृदये व्यथाम् ॥

२३२

ते वन्द्यास्ते कृतिनः श्लाघ्या तेषां हि जन्मनोत्पत्तिः ।
यैरुज्झितात्मकार्यैः सुहृदामर्था हि साध्यन्ते ॥

शाकल्यस्य.

२३३

अशठमलोलमजिह्मं त्यागिनमनुरागिणं विशेषज्ञम् ।
यदि नाश्रयति नरं श्रीः श्रीरेव हि वञ्चिता तत्र ॥

श्रीहर्षदेवस्य.

२३४

आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म ।
स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥

दामोदरगुप्तस्य.

२३५

स्वल्पापि साधुसंपद्भोग्या महतां न पृथ्व्यपि खलश्रीः ।
सारसमेव पयस्तृषमपहरति न वारिधेर्जातु ॥

२३६

न भवति भवति च न चिरं भवति चिरं चेत्फले विसंवदति ।
मन्युः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥

२३७

दोषो गुणाय गुणिनां महदपि दोषाय दोषिणां सुकृतम् ।
तृणमिव दुग्धाय गवां दुग्धमिव विषाय सर्पाणाम् ॥

२३८

विषमगता अपि न बुधाः परिभवमिश्रां श्रियं हि वाञ्छन्ति ।
न पिबन्ति भौममम्भः सरजसमिति चातका एते ॥

२३९

योग्यतयैव विनाशं प्रायोऽनार्येषु यान्ति गुणवन्तः ।
स्फुटवचना एव शुकाः पञ्जरबन्धं निषेवन्ते ॥

२४०

सकृदपि दृष्ट्वा पुरुषं प्राज्ञास्तुलयन्ति सारफल्गुत्वम् ।
हस्ततुलयापि निपुणाः पलपरिमाणं विजानन्ति ॥

२४१

सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥

२४२

निर्गुणमप्यनुरक्तं प्रायो न समाश्रितं जहति सन्तः ।
सहवृद्धिक्षयभाजं वहति शशाङ्कः कलङ्कमपि ॥

२४३

अन्त्यावस्थोऽपि बुधः स्वगुणं न जहाति जातिशुद्धतया ।
न श्वेतभावमुज्झति शङ्खः शिखिभुक्तमुक्तोऽपि ॥

२४४

दोषमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्यन्ते ।
प्रीत्यैव शशिनि पतितं पश्यति लोकः कलङ्कमपि ॥

एता रविगुप्तस्य.

२४५

साप्तपदीनं सख्यं भवेत्प्रकृत्या विशुद्धचित्तानाम् ।
किमुतान्योन्यगुणकथाविस्रम्भनिबद्धभावानाम् ॥

हरिभट्टस्य.

२४६

स्पृहणीयाः कस्य न ते सुमतेः सरलाशया महात्मानः ।
त्रयमपि येषां सदृशं हृदयं वचनं तथाचारः ॥

वल्लभदेवस्य.

२४७

गुणिनः समीपवर्ती पूज्यो लोकस्य गुणविहीनोऽपि ।
विमलेक्षणप्रसङ्गादञ्जनमाप्नोति काणाक्षि ॥

अर्गटस्य.

२४८

सहसिद्धमिदं महतां धनेष्वनास्था गुणेषु कृपणत्वम् ।
परदुःखे कातरता महच्च धैर्यं स्वदुःखेषु ॥

प्रकाशवर्षस्य.

२४९

अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः ।
हेम्नः कठिनस्यापि द्रवणोपायोऽस्ति न तृणानाम् ॥

२५०

उपकृतिसाहसिकतया क्षतिमपि गणयन्ति नो गुणिनः ।
जनयन्ति हि प्रकाशं दीपशिखाः स्वाङ्गदाहेन ॥

२५१

रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् ।
असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥

२५२

उपकर्तुमप्रकाशं क्षन्तुं न्यूनेष्वयाचितं दातुम् ।
अभिसंधातुं च गुणैः शतेषु केचिद्विजानन्ति ॥

२५३

गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः ।
अलिरेति वनात्कमलं न दर्दुरस्तन्निवासोऽपि ॥

२५४

आदौ तु मन्दमन्दानि मध्ये समरसानि च ।
अन्ते स्नेहायमानानि संगतानि बुधैः सह ॥

२५५

इयमुन्नतसत्त्वशालिनां
महतां कापि कठोरचित्तता ।
उपकृत्य भवन्ति दूरतः
परतः प्रत्युपकारशङ्कया ॥

२५६

उपकारिणि वीतमत्सरे वा
सदयत्वं यदि तत्र कोऽतिरेकः ।
अहिते सहसापराद्धलब्धे
सघृणं यस्य मनः सतां स धुर्यः ॥

२५७

आदिमध्यनिधनेषु सौहृदं
सज्जने भवति नेतरे जने ।
छेदताडननिघर्षतापनै-
र्नान्यभावमुपयाति काञ्चनम् ॥

२५८

दीपाः स्थितं वस्तु विभावयन्ति
कुलप्रदीपास्तु भवन्ति केचित् ।
चिरव्यतीतानपि पूर्वजान्ये
प्रकाशयन्ति स्वगुणप्रकर्षात् ॥

भा° अमृतवर्धनस्य-

२५९

तुङ्गात्मनां तुङ्गतराः समर्था
मनोरुजं ध्वंसयितुं न नीचाः ।
धाराधरा एव धराधराणां
निदाघदावौघहरा न नद्यः ॥

२६०

गुणा गुणज्ञेषु गुणीभवन्ति
ते निर्गुणं प्राप्य भवन्ति दोषाः ।

सुस्वादुतोयप्रभवा हि नद्यः
समुद्रमासाद्य भवन्त्यपेयाः ॥

२६१

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वशः ।
समुच्छ्रितानेव तरून्प्रबाधते
महान्महत्स्वेव करोति विक्रियाम् ॥

२६२

चिराय सत्संगमशुद्धमानसो
न यात्यसत्संगतमात्मवान्नरः ।
मनोहरेन्दीवरखण्डगोचरो
न जातु भृङ्गः कुणपे निलीयते ॥

२६३

अपि विभवविहीनः प्रच्युतो वा स्वदेशा-
न्नहि खलजनसेवां प्रार्थयत्युन्नतात्मा ॥
तनु तृणमुपभुङ्क्ते न क्षुधार्तोऽपि सिंहः
पिबति रुधिरमुष्णं प्रायशः कुञ्जराणाम् ॥

एते केषामपि०

२६४

वित्ते त्यागः क्षमा शक्तौ दुःखे दैन्यविहीनता ।
निर्दम्भता सदाचारे स्वभावोऽयं महात्मनाम् ॥

२६५

सुखलवदशाहर्षक्लैव्ये खलः खलु खेलते
स्खलति भजते लेशक्लेशे विषादविषूचिकाम् ।
भवति न सतां दर्पोद्दामा न दैन्यमयी मति-
र्दुरभिभवता गम्भीराणां सुखेष्वसुखेषु च ॥

२६६

स्वाम्ये पेशलता गुणे प्रणयिता हर्षे निरुत्सेकता
मन्त्रे संवृतता श्रुते सुमतिता वित्तोदये त्यागिता ।

साधौ सादरता खले विमुखता पापे परं भीरुता
दुःखे क्लेशसहिष्णुता च महतां कल्याणमाकाङ्क्षति ॥
क्षेमेन्द्रस्य.

२६७

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरतिर्व्यसनं श्रुते
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥

२६८

इदं हि माहात्म्यविशेषसूचकं
वदन्ति चिह्नं महतां मनीषिणः ।
मनो यदेषां सुखदुःखसंभवे
प्रयाति नो हर्षविषादवश्यताम् ॥
एतौ मेण्ठकस्य.

२६९

सुभाषितैः प्रीतिरनुन्नतिः श्रिया
परार्थनिष्पत्तिपटीयसी क्रिया ।
गुणेष्वतृप्तिर्गुणवत्सु चादरो
निगूढमेतच्चरितं महात्मनाम् ॥
हरिभट्टस्य.

२७०

सत्यं गुणा गुणवतां विधिवैपरीत्या-
द्यत्नार्जिता अपि कलौ विफला भवन्ति
साफल्यमस्ति सुतरामिदमेव तेषां
यत्तापयन्ति हृदयानि पुनः खलानाम् ॥
पुण्यस्य.

२७१

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।

तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥

भगवत्तरारोग्यस्य.

२७२

पापं समाचरति वीतघृणो जघन्यः
प्राप्यापदं सघृण एव तु मध्यबुद्धिः ।
प्राणात्ययेऽपि न तु साधुजनः सुवृत्तं
वेलां समुद्र इव लङ्घयितुं समर्थः ॥

भदन्तशूरस्य.

२७३

शुद्धः स एव कुलजश्च स एव धीरः
श्लाघ्यो विपत्स्वपि न मुञ्चति यः स्वभावम् ।
तप्तं यथा दिनकरस्य मरीचिजालै-
र्देहं त्यजेदपि हिमं न तु शीतलत्वम् ॥

२७४

याच्ञापदं मरणदुःखमिवानुभाव्य
दत्तेन किं खलु भवत्यतिभूयसापि ।
कल्पद्रुमान्परिहसन्त इवेह सन्तः
संकल्पितैरतिददत्यकदर्थितं यत् ॥

प्रकाशवर्षस्य.

२७५

ते साधवो भुवनमण्डलमौलिभूता
ये साधुतां निरुपकारिषु दर्शयन्ति ।
आत्मप्रयोजनवशीकृतखिन्नदेहः
पूर्वोपकारिषु खलोऽपि हि सानुकम्पः ॥

रत्नाकरस्य.

२७६

नान्तर्विचिन्तयति किंचिदपि प्रतीप-
माकोपितोऽपि सुजनः पिशुनेन पापम् ।
अर्कद्विषोऽपि हि मुखे पतिताग्रभागा-
स्तारापतेरमृतमेव कराः किरन्ति ॥

२७७

आकोपितोऽपि कुलजो न वदत्यवाच्यं
निष्पीडितो मधुरमेव वमेत्किलेक्षुः ।
नीचो जनो गुणशतैरपि सेव्यमानो
हासेषु तद्वदति यत्कलहेषु वाच्यम् ॥

२७८

निदन्तु नीतिनिपुणा अथवा स्तुवन्तु
लक्ष्मीः परापततु गच्छतु वा यथेच्छम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रचलयन्ति पदं न धीराः ॥

एते केषामपि०

२७९

हेतोः कुतोऽप्यसदृशाः सुजना गरीयः
कार्यं निसर्गगुरवः स्फुटमारभन्ते ।
उत्थाय किं कलशतोऽपि न सिन्धुनाथ-
मुद्वीचिमालमपिबद्भगवानगस्त्यः ॥

रत्नाकरस्य.

२८०

प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं
ह्यसन्तो नाभ्यर्थ्याः सुहृदपि न याच्योऽकृशधनः ।
विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥

जयादित्यस्य०

२८१

प्रदानं सुच्छन्नं गृहमुपगते संभ्रमविधि-
रनुत्सेको लक्ष्म्याप्यनभिभवनीयाः परकथाः ।
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः
श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं कथयति ॥

२८२

कस्यादेशात्क्षपयति तमः सप्तसप्तिः प्रजानां
छायाहेतोः पथि विटपिनामञ्जलिः केन बद्धः ।

२८८

साधुरेव प्रवीणः स्यात्सद्गुणामृतचर्वणे ।
नवचूताङ्कुरास्वादकुशलः कोकिलः किल ॥

२८९

प्रायः सन्त्युपदेशार्हा धीमन्तो न जडाशयाः ।
तिलाः कुसुमसौगन्ध्यग्राहिणो न यवाः क्वचित् ॥

२९०

मनस्विहृदयं धत्ते रौक्ष्येणैव प्रसन्नताम् ।
भस्मना मकुरः प्रायः प्रसादं लभतेतराम् ॥

२९१

उत्तमः क्लेशविक्षोभं क्षमः सोढुं नहीतरः ।
मणिरेव महाशाणघर्षणं न तु मृत्कणः ॥

२९२

जडे प्रभवति प्रायो दुःखं बिभ्रति साधवः ।
सितांशावुदिते पद्माः संकोचातङ्कधारिणः ॥

२९३

गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः ।
मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ॥

२९४

स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
न त्यजन्ति रुतं मञ्जु काकसंपर्कतः पिकाः ॥

२९५

संपत्तौ कोमलं चित्तं साधारापदि कर्कशम् ।
सुकुमारं मधौ पत्त्रं तरोः स्यात्कठिनं शुचौ ॥

२९६

स्वभावं न जहात्यन्तः साधुरापद्गतोऽपि सन् ।
कर्पूरः पावकप्लुष्टः सौरभं भजतेतराम् ॥

२९७

अप्यापत्समयः साधोः प्रयाति श्लाघनीयताम् ।
विधोर्विधुंतुदास्कन्दविपत्कालोऽपि सुन्दरः ॥

२९८

दृष्टदुर्जनदौरात्म्यः सज्जने रज्यते जनः ।
आरुह्य पर्वतं पान्थः सानौ निर्वृतिमेत्यलम् ॥

२९९

क्षणक्षयिणि सापाये भोगे रज्यन्ति नोत्तमाः ।
संत्यज्याम्भोजकिंजल्कं हंसाः प्राश्नन्ति शैवलम् ॥

३००

अधमं बाधते भूयो दुःखावेगो न तूत्तमम् ।
पाणिपादं रुजत्याशु शीतस्पर्शो न चक्षुषी ॥

३०१

गुणवान्सुचिरस्थायी दैवेनापि न सह्यते ।
तिष्ठत्येकां निशां चन्द्रः श्रीमान्संपूर्णमण्डलः ॥

३०२

सर्वत्र गुणवान्देशे चकास्ति प्रथतेतराम् ।
मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते ॥

३०३

उत्तमं सुचिरं नैव विपदोऽभिभवन्त्यलम् ।
राहुग्रसनसंभूता क्षणं विच्छायता विधोः ॥

३०४

संतुष्यत्युत्तमः स्तुत्या धनेन महताधमः ।
प्रसीदन्ति जपैर्देवा बलिभिर्भूतविग्रहाः ॥

३०५

न कदाचित्सतां चेतः प्रसरत्यघकर्मसु ।
जलेषु द्रुतमप्यन्तः सर्पिराश्यानतां व्रजेत् ॥

३०६

नराः संस्कारार्हा जगति किल केचित्सुकृतिनः
समानायां जातावपि वयसि सत्यामपि धियि ।
अयं दृष्टान्तोऽत्र स्फुटपरिचयादभ्यसनतः
शुकः श्लोकान्वक्तुं प्रभवति न काकः क्वचिदपि ॥

३०७

धनमपि परदत्तं दुःखमौचित्यभाजां
भवति हृदि तदेवानन्दकारीतरेषाम् ।
मलयजरसबिन्दुर्बाधते नेत्रमन्त-
र्जनयति च स एवाह्लादमन्यत्र गात्रे ॥

एते कुसुमदेवस्य.

३०८

सद्वंशजस्य परितापनुदः सुवृत्त-
शुद्धात्मनः सकललोकविभूषणस्य ।
छिद्रं प्रजातमपि साधुजनस्य दैवा-
न्मुक्तामणेरिव गुणाय भवत्यवश्यम् ॥

कस्यापि.

३०९

गेहं दुर्गतबन्धुभिर्गुरुगृहं छात्रैरहंकारिभि-
र्हट्टं पत्तनवञ्चकैर्मुनिजनैः शापोन्मुखैराश्रमान् ।
सिंहाद्यैश्च वनं खलैर्नृपसभां चौरैर्दिगन्तानपि
संकीर्णान्यवलोक्य सत्यसरलः साधुः क्व विश्राम्यति ॥

३१०

साभिमानमसंभाव्यमौचित्यच्युतमप्रियम् ।
दुःखावमानदीनं वा न वदन्ति गुणोन्नताः ॥

क्षेमेन्द्रस्य.

३११

भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्द्योतः ॥

३१२

गुणिनामपि निजरूपप्रतिपत्तिः परत एव संभवति ।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥

एतौ सुबन्धोः.

३१३

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम्।
को विदेशः सविद्यानां कः परः प्रियवादिनाम्॥

कस्यापि.

३१४

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च।
पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च॥

३१५

उत्साहसंपन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम्।
शूरं कृतज्ञं दृढसौहृदं च
लक्ष्मीः स्वयं वाञ्छति वासहेतोः॥

३१६

कदर्थितस्यापि महाशयस्य
न शक्यते सर्गगुणः प्रमार्ष्टुम्।
अधोमुखस्यापि कृतस्य वह्ने-
र्नाधः शिखा यान्ति कदाचिदेव॥

एते केषामपि.

३१७

न्यायः खलैः परिहृतश्चलितश्च धर्मः
कालः कलिः कलुष एव परं प्रवृत्तः।
प्रायेण दुर्जनजनः प्रभविष्णुरेव
निश्चक्रिकः परिभवास्पदमेव साधुः॥

३१८

व्रते विवादं विमतिं विवेके
सत्येऽतिशङ्कां विनये विकारम्।
गुणेऽवमानं कुशले निषेधं
धर्मे विरोधं न करोति साधुः॥

एतौ क्षेमेन्द्रस्य.

३१९

वन्द्यः स पुंसां त्रिदशाभिनन्द्यः
कारुण्यपुण्योपचयक्रियाभिः ।
संसारसारत्वमुपैति यस्य
परोपकाराभरणं शरीरम् ॥

कस्यापि.

३२०

अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो
विपक्षादम्भोजादुपगतवतो वा मधुलिहः ।
अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचय-
प्रबन्धः साधूनामयमनभिसंधानमधुरः ॥

मुरारेः.

३२१

यैर्वातूलो भवति पुरतः कथ्यमानैर्जनानां
कामप्यन्तर्विदधति रुजं येऽप्यनुद्गीर्यमाणाः ।
तेऽभिप्रायाः किमपि हृदये कण्ठलग्नाः स्फुरन्तो
यस्याख्येयास्तमिह सुहृदं पुण्यवन्तो लभन्ते ॥

भर्तृसारस्वतस्य.

३२२

उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कथयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥

*राजशेखरस्य.

३२३

सागसेऽपि न कुप्यन्ति कृपया चोपकुर्वते ।
बोधं स्वस्यैव नेच्छन्ति ते विश्वोद्धरणक्षमाः ॥

३२४

पात्रं पवित्रयति नैव गुणान्क्षिणोति
स्नेहं न संहरति नापि मलं प्रसूते ।

दोषावसानरुचिरश्चलतां न धत्ते
सत्संगमः सुकृतसद्मनि कोऽपि दीपः ॥

क्षेमेन्द्रस्य.

३२५

अणुरपि मणिः प्राणत्राणक्षमो विषभक्षिणां
शिशुरपि रुषा सिंहीसूनुः समाह्वयते गजान् ।
तनुरपि तरुस्कन्धोद्भूतो दहत्यनलो वनं
प्रकृतिमहतां जात्यं तेजो न मूर्तिमपेक्षते ॥

---

## अथ दुर्जनपद्धतिः

३२६

नमः खलेभ्यः क इवाथवा न ता-
नलं नमस्येदिह यो जिजीविषुः ।
विनैव ये दोषमृषिप्रकाण्डव-
न्नयन्ति शापेन रसातलं नरान् ॥

प्रकाशवर्षस्य.

३२७

विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी सकुलद्वेषी सदा पिशुनः ॥

३२८

अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥

३२९

विध्वस्तपरगुणानां भवति खलानामतीव मलिनत्वम् ।
अन्तरितशशिरुचामपि सलिलमुचां मलिनिमाभ्यधिकः ॥

३३०

हस्त इव भूतिमलिनो लङ्घयति यथा यथा खलः सुजनम् ।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥

एते सुबन्धोः.

३३१

जीवनग्रहणे नम्रा गृहीत्वा पुनरुत्थिताः ।
किं कनिष्ठा उत ज्येष्ठा घटीयन्त्रस्य दुर्जनाः ॥

३३२

सदा खण्डनयोग्याय तुषपूर्णाशयाय च ।
नमोऽस्तु बहुबीजाय खलायोलूखलाय च ॥

३३३

जिह्वादूषितसत्पात्रः पिण्डार्थी कलहोत्कटः ।
तुल्यतामशुचिर्नित्यं बिभर्ति पिशुनः शुनः ॥

३३४

अहो बत खलः पुण्यैर्मूर्खोऽप्यश्रुतपण्डितः ।
स्वगुणोदीरणे शेषः परनिन्दासु वाक्पतिः ॥

३३५

खलः सुजनपैशुन्ये सर्वतोऽक्षिशिरोमुखः ।
सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठति ॥

३३६

सत्साधुवादे मूर्खस्य मात्सर्यगलरोगिणः ।
जिह्वा कङ्कमुखेनापि कृष्टा नैव प्रवर्तते ॥

३३७

मायामयः प्रकृत्यैव रागद्वेषमदाकुलः ।
महतामपि मोहाय संसार इव दुर्जनः ॥

३३८

खचित्रमपि मायावी रचयत्येव लीलया ।
लघुश्च महतां मध्ये तस्मात्खल इति स्मृतः ॥

३३९

खलेन धनमत्तेन नीचेन प्रभविष्णुना ।
पिशुनेन पदस्थेन हा प्रजे क्व गमिष्यसि ॥

एते क्षेमेन्द्रस्य.

३४०

कृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमबुधेषु।
वचनशतमवचनकरे बुद्धिशतमचेतने नष्टम् ॥

३४१

नष्टमपात्रे दानं नष्टं हितमफलबुद्ध्यवज्ञाने।
नष्टो गुणोऽगुणज्ञे नष्टं दाक्षिण्यमकृतज्ञे ॥

३४२

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो
गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु सक्तोत्तरः।
अन्तर्गूढविषो बहिर्मधुमयश्चातीव मायामयः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥

एते केषामपि.

३४३

ये श्रमं हर्तुमीहन्ते महतां चिरसंभृतम्।
वन्द्यास्तेऽसरलात्मानो दुर्जनाः सज्जना इव ॥

आनन्दवर्धनस्य.

३४४

अहो कुटिलबुद्धीनां दुर्ग्राह्यमसतां मनः।
अन्यद्वचासि कण्ठेऽन्यदन्यदोष्ठपुटे स्थितम् ॥

कस्यापि.

३४५

खलेषु सत्सु निर्याता वयमर्जयितुं गुणान्।
इयं सा तस्करग्रामे रत्नक्रयविडम्बना ॥

३४६

वर्धेते स्पर्धयेवोभौ संपदा शतशाखया।
अङ्कुरोऽवस्करोद्भूतः पुरुषश्चाकुलोद्भवः ॥

एतौ भट्टवल्लभस्य.

३४७

दह्यमानाः सुतीक्ष्णेन नीचाः परयशोऽग्निना।
अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रचक्रिरे ॥

३४८

यत्स्मृत्वैव परां यान्ति सन्तः संतापसंततिम् ।
तदसन्तो हसन्तोऽपि हेलयैव हि कुर्वते ॥

३४९

गुणदोषावशास्त्रज्ञः कथं विभजते जनः ।
किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु ॥

३५०

प्रायः प्रकाशतां याति मलिनः साधुबाधया ।
नाग्रसिष्यत चेदर्कं कोऽज्ञास्यत्सिंहिकासुतम् ॥

३५१

प्रायः परोपतापाय दुर्जनः सततोद्यतः ।
अवश्यकरणीयत्वान्न कारणमपेक्षते ॥

३५२

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥

३५३

अहो प्रकृतिसादृश्यं श्लेष्मणो दुर्जनस्य च ।
मधुरैः कोपमायाति कटुकैरुपशाम्यति ॥

३५४

यथा गजपतिः श्रान्तश्छायार्थी वृक्षमाश्रितः ।
विश्रम्य तं द्रुमं हन्ति तथा नीचः स्वमाश्रयम् ॥

एते केषामपि.

३५५

दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पो भवेत्किं न भयंकरः ॥

वाल्मीकेः.

३५६

चारुता परदारार्थं धनं लोकोपतक्षये ।
प्रभुत्वं साधुनाशाय खले खलतरा गुणाः ॥

३५७

परोपघातविज्ञानमात्रलाभोपजीविनाम् ।
दाशानामिव धूर्तानां जालाय गुणसंग्रहः ॥

३५८

दुर्जनेनोच्यमानानि वचांसि मधुराण्यपि ।
अकालकुसुमानीव त्रासं संजनयन्ति मे ॥

एते केषामपि.

३५९

न लज्जते सज्जनवर्जनीयया
भुजंगवक्रक्रिययापि दुर्जनः ।
धियं कुमायासमयाभिचारिणीं
विदग्धतामेव हि मन्यते खलः ॥

क्षेमेन्द्रस्य.

३६०

वृत्तिं स्वां बहु मन्यते हृदि शुचं धत्तेऽनुकम्पोक्तिभि-
र्व्यक्तं निन्दति योग्यतां मितमतिः कुर्वन्स्तुतीरात्मनः ।
गर्ह्योपायनिषेवणं कथयति स्थास्नुं वदन्व्यापदं
श्रुत्वा दुःखमरुंतुदां वितनुते पीडां जनः प्राकृतः ॥

३६१

पाकश्चेन्न शुभस्य मेऽद्य तदसौ प्रागेव नादात्किमु
स्वार्थश्चेन्न मयास्य किं न भजते दीनान्स्वबन्धूनयम् ।
मत्तो रन्ध्रदृशोऽस्य भीर्यदि न तल्लुब्धः किमेष त्यजे-
दित्यन्तः पुरुषोऽधमः कलयति प्रायः कृतोपक्रियः ॥

एतौ कल्हणस्य.

३६२

साश्चर्यं युधि शौर्यमप्रतिहतं तत्खण्डिताखण्डलं
याच्ञोत्तानकरः कृतः स भगवान्दानेन लक्ष्मीपतिः ।
ऐश्वर्यं स्वकरात्तसप्तभुवनं लब्धाब्धिपारं यशः
सर्वं दुर्जनसंगमेन सहसा स्पष्टं विनष्टं बलेः ॥

३६३

शमयति यशः क्लेशं सूते दिशत्यशिवां गतिं
जनयति जनोद्वेगायासं नयत्युपहास्यताम् ।
भ्रमयति मतिं मानं हन्ति क्षिणोति च जीवितं
क्षिपति सकलं कल्याणानां कुलं खलसंगमः ॥

एतौ क्षेमेन्द्रस्य.

३६४

अविनयभुवामज्ञानानां शमाय भवन्नपि
प्रकृतिकुटिलाद्विद्याभ्यासः खलत्वविवृद्धये ।
फणिभयभृतामस्तु च्छेदक्षमस्तमसामसौ
विषधरफणारत्नालोको भयं तु भृशायते ॥

मुरारेः.

३६५

करोति पूज्यमानोऽपि लोकव्यसनदीक्षितः ।
दर्शने दर्शने त्रासं गृहाहिरिव दुर्जनः ॥

३६६

सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव ।
नास्तिकोऽपि ह्युद्विजते जनः किं पुनरास्तिकः ॥

३६७

येषां प्राणिवधः क्रीडा नर्म मर्मच्छिदो गिरः ।
कार्यं परोपतापित्वं ते मृत्योरपि मृत्यवः ॥

३६८

अहो बत महत्कष्टं विपरीतमिदं जगत् ।
येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥

३६९

न तथेच्छन्त्यकल्याणाः परेषां वेदितुं गुणान् ।
यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥

३७०

वर्जनीयो मतिमतां दुर्जनः सख्यवैरयोः ।
श्वा भवत्युपघाताय लिहन्नपि दशन्नपि ॥

३७१

अतो हास्यतरं लोके किंचिदन्यन्न विद्यते ।
यत्र दुर्जन इत्याह दुर्जनः सज्जनं जनम् ॥

३७२

अपकारमसंप्राप्य तुष्येत्साधुरसाधुतः ।
नैष लाभो भुजंगेन वेष्टितो यन्न दश्यते ॥

३७३

लुब्धः स्तब्धोऽनृजुर्मूर्खः प्रभुरेकान्तदारुणः ।
बहूनेष खलः साधून्मारयित्वा मरिष्यति ॥

एते श्रीभगवद्व्यासमुनेः.

३७४

का खलेन सह स्पर्धा सज्जनस्याभिमानिनः ।
भाषणं भीषणं साधुदूषणं यस्य भूषणम् ॥

३७५

मुखेनैकेन विध्यन्ति पादमेकस्य कण्टकाः ।
दूरान्मुखसहस्रेण सर्वप्राणहराः खलाः ॥

३७६

निर्माय खलजिह्वाग्रं सर्वप्राणहरं नृणाम् ।
चकार किं वृथा शस्त्रविषवह्नीन्प्रजापतिः ॥

३७७

यथा परोपकारेषु नित्यं जागर्ति सज्जनः ।
तथा परापकारेषु जागर्ति सततं खलः ॥

एते भट्टपृथ्वीधरस्य.

३७८

बिभेति पिशुनान्नीचः प्रकाशनपटीयसः ।
न पुनर्मूढहृदयो निन्दनीयात्स्वकर्मणः ॥

३७९

वृथाज्वलितकोपाग्नेः परुषाक्षरवादिनः ।
दुर्जनस्यौषधं नास्ति किंचिदन्यदनुत्तरात् ॥

३८०

खलानां कण्टकानां च द्विधैवास्ति प्रतिक्रिया।
उपानन्मुखभङ्गो वा दूरतो वापि वर्जनम्॥

३८१

जीवन्नपि न तत्कर्तुं शक्नोति सुजनस्तथा।
दुर्जनो यन्मृतः कुर्यात्परेभ्योऽहितमुत्तरम्॥

३८२

यद्यदिष्टतमं तत्तद्देयं गुणवते किल।
अत एव खलो दोषान्साधुभ्यः संप्रयच्छति॥

३८३

रोगोऽण्डजोऽङ्कुरोऽग्निर्विषमश्वतरो घुणाः क्रिमयः।
प्रकृतिकृतघ्नश्च नरः स्वाश्रयमविनाश्य नैधन्ते॥

३८४

न विना परवादेन रमते दुर्जनो जनः।
श्वा हि सर्वरसान्भुक्त्वा विनामेध्यं न तृप्यति॥

३८५

वरमत्यन्तविफलः सुखसेव्यो हि सज्जनः।
न तु प्राणहरस्तीक्ष्णः शरवत्सफलः खलः॥

३८६

स्वभावेनैव निशितः कृतपक्षग्रहोऽपि सन्।
शरवद्गुणनिर्मुक्तः खलः कस्य न भेदकः॥

३८७

दुर्जनः सुजनीकर्तुं यत्नेनापि न शक्यते।
संस्कारेणापि लशुनं कः सुगन्धीकरिष्यति॥

३८८

नीचः समुत्थितोऽवश्यमनवाप्य पराश्रयम्।
छिद्रेण रतिमाप्नोति दृष्टान्तोऽत्र कटीभवः॥

३८९

परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः ।
सद्वृत्तवृत्तिहरणे बाहुसहस्रार्जुनो नीचः ॥

३९०

दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥

३९१

आदौ लज्जयति कृतं मध्ये परिभवति रिक्तमवसाने ।
खलसंगतस्य कथयत यदि सुस्थितमस्ति किंचिदपि ॥

३९२

परमर्मदिव्यदर्शिषु जात्यैवोचितनिगूढवैरेषु ।
कः खलु खलेषु शङ्कां श्लथयिष्यति दम्भनिरतेषु ॥

केषामपि.

३९३

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥

भर्तृहरेः.

३९४

अस्थानाभिनिवेशी प्रायो जड एव भवति नो विद्वान् ।
बालादन्यः कोऽम्भसि जिघृक्षतीन्दोः स्फुरद्बिम्बम् ॥

३९५

लब्धोदयोऽपि हि खलः प्रथमं स्वजनं नयति परितापम् ।
उद्गच्छन्दवदहनो जन्मभुवं दारु निर्दहति ॥

३९६

अल्पश्रुतलव एव प्रायः प्रकटयति वाग्विभवमुच्चैः ।
सर्वत्र कुनट एव हि नाटकमधिकं विडम्बयति ॥

३९७

प्रखला एव गुणवतामाक्रम्य धुरं पुरः प्रकर्षन्ति ।
तृणकाष्ठमेव जलधेरुपरि प्लवते न रत्नानि ॥

३९८

महतां यदेव मूर्धसु तदेव नीचास्तृणाय मन्यन्ते।
लिङ्गं प्रणमन्ति बुधाः काकः पुनरासनीकुरुते॥

३९९

सह वसतामप्यसतां जलरुहजलवद्भवत्यसंश्लेषः।
दूरेऽपि सतां वसतां प्रीतिः कुमुदेन्दुवद्भवति॥

४००

परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान्व्यथते।
पवनाशिनोऽपि भुजगाः परोपतापं न मुञ्चन्ति॥

४०१

साधयति यत्प्रयोजनमज्ञस्तत्तस्य काकतालीयम्।
दैवात्कथमप्यक्षरमुत्किरति घुणोऽपि काष्ठेषु॥

४०२

प्रायः खलप्रकृतयो नापरिभूता हिताय कल्पन्ते।
पुष्यत्यधिकमशोको गणिकाचरणप्रहारेण॥

४०३

परमर्मघट्टनादिषु खलस्य यत्कौशलं न तत्कृत्ये।
यत्सामर्थ्यमुपहतौ विषस्य तन्नोपकाराय॥

४०४

अतिसत्कृता अपि शठाः सहभुवमुज्झन्ति जातु न प्रकृतिम्।
शिरसा महेश्वरेणापि ननु धृतो वक्र एव शशी॥

४०५

वायुरिव खलजनोऽयं प्रायः पररूपमेति संपर्कात्।
सन्तस्तु रविकरा इव सदसद्योगेऽप्यसंश्लिष्टाः॥

४०६

प्रेरयति परमनार्यः शक्तिदरिद्रोऽपि जगदभिद्रोहे।
तेजयति खड्गधारां स्वयमसमर्था शिला छेत्तुम्॥

४०७

दूरेऽपि परस्यागासि पटुर्जनो नात्मनः समीपेऽपि ।
स्वं व्रणमक्षि न पश्यति शशिनि कलङ्कं निरूपयति ॥

४०८

साधुष्वेवातितरामरुंतुदाः स्वां विवृण्वते वृत्तिम् ।
व्याधा निघ्नन्ति मृगान्मृतमपि न तु सिंहमाददते ॥

४०९

अविकारिणमपि सज्जनमनिशमनार्यः प्रबाधतेऽत्यर्थम् ।
कमलिन्या किमिह कृतं हिमस्य यत्तां सदा दहति ॥

४१०

स्वगुणानिव परदोषान्वक्तुं न सतोऽपि शक्नुवन्ति बुधाः ।
स्वगुणानिव परदोषानसतोऽपि खलास्तु कथयन्ति ॥

४११

कृत्वापि येन लज्जामुपैति साधुः परोदितेनापि ।
तदकृत्वैव खलजनः स्वयमुद्गिरतीति धिग्लघुताम् ॥

४१२

आप्त्वाप्यात्मविनाशं गणयति न खलः परव्यसनकष्टम् ।
प्रायः सहस्रनाशे समरमुखे नृत्यति कबन्धः ॥

४१३

प्रकृतिखलत्वादसतां दोष इव गुणोऽपि बाधते लोकान् ।
विषकुसुमानां गन्धः सुरभिरपि मनांसि मोहयति ॥

४१४

लब्धोच्छ्रायो नीचः प्रथमतरं स्वामिनं पराभवति ।
पथि धूलिरजो ह्यादावुत्थापकमेव संवृणुते ॥

४१५

मृगमदकर्पूरागुरुचन्दनगन्धाधिवासितो लशुनः ।
न त्यजति गन्धमशुभं प्रकृतिमिव सहोत्थितां नीचः ॥

४१६

उपकृतमनेन सुहृदयमिति दुर्जनेष्वस्ति न क्वचिदपेक्षा ।
होत्रा सह स्वमाश्रयमुद्वृत्तोऽग्निर्दहत्येव ॥

एता रविगुप्तस्य.

४१७

उपकृतिरेव खलानां दोषस्य गरीयसो भवति हेतुः ।
अनुकूलाचरणेन हि कुप्यन्ति व्याधयोऽत्यर्थम् ॥

४१८

न परं फलति हि किंचित्खल एवानर्थमावहति यावत् ।
मारयति सपदि विषतरुराश्रयमाणं श्रमापनुदे ॥

४१९

स्वार्थनिरपेक्ष एव हि परोपघातोऽसतां व्यसनमेव ।
अशनायोदन्या वा विरमति फणिनो न दन्दशतः ॥

एताः प्रकाशवर्षस्य.

४२०

एकीभावं गतयोर्जलपयसोर्मित्रचेतसोश्चैव ।
व्यतिरेककृतौ शक्तिर्हंसानां दुर्जनानां च ॥

दामोदरगुप्तस्य.

४२१

शल्यमपि स्खलदन्तः सोढुं शक्येत हालहलदिग्धम् ।
धीरैर्न पुनरकारणकुपितखलालीकदुर्वचनम् ॥

भट्टरुद्रटस्य.

४२२

मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥

भर्तृहरेः.

४२३

प्रारम्भतोऽतिविपुलं भृशकृशमन्ते विभेदकृन्मलिनम् ।
महिषविषाणमिवानृजु परुषं भयदं खलप्रेम ॥

४२४

पात्रमपात्रीकुरुते दहति गुणान्स्नेहमाशु नाशयति
अमले मलं प्रयच्छति दीपज्वालेव खलमैत्री ॥

४२५

समर्पिताः कस्य न तेन दोषा
हठाद्गुणा वा न हृताः खलेन ।
तथापि दोषैर्न वियुज्यतेऽसौ
स्पृष्टोऽपि नैकेन गुणेन चित्रम् ॥

श्रीजयवर्धनस्य.

४२६

आराध्यमानो बहुभिः प्रकारै-
र्नाराध्यते नाम किमत्र चित्रम् ।
अयं त्वपूर्वः प्रतिभाविशेषो
यत्सेव्यमानो रिपुतामुपैति ॥

४२७

विद्वानुपालम्भमवाप्य दोषा-
न्निवर्ततेऽसौ परितप्यते च ।
ज्ञातस्तु दोषो मम सर्वथेति
पापो जनः पापतरं करोति ॥

भौण्डस्य.

४२८

एवमेव नहि जीव्यते खला-
त्तत्र का नृपतिवल्लभे कथा ।
पूर्वमेव हि सुदुःसहोऽनलः
किं पुनः प्रबलवायुनेरितः ॥

प्रकाशवर्षस्य.

४२९

अमरैरमृतं न पीतमब्धे-
र्न च हालाहलमुल्बणं हरेण ।

विधिना निहितं खलस्य वाचि
द्वयमेतद्बहिरेकमन्तरन्यत् ॥

भा० अमृतदत्तस्य.

४३०

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति ।
अकारणद्वेषि मनो हि यस्य वै
कथं परस्तं परितोषयिष्यति ॥

कस्यापि.

४३१

इतरदेव बहिर्मुखमुच्यते
हृदि तु यत्स्फुरतीतरदेव तत् ।
चरितमेतदधीरवितारकं
धुरि पयःप्रतिबिम्बमिवासताम् ॥

४३२

क्व पिशुनस्य गतिः प्रतिहन्यते ।
दशति दृष्टमपि श्रुतमप्यसौ ।
अतिसुदुष्करमव्यतिरिक्तदृ-
क्छ्रुतिभिरप्यथ दृष्टिविषैरिदम् ॥

एतौ भट्टकल्लटस्य.

४३३

गजतुरगशतैः प्रयान्तु मूर्खा
धनरहिता विबुधाः प्रयान्तु पद्भ्याम् ।
गिरिशिखरगतापि काकपाली
पुलिनगतैर्न समेति राजहंसैः ॥

४३४

ह्रेपयति प्रियवचनैरादरमुपदर्शयन्खलीकुरुते ।
उत्कर्षयंश्च लघयति मूर्खसुहृत्सर्वथा वर्ज्यः ॥

४३५
प्रकटमपि न संवृणोति दोषं
गुणलवलम्पट एष साधुवर्गः ।
अतिपरुषरुषं विनापि दोषैः
पिशुनशुनां रुषतां प्रयाति कालः ॥
हरगुप्तस्य.

४३६
यदा विगृह्णाति तदा हतं यशः
करोति मैत्रीमथ दूषिता गुणाः ।
स्थितिं समीक्ष्योभयथा परीक्षकः
करोत्यवज्ञोपहतं पृथग्जनम् ॥
भारवेः.

४३७
इष्टो वा सुकृतशतोपलालितो वा
श्लिष्टो वा व्यसनशताभिरक्षितो वा ।
दौःशील्याज्जनयति नैव जात्वसाधु-
र्विस्रम्भं भुजग इवाङ्कमध्यसुप्तः ॥
कस्यापि.

४३८
रूक्षं विरौति परिकुप्यति निर्निमित्तं
स्पर्शेन दूषयति वारयति प्रवेशम् ।
लज्जाकरं दशति नैव च तृप्यतीति
कौलेयकस्य च खलस्य च को विशेषः ॥
श्रीशिवस्वामिनः.

४३९
पादाहतोऽथ दृढदण्डविघट्टितो वा
यं दंष्ट्रया दशति तं किल हन्ति सर्पः ।
कोऽप्यन्य एव पिशुनोऽद्य भुजंगधर्मा
कर्णे परं स्पृशति हन्त्यपरं समूलम् ॥
कस्यापि.

४४०

युक्तं यया किल निरन्तरलब्धवृत्ते-
रस्याभिमानतमसः प्रसरं निरोद्धुम् ।
विद्वत्तया जगति तामवलम्ब्य केचि-
त्तन्वन्त्यहंकृतिमहो शतशाखमान्ध्यम् ॥

मनोरथस्य.

४४१

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥

भट्टमल्लटस्य.

४४२

प्रायः स्वभावमलिनो महतां समीपे
तिष्ठन्खलः प्रकुरुतेऽर्थिजनोपघातम् ।
शीतार्दितैः सकललोकसुखावहोऽपि
धूमे स्थिते नहि सुखेन निषेव्यतेऽग्निः ॥

४४३

धूमः पयोधरपदं कथमप्यवाप्य
वर्षाम्बुभिः शमयति ज्वलनस्य तेजः ।
दैवादवाप्य कलुषप्रकृतिर्महत्त्वं
प्रायः स्वबन्धुजनमेव तिरस्करोति ॥

४४४

उल्लासिताखिलखलस्य विशृङ्खलस्य
प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः ।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
नीचस्य गोचरगतैः सुखमास्यते कैः ॥

केषांचित्.

४४५

नाश्चर्यमेतदधुना हतदैवयोगा-
दुच्चैःस्थितिर्यदधमो न महानुभावः ।
रथ्याकलङ्कशतसंकरसंकुलोऽपि
पृष्ठे भवत्यवकरो न पुनर्निधानम् ॥

भट्टवासुदेवस्य.

४४६

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रान्तरा-
त्समुद्रमपि संतरेत्प्रचलदूर्मिमालाकुलम् ।
भुजंगमपि कोपितं शिरसि पुष्पवद्धारये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥

४४७

लभेत सिकतासु तैलमपिः यत्नतः पीडय-
न्पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटञ्छशविषाणमासादये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥

४४८

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतः
कृतान्धमुखमण्डना यदबुधो जनः सेवितः ॥

एते भर्तृहरेः.

४४९

वृथा दुग्धोऽनड्वान्स्तनभरनता गौरिति चिरं
परिष्वक्तः षण्ढो युवतिरिति लावण्यसहिता ।
कृता वैडूर्याशा विकचकिरणे काचशकले
मया मूढेन त्वां कृपणमगुणज्ञं प्रणमता ॥

४५०

स्वपक्षच्छेदं वा समुचितफलभ्रंशमथवा
स्वमूर्तेर्भङ्गं वा पतनमशुचौ नाशमथवा ।
शरः प्राप्नोत्येतान्हृदयपथसंस्थोऽपि धनुष
ऋजोर्वक्राश्लेषाद्भवति खलु सुव्यक्तमशुभम् ॥

४५१

गुणानां सा शक्तिर्विपदमनुबध्नन्ति यदमी
प्रसन्नस्तद्वेधा मम यदि न तैर्योगमकरोत् ।
विषण्णं दौर्गत्यादिति गुणिनमालोक्य विगुणः
करोति स्वे गेहे ध्रुवमतिसमृद्ध्योत्सवमसौ ॥

केषामपि.

४५२

अवेक्ष्य स्वात्मानं विगुणमपरानिच्छति तथा
फलत्येतन्नो चेद्विलपति न सन्तीह गुणिनः ।
निमार्ष्टुं शत्रुं वा परिभवितुमुद्यच्छति ततो-
प्यहो नीचे रम्या सगुणविजिगीषा विधिकृता ॥

वल्लभदेवस्य.

४५३

यदि परगुणा न क्षम्यन्ते यतस्व तदर्जने
नहि परयशो निन्दाव्याजैरलं परिमार्जितुम् ।
विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो
दिनकरकरान्पाणिच्छत्रैर्नुदञ्छ्रममेष्यसि ॥

महेन्द्रस्य.

४५४

प्रकृष्टे संपर्के मणिभुजगयोर्जन्मजनिते
मणिर्नाहेर्दोषान्भजति न च सर्पो मणिगुणान् ।
असाधुः साधुर्वा भवति ननु जात्यैव पुरुषो
न सङ्गाद्दौर्जन्यं न च सुजनता कस्यचिदपि ॥

४५५

न विषममृतीकर्तुं शक्यं प्रयत्नशतैरपि
त्यजति कटुतां न स्वां निम्बः स्थितोऽपि पयोह्रदे ।
गुणपरिचितामार्यां वाणीं न जल्पति दुर्जन-
श्चिरमपि बलाध्माते लोहे कुतः कनकाकृतिः ॥

४५६

वरमहिमुखे क्रोधाविष्टे करौ विनिवेशितौ
विषमपि वरं पीत्वा सुप्तं कृतान्तनिवेशने ।
गिरिवरतटान्मुक्तश्चात्मा वरं शतधा कृतो
न तु खलजनावासैरर्थैः कृतं हितमात्मनः ॥

४५७

वर्णस्थं गुरुलाघवं न गणयत्याशङ्कते न क्वचि-
द्रूपं नैव परीक्षते न पुरुषं वृत्तेषु वार्ता कुतः ।
कष्टं नायशसो बिभेति महतो नैवापशब्दान्तरा-
न्मृत्युर्मूर्खकविः खलः कुनृपतिश्चौरश्च तुल्यक्रियाः ॥

४५८

सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिने-
र्मीमांसाकृतमुन्ममाथ तरसा हस्ती मुनिं जैमिनिम् ।
छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गल-
मज्ञानाहतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥

एते केषामपि.

४५९

वन्द्यान्निन्दति दुःखितानुपहसत्याबाधते बान्धवा-
ञ्छूरान्द्वेष्टि धनच्युतान्परिभवत्याज्ञापयत्याश्रितान् ।
गुह्यानि प्रकटीकरोति घटयन्यत्नेन वैराशयं
ब्रूते शीघ्रमवाच्यमुज्झति गुणान्गृह्णाति दोषान्खलः ॥

प्रकाशवर्षस्य.

४६०

हसति लसति हर्षात्तीव्रदुःखे परेषां
स्खलति गलति मोहादात्मनः क्लेशलेशे ।
नदति वदति निन्द्यं मानिनां किं च नीचः
परुषवचनमल्पं श्रावितो हन्तुमेति ॥

व्यासदासस्य.

४६१

यदि सत्सङ्गनिरतो भविष्यसि भविष्यसि ।
अथासज्जनगोष्ठीषु पतिष्यसि पतिष्यसि ॥

कस्यापि.

४६२

कर्णे तत्कथयन्ति दुन्दुभिरवैं राष्ट्रे यदुद्घोषितं
तन्नम्राङ्गतया वदन्ति करुणं यस्मात्त्रपावान्भवेत् ।
श्लाघन्ते तदुदीर्यते यदरिणाप्युग्रं न मर्मान्तकृ-
द्ये केचिन्ननु शाठ्यमौग्ध्यनिधयस्ते भूभृतां रञ्जकाः ॥

४६३

भण्डस्ताण्डवमण्डपे चटुकथावीथीषु कन्थाकवि-
र्गोष्ठश्वा स्वगृहाङ्गणे शिखरिभूगर्ते खटाखुः स्फुटम् ।
पिण्डीशूरतया विटश्च पटुतां भूभृद्गृहे गाहते
गच्छन्ति ह्रदकृष्टकच्छपतुलां चित्रं ततोऽन्यत्र ते ॥

एतौ कल्हणस्य.

४६४

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि ।
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत्को नाम गुणो भवेद्गुणवतां यो दुर्जनैर्नाङ्कितः ॥

भर्तृहरेः.

४६५

आखुः कैलासशैलं तुलयति करटस्तार्क्ष्यमांसाभिलाषी
बभ्रूर्लाङ्गूलमूलं चलयति चपलस्तक्षकाहिं जिघांसुः ।

भेकः पारं यियासुर्भुजगमपि महाघस्मरस्याम्बुराशेः
प्रायेणासन्नपातः स्मरति समुचितं कर्म न क्षुद्रकर्मा ॥

कस्यापि.

४६६

अगुणकणो गुणराशिर्द्वयमिह दैवात्खलमुखे पतितम् ।
प्रसरति तैलमिवैकः सलिले घृतवज्जडत्वमेत्यन्यः ॥

---

## अथ कदर्याः

४६७

शरणं किं प्रपन्नानि विषवन्मारयन्ति किम् ।
न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥

४६८

कृपणेन समो दाता न भूतो न भविष्यति ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥

४६९

या विपत्तिर्धनापाये नवा भोगिवदान्ययोः ।
प्रज्ञापकर्षात्प्रागेव प्राप्ता हि कृपणेन सा ॥

४७०

त्यागोपभोगशून्येन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥

४७१

गृहमध्यनिखातेन धनेन रमते यदि ।
स तु तेनानुसारेण रमते किं न मेरुणा ॥

४७२

किंशुके किं शुकः कुर्यात्फलितेऽपि बुभुक्षितः ।
अदातरि समृद्धेऽपि किं कुर्युरुपजीविनः ॥

एते केषामपि.

४७३

दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते ।
पुंसां यदि हि सा लक्ष्मीरलक्ष्मीः कतमा भवेत् ॥

वररुचेः.

४७४

अतिसंचयकर्तॄणां वित्तमन्यस्य कारणम् ।
अन्यैः संचीयते यत्नादन्यैश्च मधु पीयते ॥

४७५

यद्ददासि विशिष्टेभ्यो यदश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि ॥

४७६

विडम्बनैव पुंसि श्रीः परप्रणयपांसुले ।
कान्तिं कामिह कुर्वीत कुणौ कटककल्पना ॥

४७७

कृत्वोपकारं यस्तस्माद्वाञ्छति प्रत्युपक्रियाम् ।
दीनस्तृष्णाविधेयत्वाद्वान्तमप्युपलेढि सः ॥

४७८

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्नाशः ॥

४७९

दानं भोगं च विना धनसत्तामात्रकेण चेद्धनिनः ।
वयमपि किमिति न धनिनस्तिष्ठति नः काञ्चनो मेरुः ॥

४८०

धनिनोऽप्यदानभोगा गण्यन्ते धुरि महादरिद्राणाम् ।
हन्ति न यतः पिपासामतः समुद्रोऽपि मरुरेव ॥

४८१

अभ्युपयुक्ताः सद्भिर्गतागतैरहरहः सुनिर्विण्णाः ।
कृपणजनसंनिकर्षं संप्राप्यार्थाः स्वपन्तीव ॥

४८२

उपभोगकातराणां पुरुषाणामर्थसंचयपराणाम् ।
कन्यारत्नमिव गृहे तिष्ठन्त्यर्थाः परस्यार्थे ॥

४८३

ते मूर्खतरा लोके येषां धनमस्ति नास्ति च त्यागः ।
केवलमर्जनरक्षणवियोगदुःखान्यनुभवन्ति ॥

केषामपि.

४८४

कृपणसमृद्धीनामपि भोक्तारः सन्ति केचिदतिनिपुणाः ।
जलसंपदोऽम्बुराशेर्यान्ति लयं शश्वदौर्वाग्नौ ॥

प्रकाशवर्षस्य.

४८५

प्राप्तानपि न लभन्ते भोगान्भोक्तुं स्वकर्मभिः कृपणाः ।
मुखरोगः किल भवति द्राक्षापाके बलिभुजां हि ॥

रविगुप्तस्य.

४८६

न निर्यियासन्ति कदर्यहस्ता-
द्धनानि पांसोरिव तैललेशाः ।
दैवात्कदाचिद्विनियोक्तुरेव
निर्गन्तुमिच्छन्त्यसुभिः सहैव ॥

४८७

संचितं क्रतुषु नोपयुज्यते
याचितं गुणवते न दीयते ।
तत्कदर्यपरिरक्षितं धनं
चौरपार्थिवगृहेषु गच्छति ॥

४८८

वरममी तरवो वनगोचराः
शकुनिसार्थविलुप्तफलश्रियः ।
न तु धनाढ्यगृहाः कृपणाः फणा-
निहितरत्नभुजंगमवृत्तयः ॥

४८९

सुसंवृतैर्जीवितवत्सुरक्षितै-
र्निजेऽपि देहे कृतयन्त्रणस्य च ।

तवानुमार्गं व्रजतो भवान्तरे
शठैर्धनैः पञ्चपदी न पूरिता ॥

४९०

अहो धनानां महती विदग्धता
सुखोषितानां कृपणस्य वेश्मनि ।
व्रजन्ति न त्यागदशां न भोग्यतां
परां च कांचित्प्रथयन्ति निर्वृतिम् ॥

केषामपि.

४९१

न शान्तान्तस्तृष्णा धनलवणवारिव्यतिकरैः
क्षतच्छायः कायश्चिरविरसरूक्षाशनतया ।
अनिद्रा मन्दाग्निर्नृपसलिलचौरानलभया-
त्कदर्याणां कष्टं स्फुटमधनकष्टादपि परम् ॥

क्षेमेन्द्रस्य.

४९२

एकैकातिशयालवः परगुणज्ञानैकवैज्ञानिकाः
सन्त्येते धनिकाः कलासु सकलास्वाचार्यचर्चाचणाः ।
अप्येते सुमनोगिरां निशमनाद्बिभ्यत्यहो श्लाघया
धूते मूर्धनि कुण्डले कषणतः क्षीणे भवेतामिति ॥

४९३

प्रीतिं न प्रकटीकरोति सुहृदि द्रव्यव्ययाशङ्कया
भीतः प्रत्युपकारकारणभयान्नाकृष्यते सेवया ।
मिथ्या जल्पति वित्तमार्गणभयात्स्तुत्यापि न प्रीयते
कीनाशो विभवव्ययव्यतिकरत्रस्तः कथं प्राणिति ॥

भट्टबाणस्य.

४९४

मत्वा सारं गुणानां शिरसि यदि शशी स्थापितो दैवयोगा-
दीशेन क्षीणबिम्बः सकलमुपचयं किं न नीतः क्षणेन ।

मिथ्यैवं ख्यापयन्तो गुणिनि सरलतां लोकभक्त्यर्थमुच्चै-
राढयाः कुर्वन्ति वित्तव्ययचकितधियो मानमर्थेन शून्यम् ॥

कस्यापि.

---

## अथोदाराः

४९५

ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः ।
शफरीस्फुरितैर्नाब्धेः क्षुब्धता जातु जायते ॥

भर्तृहरेः.

४९६

नाल्पीयसि निबध्नन्ति पदमुद्दामचेतसः ।
येषां भुवनलाभेऽपि निःसीमानो मनोरथाः ॥

४९७

पुंसामुन्नतचित्तानां सुखावहमिदं द्वयम् ।
सर्वसङ्गनिवृत्तिर्वा विभूतिर्वा सुविस्तरा ॥

एतौ कयोरपि.

४९८

अयं बन्धुः परो वेति गणना लघुचेतसाम् ।
पुंसामुदारचित्तानां वसुधैव कुटुम्बकम् ॥

भट्टोद्भटस्य.

४९९

जरामरणदौर्गत्यव्याधयस्तावदासताम् ।
जन्मैव किं न धीरस्य भूयो भूयस्त्रपाकरम् ॥

५००

परिवर्तिनि संसारे मृतः को वा न जायते ।
स जातो येन जातेन याति वंशः समुन्नतिम् ॥

५०१

अपि नाम स दृश्येत पुरुषातिशयो भुवि ।
गर्वोच्छूनमुखा येन धनिनो नावलोकिताः ॥

५०२

पृथ्वी पृथ्वी गुणा मान्याः सन्ति भूपा विवेकिनः ।
पराभवापदं यान्ति कस्मादुन्नतबुद्धयः ॥

५०३

अदृष्टमुखभङ्गस्य युक्तमन्धस्य याचितुम् ।
अहो बत महत्कष्टं चक्षुष्मानपि याचते ॥

एते केषामपि.

५०४

दारिद्र्यानलसंतापः शान्तः संतोषवारिणा ।
याचकाशाविघातान्तर्दाहं को नाम पश्यतु ॥

भट्टप्रद्युम्नस्य.

५०५

परिपूर्णगुणाभोगगरिमोद्गार एव सः ।
त्रिजगत्स्पृहणीयेऽस्मिन्न रुचिर्द्रविणेऽपि यत् ॥

धर्मदत्तस्य.

५०६

विद्ययैव मदो येषां कार्पण्यं च धने सति ।
तेषां दैवाभिशप्तानां सलिलादग्निरुत्थितः ॥

५०७

किं तया क्रियते लक्ष्म्या या वधूरिव केवला ।
या न वेश्येव सामान्या पथिकैरपि भुज्यते ॥

विक्रमादित्यस्य.

५०८

त्यागो गुणो वित्तवतां वित्तं त्यागवतां गुणः ।
परस्परवियुक्तौ तु वित्तत्यागौ विडम्बना ॥

५०९

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥

५१०

नृणां धुरि स एवैको यः कश्चित्त्यागपाणिना ।
निर्मार्ष्टि प्रार्थनापांसुधूसरं मुखमर्थिनाम् ॥

५११

आकारमात्रविज्ञानसंपादितमनोरथाः ।
धन्यास्ते ये न शृण्वन्ति दीनाः प्रणयिनां गिरः ॥

५१२

बुद्धिर्या सत्त्वरहिता स्त्रीत्वं तत्केवलं मतम् ।
सत्त्वं चानयसंपन्नं तत्पशुत्वं न पौरुषम् ॥

कयोरपि.

५१३

कामं प्रियानपि प्राणान्विमुञ्चन्ति मनस्विनः ।
इच्छन्ति न त्वमित्रेभ्यो महतीमपि सत्क्रियाम् ॥

मञ्चो:.

५१४

अत्यद्भुतमिमं मन्ये स्वभावममनस्विनः ।
यदुपक्रियमाणोऽपि प्रीयते न विलीयते ॥

आरराजानकस्य.

५१५

प्रत्युपकुर्वत्पूर्वं कृतोपकारमपि लज्जयति चेतः ।
यस्तु विहितोपकारादुपकारः सोऽधिको मृत्योः ॥

५१६

प्रत्युपकुर्वन्बह्वपि न भवति पूर्वोपकारिणा तुल्यः ।
एकोऽनुकरोति कृतं निष्कारणमेव कुरुतेऽन्यः ॥

५१७

जीवञ्जीवयति हि यो ज्ञातिजनं परिजनं च सुहृदश्च ।
तस्य सफला गृहश्रीर्धिगनुपजीव्यां धनसमृद्धिम् ॥

५१८

यच्छञ्जलमपि जलदो वल्लभतामेति सर्वलोकस्य ।
नित्यं प्रसारितकरः सवितापि भवत्यचक्षुष्यः ॥

५१९

नाप्तं यत्केनचिदपि मनोरथा अपि यतो निवर्तन्ते ।
तद्यदि न लभ्यतेऽन्यन्मनस्विनः किमभिमानफलम् ॥

५२०

घटनं विघटनमथवा कार्याणां भवति विधिनियोगेन ।
उचितेऽनुचिते कर्मणि वृत्तिनिवृत्ती ममायत्ते ॥

५२१

कल्पस्थायि न जीवितमैश्वर्यं नाप्यते च यदभिमतम् ।
लोकस्तथाप्यकार्यं कुरुते कार्यं किमुद्दिश्य ॥

एते केषामपि.

५२२

धनबाहुल्यमहेतुः कोऽपि निसर्गेण मुक्तकरः ।
प्रावृषि कस्याम्बुमुचः संपत्तिः किमधिकाम्बुनिधेः ॥

प्रकाशवर्षस्य.

५२३

उत्पादिता स्वयमियं यदि तत्तनूजा
तातेन वा यदि तदा भगिनी खलु श्रीः ।
यद्यन्यसंगमवती च तदा परस्त्री
तत्त्यागबद्धमनसः सुधियो भवन्ति ॥

भर्तृहरेः.

५२४

द्रविणार्जनजः परिश्रमः ।
फलितोऽप्यस्य जनस्य नीरसः ।
द्रविणार्जनमात्मतुष्टये
परमावर्जयितुं गुणार्जनम् ॥

ज्यौतिषिकभट्टभास्करस्य.

५२५

यः प्रशंसति नरो नरमन्यं
देवतासु वरदासु सतीषु ।

मुग्धधीर्धनलवस्पृहयालु-
स्तं नृशंसमहमाद्यमवैमि ॥

आनन्दवर्धनस्य.

५२६

यथा शरीरं किल जीवितेन
विनाकृतं काष्ठमिवावभाति ।
तथैव तज्जीवितमप्यवैमि
लोकोत्तरेण स्फुरितेन शून्यम् ॥

शङ्कुकस्य.

५२७

सन्तोऽपि सन्तः क किरन्तु तेजः
क नोज्ज्वलन्तु क नु न प्रथन्ताम् ।
विधाय रुद्धा ननु वेधसैव
ब्रह्माण्डकोशे घटदीपकल्पाः ॥

दिविरधर्मवृत्तस्य.

५२८

कदर्थितस्यापि हि धैर्यवृत्ते-
र्न शक्यते सत्त्वगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्ने-
र्नाधः शिखा यान्ति कदाचिदेव ॥

५२९

जातश्च नाम न विनङ्क्ष्यति चेत्ययुक्त-
मुत्पाद एव नियमेन विनाशहेतुः ।
तुल्ये च नाम मरणव्यसनोपतापे
मृत्युर्वरं परहितावहिताशयस्य ॥

एतौ भदन्ताश्वघोषस्य.

५३०

इयत्यप्येतस्मिन्निरवधिमहत्यध्वनि गुणा-
स्त एवामी द्वित्रा जरठजरठा यान्ति गणनाम्

अहो ग्राम्यो लोकः स न परममीभिः कृतधृतिः
स्मयस्तब्धो यावत्कलयति समग्रं तृणमिदम् ॥

भदन्तादित्यदत्तस्य.

५३१

स्वचित्तपरिचिन्तयैव परितापमात्मन्यमी
न बिभ्रति मनस्विनो यदमुना न तावत्क्षतिः ।
अहर्निशमिहैव ये परमनोऽनुवृत्त्या पुन-
र्वहन्ति विजिगीषुतां किमिव तेऽनुकम्पास्पदम् ॥

५३२

विपुलहृदयैरन्यैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥

५३३

अभुक्तायां यस्यां क्षणमपि न यातं नृपशतै-
र्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् ।
तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥

एते भर्तृहरेः,

५३४

परेषां चेतांसि प्रतिदिवसमायास्य बहुधा
प्रसादं किं नेतुं विशसि हृदय क्लेशकालिलम् ।
प्रसन्ने त्वय्येव स्वयमुदितचिन्तामणिगुणे
विविक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥

शङ्कुकस्य.

५३५

विनाप्यर्थैर्धीरः स्पृशति बहुमानोन्नतिपदं
परिष्वक्तोऽप्यर्थैः परिभवपदं याति कृपणः ।

स्वभावेनोद्भूतां गुणसमुदयावाप्तिविपुलां
द्युतिं सैंहीं न श्वा धृतकनकमालोऽपि लभते ॥

कस्यापि.

५३६

भुज्यन्ते स्वगृहस्थिता इव सुखं यस्यार्थिभिः संपदः
पट्वी यस्य मतिस्तमःप्रहतये द्वावेव तौ प्राणितः ।
यस्त्वात्मंभरिरुन्नतेऽपि विभवे हीनश्च विद्वत्तया
तस्यालेख्यमणेरिवाकृतिधृतः सत्ताप्यसत्ता ननु ॥

हरिभट्टस्य.

५३७

आधाराय धरावकाशविधयेऽप्याकाशमालोकने
भास्वानात्ममहत्त्वसाधनविधावन्ये गुणाः केचन ।
इत्यस्मिन्नुपकारकारिणि सदा वर्गे परं दुस्त्यजे
दैन्यव्रीडकलङ्कमुज्झतु कथं चेतो महाचेतसाम् ॥

भूमिधरस्य.

५३८

नित्यं या गुरुभृत्यबन्धुसुजनैर्न स्वेच्छया भुज्यते
पश्यन्ति स्पृहयालवो न रिपवो यां विक्रमासादिताम् ।
यस्याः साधुपरिक्षयेण सुहृदां नाशेन वा संभवो
नो संपद्विपदेव सा गुणवतां प्रीतिस्तया कीदृशी ॥

५३९

न्याय्यं मार्गमनुज्झतः सुकृतिनो दैवाद्भवन्त्यापदो
यास्ताः सन्तु बलेरिवादिपुरुषायोर्वीं स्वयं यच्छतः ।
शक्रस्येव जुगुप्सितैः सुबहुभिर्निन्द्यैर्भृशं कर्मभि-
र्देवानामुपरि प्रभुत्वमपि मे मा भूत्त्रपाकारणम् ॥

कयोरपि.

५४०

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।

इत्यप्रार्थितसर्वलभ्यविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥

श्रीहर्षस्य.

५४१

अल्पीयसामेव हि जन्मभूमे-
स्त्यागः प्रमादो विदुषां न सोऽस्ति ।
स्थानादपेता मणयो व्रजन्ति
राज्ञां शिरः काकमुखानि भेकाः ॥

५४२

शूराश्च कृतविद्याश्च रूपवत्यश्च योषितः ।
यत्र यत्र गमिष्यन्ति तत्र तत्र कृतालयाः ॥

कयोरपि.

५४३

रुद्रोऽद्रिं जलधिं हरिर्दिविषदो दूरं विहायः श्रिता
भोगीन्द्राः प्रबला अपि प्रथमतः पातालमूले स्थिताः ।
लीना पद्मवने सरोजनिलया मन्येऽर्थिसार्थाद्भिया
दीनोद्धारपरायणाः कलियुगे सत्पूरुषाः केवलम् ॥

५४४

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः सहस्रगुणितैरपि हन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥

---

## अथान्यापदेशाः

तत्रादौ

### सूर्येन्दुवर्णनम्.

५४५

प्रसरद्भिः करैर्यस्य विकसन्ति न सद्गुणाः ।
तस्य दोषाकरस्येयं कथं नित्यास्ति पूर्णता ॥

शङ्कुकस्य.

५५४

पततु वारिणि यातु दिगन्तरं
विशतु वह्निमथो व्रजतु क्षितिम् ।
रविरसावियतास्य गुणेषु का
सकललोकचमत्कृतिषु क्षतिः ॥

भट्टभल्लटस्य.

५५५

तत्तावदेव शशिनः स्फुरितं महीयो
यावन्न तीक्ष्णरुचिमण्डलमभ्युपैति ।
अभ्युद्यते सकलधामनिधौ च तस्मि-
न्निन्दोः सिताभ्रशकलस्य च को विशेषः ॥

प्रकाशदत्तस्य.

५५६

सद्वृत्तयः सदसदर्थविवेकिनो ये
ते पश्य कीदृशममुं समुदाहरन्ति ।
चौरासतीप्रभृतयो ब्रुवते यदस्य
तद्वृह्यते यदि कृतं तदहस्करेण ॥

भट्टभल्लटस्य.

५५७

एकैव सामृतमयी सुतरामनर्घा
काप्यस्त्यसौ शशधरस्य कला ययैव ।
आरोपितो गुणविदा परमेश्वरेण
चूडामणौ न गणितोऽस्य कलङ्कदोषः ॥

कस्यापि.

५५८

उद्यन्त्यमूनि सुबहूनि महामहांसि
चन्द्रोऽप्यलं भुवनमण्डलमण्डनाय ।
सूर्यादृते न तदुदेति न चास्तमेति
येनोदितेन दिनमस्तमितेन रात्रिः ॥

५५९

लोकानन्दाद्विरमति न यः क्षीयमाणोऽपि भूयः
स्वःस्थे तस्मिन्किल दिनमुखं नूतनं नाभविष्यत् ।
दैवं कीदृक्कथमपि यथा भर्तुमात्मानमेव
व्यग्रः कालं गमयति सखे सोऽप्ययं पश्य चन्द्रः ॥

एतौ आनन्दवर्धनस्य.

५६०

क्षीणश्चन्द्रो विशति तरणेर्मण्डलं मासि मासि
लब्ध्वा कांचित्पुनरपि कलां दूरदूरानुवर्ती ।
संपूर्णश्चेत्कथमपि तथा स्पर्धयोदेति भानो-
र्नो दौर्जन्याद्विरमति जडो नापि दैन्याद्यरंसीत् ॥

धाराधरस्य.

५६१

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः ।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखै-
र्दूरारोहो भवति महतामप्युपभ्रंशनिष्ठः ॥

कालिदासस्य.

५६२

क्व तत्तेजस्तादृग्ज्वलनमहसो नाशपिशुनं
पराभूतिः क्वासौ विसदृशतराद्राहुशिरसः ।
विधेर्योगादेतत्समुचितमिदं तु व्यथयति
त्रपाहीनो मित्रात्तदपि गगने यद्विहरति ॥

कलशकस्य.

५६३

पातः पूष्णो भवति महते नोपतापाय यस्मा-
त्कालेनास्तं क इव न गता यान्ति यास्यन्ति चान्ये ।
एतावत्तु व्यथयति यदालोकबाह्यैस्तमोभि-
स्तस्मिन्नेव प्रकृतिमहति व्योम्नि लब्धोऽवकाशः ॥

भट्टभल्लटस्य

५६४

आ सर्गात्प्रतिवासरं रसशतैर्या बोधिता पोषिता
कल्पान्तावसरेऽथ सैव पृथिवी स्वैरेव दग्धा करैः ।
कृत्वेत्थं किमपि स्वकर्म नियतेः पूर्वापरोपप्लुतं
कष्टं सोऽपि दिनान्तवीतकिरणस्तिग्मांशुरस्तं गतः ॥

भवानीनन्दनस्य.

५६५

येनोन्मथ्य तमांसि मांसलघनस्पर्धीनि सर्वं जग-
च्चक्षुष्मत्परमार्थतः कृतमिदं देवेन तिग्मत्विषा ।
तस्मिन्नस्तमिते विवस्वति कियान्क्रूरो जनो दुर्जनो
यद्बध्नाति धृतिं शशाङ्कशकलालोकेऽथ दीपेऽथवा ॥

कस्यापि.

५६६

शोच्यस्तावदुमापतिः प्रभुतया यो मूर्ध्नि गङ्गोक्षिते
सच्छिद्रं नृशिरःकपालममलं चन्द्रं च धत्ते समम् ।
चन्द्रः शोच्यतरस्ततः परिभवेप्येऽवंविधे यः सति
ज्योत्स्नाहासविकासपाण्डुरवपुर्मुख्यां मुदं पुष्यति ॥

५६७

पूर्णं वीचिभुजैः स्ववृद्धिरभसादिन्दुं समालिङ्गति
क्षीणं दूरत एव मुञ्चति पिता भूत्वा जलानां निधिः ।
प्रक्षीणस्य तु येन तस्य वसुना कृत्वा क्रमेणोदयं
पूर्णत्वे च दवीयसि स्थितमहो मित्राय तस्मै नमः ॥

५६८

ध्वान्तेन प्रथितैर्ग्रहक्षितिपतेर्देवस्य दूरस्थितेः
सच्चक्रप्रमदावहाभ्युदितता कैर्नाम नाकाङ्क्षिता ।
एतेनाभ्युदितेन संप्रति पुनः कष्टं तथा चेष्टितं
लोकस्तीक्ष्णकरोऽयमित्यभिमुखं नैनं यथा प्रेक्षते ॥

५६९

दृष्ट्वैव यं करसहस्रहतान्धकारं
भीत्यापयान्त्यनुदिनं शतशः पिशाचाः ।
क्षीणे विधौ हरिविलूनकरोऽतिचित्रं
गृह्णाति तं द्युमणिमभ्रपिशाच एकः ॥

५७०

तमोग्रस्तं जगत्सर्वं त्रातुं भानुः सदोद्यतः ।
तं तु त्रातुं तमोग्रस्तं जगत्येकोऽपि न क्षमः ॥

५७१

रात्रौ गुणनिधेः पद्मात्कुमुदं यदनक्षरम्
प्राप्ता लक्ष्मीः स महिमा राज्ञो जडनिधेर्ध्रुवम् ॥

५७२

आभाति चन्द्ररहिता न कदापि रात्रि-
श्चन्द्रोऽपि रात्रिरहितो गतकान्तिरेव ।
किं कारणं यदनयोः प्रतिमासमेको
जातो निरन्तरतया परिरम्भयोगः ॥

५७३

गगनशयनलीनां रात्रिमुत्सृज्य चन्द्रो
व्रजति धवलपक्षे कृष्णपक्षे तु रात्रिः ।
अपसरति यदीन्दोर्व्योमतल्पे प्रसुप्ता-
स्त्रुटति तदनयोः किं तावता दम्पतित्वम् ॥

५७४

आशाः प्रकाशयति यस्तिमिराणि भङ्क्त्वा
बोधं दृशां दिशति भूरिगुणेष्वभीष्टः ।
खेदाय यस्य न परोपकृतिष्वटाट्या
धीमान्नमस्यति न कस्तमिनं प्रशस्यम् ॥

द्युतिधरस्य ।

५७५

विचारस्तथ्यो वा भवतु वितथो वा किमपरं
तथाप्युच्चैर्धाम्नो भवति बहुजल्पो जनरवः ।
तुलोत्तीर्णस्यापि प्रथितमहिमध्वस्ततमसो
रवेस्तादृक्तेजो न भवति हि कन्यां गत इति ॥

५७६

उडुगणपरिवारो नायकोऽप्योषधीना-
ममृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः ।
भवति विगतरश्मिर्मण्डलं प्राप्य भानोः
परसदननिविष्टः को लघुत्वं न याति ॥

कस्यापि.

५७७

उच्चः सत्फलदो यथायमहमप्येतादृगेतावता
स्पर्धां मन्द मदोद्धतः स्वजनकेनार्केण मा मा कृथाः ।
दूरादेव भवादृशोऽस्य महसा ध्वस्ताः समस्ताः स्वयं
नैवेच्छत्ययमत्ययं गुणिसखः कस्यापि तेजोनिधिः ॥

प० श्रीबकस्य.

५७८

तुल्या सुखस्थितिरम्युष्य ममेति राज्ञि
स्पर्धां निजेऽपि जनके जनकेलिहेतौ ।
मा राजनन्दन कृथाः स हि सर्वलोक-
ध्वान्तान्तकृद्गिरिशहस्तपवित्रितात्मा ॥

आराध्यकर्पूरस्य.

५७९

मात्सर्येण जहद्ग्रहान्विसदृशे धूमध्वजे योग्यतां
ज्ञात्वा स्वां विदधत्त्विषं दिनपतिर्हास्यप्रशान्त्युन्मुखः ।
दैवं वेत्ति न यः शिखी स परतो नामास्तु तत्संभवाः
स्युर्दीपा अपि यद्वशेन जगतां तिग्मांशुविस्मारकः ॥

कह्लणस्य

५८०

पद्मा ये मदनुव्रता दधति ते क्लान्तिं तुषाराहता
येऽप्येते दिवसा मदेकशरणाः कार्श्यं परं यान्ति ते
गच्छन्नित्थमसौ समाश्रितजनप्रीत्येव दूरां दिशं
हेमन्ते भगवानहर्पतिरहो लोके गतः सेव्यताम् ॥

---

## अथ प्राणिनः

### तत्र सिंहाः

५८१

नाभिषेको न संस्कारः सिंहस्य क्रियते वने ।
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥

५८२

एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः ।
स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥

कयोरपि.

५८३

मत्तेभकुम्भनिर्भेदकठोरनखराशनिः ।
मृगारिरिति नाम्नैव लघुत्वं याति केसरी ॥

५८४

पतन्ति नैव मातङ्गकुम्भपाटनलम्पटाः ।
वल्गत्स्वपि कुरङ्गेषु मृगारेर्नखराः खराः ॥

एतौ चीआकस्य.

५८५

किं कुर्मः क उपालम्भो यत्रेदमसमञ्जसम् ।
काकिण्यपि न सिंहस्य मूल्यं कोटिस्तु दन्तिनः ।

श्रीमुक्तापीडस्य.

५८६

लीलादलितधृष्टेभकुम्भपीठस्य निर्भयैः ।
कथं केसरिणः क्रान्तं सुप्तस्यापि मृगैः पदम् ॥

पुण्यस्य.

५८७

मत्तेभकुम्भनिर्भेदरुधिरारुणपाणिना ।
हरिणा हरिणः स्पर्धां वराकः कुरुते कथम् ॥

५८८

तावद्गर्जति मातङ्गो वने मदभरालसः ।
शिरोविलग्नलाङ्गूलो यावन्नायाति केसरी ॥

५८९

शौर्यदर्पबलाध्मातश्वसद्गण्डान्तशोभिनः ।
सटामुत्पाट्य सिंहस्य किं नराः सुखमासते ॥

५९०

कोपादेकतलाघातनिपतन्मत्तदन्तिनः ।
हरेर्हरिणयुद्धेऽस्य कियान्व्याक्षेपविस्तरः ॥

५९१

यावदस्थिषु संलग्नाः कराः केसरिणः क्षणम् ।
यूथस्य प्राणितं तावत्तदरण्यनिवासिनः ॥

५९२

सगर्वगर्जद्गजगण्डमण्डली-
विखण्डनोड्डामरविक्रमक्रमः ।
अनन्तविश्रान्तकुरङ्गसंगर-
प्रसङ्गमङ्गीकुरुते कथं हरिः ॥

एते केषामपि।

५९३

सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥

श्रीवज्रायुधस्य।

५९४

एकाकिनि वनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे ।
सत्त्वोच्छ्रिते मृगपतौ राजेति गिरः परिणमन्ति ॥

५९५

सिंहः करोति विक्रममलिझांकाराङ्किते करे करिणः ।
न पुनर्नखमुखविलिखितभूधरकुहरास्थिते नकुले ॥

५९६

समदकरिकुम्भदारणमदपङ्कच्छुरितकेसरसटस्य ।
सिंहस्य क इव वक्त्रे करतलमाधातुमुत्सहते ॥

केषामपि.

५९७

निष्प्रग्रहेषु करिपोतशतेषु मोहा-
द्वल्गत्सु बालिशतया पुरतोऽप्यटत्सु ।
मत्तेभकुम्भदलनोचितचित्तवृत्तेः
सिंहस्य लोचननिमीलनमेव युक्तम् ॥

च्छीआकस्य.

५९८

दृष्ट्वैव रोषवशघूर्णितकेसरांस-
मायान्तमन्तकसमं पुरतो मृगारिम् ।
मांसं चिखादिषुभिरेत्य पतत्रिपूगै-
र्भ्रान्तं मदान्धगजयूथपमस्तकेषु ॥

ललितानुरागस्य.

५९९

यः केसरी खरनखक्रकचोग्रपाणि-
निर्दारितेभवरकुम्भसमुद्भवेन ।
नव्येन शोणितचयेन निरस्ततृष्णो
नित्यं बभूव धिगहोऽद्य तृणेन सोऽर्थी ॥

६००

विस्रं वपुः परवधप्रवणा च बुद्धि-
स्तिर्यक्तयैव कथितः सदसद्विवेकः ।
इत्थं न किंचिदपि साधु मृगाधिपस्य
तेजस्तु तत्स्फुरति येन जगद्वराकम् ॥

६०१

सिंहोऽस्तु शत्रुरथवाधिपतिर्मृगाणां
शंसास्पदं तदपि न द्वयमेव मन्ये ।
तस्य स्फुरत्करजवज्रशिरोऽभिघात-
हेलानिपातितमतङ्गजजङ्गमाद्रेः ॥

एते केषामपि.

६०२

प्रेङ्खन्मयूखनखपातशिखानिखात-
विख्यातवारणगणस्य हरेर्गुहायाम् ।
क्रोष्टा निकृष्टसरमासुतदृष्टिनष्ट-
धाष्टर्यो निविष्ट इति कष्टमिहाद्य दृष्टम् ॥

उपाध्यायधनवर्मणः.

६०३

मत्तेभकुम्भदलनाकुललोलवल्ग-
दन्तःक्वणत्करजवज्रशिखाभिघातः ।
किं केसरी जगति माननिधिस्तृणेन
प्राणात्ययेऽपि कुरुते स्वशरीरयात्राम् ॥

भट्टवासुदेवस्य.

६०४

विश्वस्य स्थितये धनुर्धरतया गर्जन्तमुच्चैः पदे
मेघं दन्तिमदान्तदुर्ललितधीर्मा सिंह लालङ्घिषीः ।
अस्माद्वज्रविदारितक्षितिभृतो मा पाति वर्षोपलै-
र्झम्पालम्पटभावभाविपतनाचिन्त्योऽङ्गभङ्गः स्वयम् ॥

श्रीराजानकजोनराजस्य.

६०५

खरनखरनिखातोत्तुङ्गमातङ्गकुम्भ-
स्थलविगलितमुक्तालंकृतक्ष्मातलस्य ।
हरति हरिणवृन्दं किं हरेर्वैरमाजौ
मिलितमपि समन्तादेककार्येण कृत्स्नम् ॥

कस्यापि.

६०६

अनुकृतगण्डशैलमदमण्डितगण्डतट-
भ्रमदलिमण्डलीनिबिडगुंगुमघोषजुषः ।
दलयति हेलयैव हरिरुग्रकरान्करिण-
स्त्रिजगति तेज एव गुरु नो विकृताकृतिता ॥

भट्टवासुदेवस्य.

६०७

शैलश्रेणिगुहागृहेषु निवसन्नीवन्निजाडम्बरै-
रव्याजोर्जितविक्रमो मृगपतिर्वीरेन्द्र मा कुप्यताम् ।
अस्मात्कुञ्जरकुम्भसंभववसापानैकहेवाकिनो
यल्लब्धं व्यसनाकुलेन मनसा स्वेनैव तच्चिन्त्यताम् ॥

प° मल्लकस्य.

६०८

कश्मीरान्गन्तुकामस्य मीरशाहाख्यभूपतेः ।
शाहाबुद्दीनभूमीन्द्रः प्राहिणोदिति लेखकम् ॥

६०९

किमेवमविशङ्कितः शिशुकुरङ्ग लोलक्रमं
परिक्रमितुमीहसे विरम नैव शून्यं वनम् ।
स्थितोऽत्र गजयूथनाथमथनोच्छलच्छोणित-
च्छटापटलभासुरोत्कटसटाभरः केसरी ॥

भा° अमृतदत्तस्य.

६१०

कठोरनखराहतद्विरदकुम्भपीठस्थली-
लुठद्रुधिररञ्जितोल्ललितकेसरः केसरी ।
गभीररवकातरातुरतरातुरव्याहृतैः
पतन्हरिणकैः समं समरभूमिकां लज्जते ॥

६११

चरत वृषभा जालीमांसं यथेच्छमभीरवः
पिबत नलिनीकच्छेष्वच्छं पुनर्महिषाः पयः ।

वहत करिणो भूयः शोभां मदेन कपोलयो-
रसहनतया दूरीभूतो विधेर्बत केसरी ॥

६१२

लब्धा डम्बरमम्बरे जलधरं गर्जन्तमालोक्य य-
द्दूरादुच्छलितोऽसि सिंह महतां तेनैव खिन्नं मनः ।
यत्त्वासारभयेन संप्रति दरीसांमुख्यमालम्बसे
तद्दृष्ट्वैव वयं ह्रिया किमपरं पातालमूलं गताः ॥

केषामपि.

६१३

यस्यानेकमदान्धवारणघटाकुम्भस्थलीभेदन-
व्यापारैकविनोददुर्ललितया कालोऽगमल्लीलया ।
उद्गर्जज्जलभारवामनघनस्पर्धी स एवाधुना
सिंहः पञ्जरपातपुञ्जिततनुर्धत्ते दशामीदृशीम् ॥

६१४

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्राणोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नधीधृतिरपि प्राणेषु नश्यत्स्वपि ।
दर्पाध्मातकरीन्द्रकुम्भदलनप्रेङ्खन्नखाग्राशनिः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥

एतौ रतिसेनस्य.

६१५

नास्योच्छ्रायवती तनुर्न दशनौ नो दीर्घदीर्घः करः
सत्यं वारण नैष केसरिशिशुस्त्वाडम्बरैः स्पर्धते ।
तेजोबीजमसह्यमस्य हृदये न्यस्तं पुरा वेधसा
तादृक्त्वादृशमेव येन सुतरां भोज्यं पशुं मन्यते ॥

आनन्दवर्धनस्य.

६१६

माद्यन्मातङ्गकुम्भस्थलबहलवसावासनाविस्रगन्ध-
व्यासङ्गव्यक्तमुक्ताफलशकललसत्केसरालीकरालः ।

व्याधीवैधव्यवेधाः स्वभुजबलमदग्रस्ततेजस्विधामा
बिभ्यत्सारङ्गसार्थः सततमसहनः केसरी केन दृष्टः ॥

६१७

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥

६१८

आ बाल्यादपि यो विदारितमदोन्मत्तेभकुम्भस्थली-
स्थालीमध्यकवोष्णरक्तरसवन्मुक्तापुलाकप्रियः ।
हस्तस्तस्य कथं प्रसर्पतु पुरः कृच्छ्रेऽप्यवस्थान्तरे
गर्तावर्तविवर्तमानशशकप्राणापहारे हरेः ॥

६१९

रक्ताक्तयन्नखरकोटिनिभादिभानां
यूथाः पलाशवनतोऽपि पलाय्य जग्मुः ।
सिंहस्य तस्य जरतो विषमा दशा य-
द्रोमायवैरवयवैरपि नास्ति वृत्तिः ॥

६२०

पर्जन्यं प्रति गर्जतः प्रतिनिधीन्विन्ध्यस्य वातोद्धता-
नम्भोधीनिव धावतः सरभसं हत्वा रणे वारणान् ।
वृक्षाद्वृक्षमुपेयुषोऽल्पवपुषः शाखामृगस्योपरि
क्रुद्धः सोऽपि भवान्नहो बत गतः पञ्चास्य हास्यां दशाम् ॥

जह्लणस्य.

६२१

हुंकारैः स्तनितानुकारचतुरैर्न्यकारमाकारित-
क्षौणीभृच्छिखरश्रियो गजघटा नीत्वा मदाटोपिनीः ।
सिंहः संहतभावतो दशदिशः क्लिश्यत्सु दुर्वाशितै-
र्गोमायुष्वपि विश्वविश्वविदितप्रौढिः किमुच्छते ॥

रा० जोनराजस्य.

## अथ गजाः

६२२

करिकलभ विमुञ्च लोलतां
चर विनयव्रतमानताननः ।
मृगपतिनखकोटिभङ्गुरो
गुरुरुपरि क्षमते न तेऽङ्कुशः ॥

बाणभट्टस्य.

६२३

केलिं कुरुष्व परिभुङ्क्ष्व सरोरुहाणि
गाहस्व शैलतटनिर्झरिणीपयांसि ।
भावानुरक्तकरिणीकरलालिताङ्ग
मातङ्ग मुञ्च मृगराजरणाभिलाषम् ।

आनन्दवर्धनस्य.

६२४

उच्छृङ्खलेन निरपेक्षतयोन्मदेन
येनाकुलीकृतमिदं करिणा बभूव ।
दत्त्वा पदं शिरसि हस्तिपकार्भकेण
मन्दः कथं गमित एष वशं प्रसह्य ॥

प्रकाशवर्षस्य.

६२५

विन्ध्याद्रिसानुतरुपुष्पपतत्पराग-
संपुञ्जपूजितकरः करियूथसेव्यः ।
योऽभूत्स एव नृनिदेशकरः करीन्द्रो
जातः कथं किमथ वा प्रभुरत्र कालः ॥

श्रुतधरस्य.

६२६

अन्तःसमुत्थविरहानलतीव्रताप-
संतापिताङ्ग करिपुङ्गव मुञ्च शोकम् ।

धात्रा स्वहस्तलिखितानि ललाटपट्टे
को वाक्षराणि परिमार्जयितुं समर्थः ॥

कस्यापि.

६२७

भो भोः करीन्द्र दिवसानि कियन्ति ताव-
दस्मिन्मरौ समतिवाहय कुत्रचित्त्वम् ।
रेवाजलैर्निजकरेणुकरप्रयुक्तै-
र्भूयः शमं गमयितासि निदाघकाले ॥

गोविन्दराजस्य.

६२८

अस्मिञ्जडे जगति को नु बृहत्प्रमाण-
कर्णः करी ननु भवेद्दुरितस्य पात्रम् ।
इत्यागतं तमपि योऽलिनमुन्ममाथ
मातङ्ग एव किमतः परमुच्यतेऽसौ ॥

भट्टवासुदेवस्य.

६२९

न गृह्णाति ग्रासं नवकमलकिंजल्किनि जले
न पङ्करालादं व्रजति बिसभङ्गार्धशकलैः ।
ललन्तीं प्रेमार्द्रामपि विषहते नान्यकरिणीं
स्मरन्दावभ्रष्टां हृदयदयितां वारणपतिः ॥

६३०

लतान्तान्नादत्ते शशिशकलशीतं न च जलं
भ्रमद्भृङ्गासङ्गाः परिहरति कान्ताः कमलिनीः ।
दधद्धाराकारं करमपि करी जातविरहो
वितन्वन्नुच्छ्वासान्क्षणमपि वनान्ते न रमते ॥

६३१

नदीवप्रान्भित्त्वा किसलयवदुत्पाट्य च तरू-
न्मदोन्मत्ताञ्जित्वा करचरणदन्तैः प्रतिगजान् ।

जरां प्राप्यानार्यां तरुणजनविद्वेषजननीं
स एवायं नागः सहति कलभेभ्यः परिभवम् ॥

६३२

वरमियमङ्कुशक्षतिरलक्षितमापतिता
विनयविधित्सया शिरसि ते गजयूथपते ।
न पुनरपश्चिमा करजवज्रशिखाभिहतिः
प्रसभसमुत्थितस्य निशिता वनकेसरिणः ॥

भट्टबाणस्य.

६३३

स्वाधीनां प्रविहाय शैलकटकप्रान्ते करेणुं वने
यत्ते नागरिकाजने निपतितं सद्भावशून्ये मनः ।
तस्यैतद्दृढरज्जुबन्धनवधव्यापारखेदात्मकं
हे मत्तद्विप कर्मणः परिणतं रागानुरूपं फलम् ॥

६३४

क्वाकारो गिरिसन्निभः क्व च गतिर्वेगेन लीला च सा
हेलाकुड्मलितेक्षणाः क्व नु दृशस्तद्वा क्व ते बृंहितम् ।
वप्राघातरसः क्व ते क्व च करः कष्टं यदेवंविधं
त्वामारुह्य शिशुः पदा परवशं संचारयत्याज्ञया ॥

६३५

पादाघातविघूर्णिता वसुमती त्रासालसाः पक्षिणः
पङ्काङ्कानि सरांसि गण्डकषणक्षोदक्षताः शाखिनः ।
प्राप्येदं करिपोतकैर्विधिवशाच्छार्दूलशून्यं वनं
तत्तन्नाम कृतं विशृङ्खलतया वक्तुं न यत्पार्यते ॥

एते केषामपि.

६३६

पुण्ड्रेक्षूनपि भक्षयन्घृतभृतो मांसौदनादीनपि
प्रावृण्वन्विविधाः कुथा अपि वहन्नक्षत्रमाला अपि ।

कर्णे चामरमालिकामपि दधद्दन्ती तथापि स्मर-
न्वैन्ध्यीनां घनसल्लकीवनभुवामास्ते सदा दुःखितः ॥

कस्यापि.

६३७

नीवारप्रसवाग्रमुष्टिकवलैर्यो वर्धितः शैशवे
पीतं येन सरोजपत्त्रपुटके होमावशेषं पयः ।
तं दृष्ट्वा मदमन्थरालिवलयव्यालुप्तगण्डं गजं
सोत्कण्ठं सभयं च पश्यति मुहुर्दूरे स्थितस्तापसः ॥

भश्वोः.

६३८

दन्ते न्यस्य करं प्रलम्बितशिराः संमील्य नेत्रद्वयं
किं त्वं वारण तप्यसे गणिकया को नाम नो वञ्चितः ।
ग्रासं शान्तमना गृहाण सततं शोकोऽधुना त्यज्यतां
ये मत्ता अविवेकिनश्चलधियस्ते प्राप्नुवन्त्यापदम् ॥

६३९

पत्युर्यत्कवलावशेषपतितग्रासेन वृत्तिः कृता
पीतं यच्च करावगाहकलुषं तत्पीतशेषं पयः ।
प्राणान्पूर्वतरं विहाय तदिदं प्रासं करिण्या फलं
यद्बन्धार्पणकातरस्य करिणः क्लिष्टं न दृष्टं मुखम् ॥

एतौ कयोरपि.

६४०

घासग्रासं गृहाण त्यज गजकलभ प्रेमबन्धं करिण्याः
पाशग्रन्थिव्रणानामभिमतमधुना देहि पङ्कानुलेपम् ।
दूरीभूतास्तवैते शबरवरवधूविभ्रमोद्भ्रान्तरम्या
रेवाकूलोपकण्ठद्रुमकुसुमरजोधूसरा विन्ध्यपादाः ॥

हस्तिपकस्य.

६४१

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।

श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥
कस्यापि.

६४२

यद्विन्ध्यः शिखरी तदन्तरपि यत्पीलुप्रियः पिप्पलः
सोत्कण्ठा रभसागमादभिपतद्रेणुः करेणुश्च यत् ।
तत्किं भद्रतया स्मरत्यपि करी दैवं हि सर्वंकषं
तन्मृत्योरपि दुःसहं तु यदयं मन्दो धुरि स्थापितः ॥

६४३

मध्येविन्ध्यमुदूर्मिनार्मदनदीवातूलवातावली-
हेलोद्धूलितमल्लिकाकिसलयैर्यो वृद्धिमभ्यागतः ।
सोऽयं दैववशाद्दशाविरहितः शूत्कारकारी करी
निर्मज्जद्गजरज्जुपाशविवशः कष्टं किमाचेष्टताम् ॥

६४४

हे गन्धकुञ्जर महागिरिकुञ्जराजि—
मद्यापि मा स्मर सलीलनिमीलिताक्षः ।
मुञ्चाभिमानमधुना भज वर्तमानं
वक्रं विधेरुपरि शासनमङ्कुशं च ॥
जह्लणस्य.

६४५

स्वच्छस्वादुजला विहाय सरितो हर्तुं तृषं दुःसहां
मा मत्त द्विरदाक्षि निक्षिप शरत्कृष्टे तडागाम्बुनि ।
पीतेऽस्मिन्सकलेऽपि गच्छति न ते शान्तिं पिपासा जले
ग्रामस्यैकगतेरमुष्य नियतं स्याज्जीविते संशयः ॥
कस्यापि.

---

## अथ मृगवर्णनम्

६४६

दूर्वाङ्कुरतृणाहारा धन्यास्तात वने मृगाः ।
विभवोन्मत्तचित्तानां न पश्यन्ति मुखानि यत् ॥

६४७

अमृता विगतप्राणा सान्तःशल्याकृतव्रणा ।
अबद्धा निश्चलेवास्ते कूटसंस्थे मृगे मृगी ॥

कयोरपि.

६४८

रज्ज्वा दिशः प्रविततास्सलिलं विषेण
पाशैर्मही हुतभुजा ज्वलिता वनान्ताः ।
व्याधाः पदान्यनुसरन्ति गृहीतबाणाः
कं देशमाश्रयति यूथपतिर्मृगाणाम् ॥

मुक्तापीडस्य.

६४९

द्रुततरमितो गच्छ प्राणैः कुरङ्ग वियुज्यसे
किमिति वलितग्रीवं स्थित्वा मुहुर्मुहुरीक्षसे ।
विदधति हतव्याधानां ते मनागपि नार्द्रतां
कठिनमनसामेषामेते विलोचनविभ्रमाः ॥

६५०

स्थलीनां दग्धानामुपरि मृगतृष्णामनुसरँ-
स्तृषार्तः सारङ्गो विरमति न खिन्नेऽपि मनसि ।
अजानानस्तत्त्वं न स मृगयतेऽन्यत्र सरसी-
मभूमौ प्रत्याशा न च फलति विघ्नं च कुरुते ॥

६५१

हे सारङ्ग तृणान्यशान सलिलैः प्राणान्पुषाणाथवा
यद्वा स्याः पवनाशनस्तदपि ते साविष्कृति प्राणितम् ।
येनेयं भवतोच्छसत्कुवलयप्रस्तारचारुद्युति-
र्दृष्टिर्वित्तमदोद्धताक्षिणि मुखे मूर्खस्य नायासिता ॥

६५२

अल्पीयःस्खलनेन यत्र पतनं कृच्छ्रेण यत्रोन्नति-
र्द्वारे वेत्रलतावितानगहने कष्टः प्रवेशक्रमः ।

हे सारङ्ग मनोरमा वनभुवस्त्यक्त्वा विशेषार्थिना
किं भूभृत्कटकस्थितिव्यसनिना व्यर्थं खुराः शातिताः ॥

कस्यापि.

६५३

नैतास्ता मलयस्य काननभुवः स्वच्छस्रवन्निर्झरा–
स्तृष्णा यासु निवर्तते तनुभृतामालोकमात्रादपि ।
रूक्षध्वाङ्क्षपरिग्रहो मरुरयं स्फारीभवद्भ्रान्तय–
स्ता एता मृगतृष्णिका हरिण हे नेदं पयो गम्यताम् ॥

सातलस्य.

६५४

त्यक्तं जन्मवनं तृणाङ्कुरवती मातेव मुक्ता स्थली
विस्रम्भस्थितिहेतवो न गणिता बन्धूपमाः पादपाः ।
बालापत्यवियोगदुःखविधुरा नापेक्षिता सा मृगी
मार्गन्तः पदवीं तथाप्यकरुणा व्याधा न मुञ्चन्त्यमी ॥

एतौ मुक्तापीडस्य

६५५

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां
पर्यस्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात् ।
व्याधानां शरगोचरादपि जवेनोत्प्लुत्य धावन्मृगः
कूपान्तः पतितः करोति विधुरे किं वा विधौ पौरुषम् ॥

६५६

स्वैरी भ्राम्यसि नाथ काम्यसि परद्वाराणि नोत्ताम्यसि
नाढ्यानामनिमित्तकोपकुटिलालापं मुखं पश्यसि ।
मुञ्चस्येकमपि क्षणं प्रकटितप्रेमां च न प्रेयसीं
हे सारङ्ग तवातिसुन्दरमिदं केनोपदिष्टं व्रतम् ॥

कस्यापि.

६५७

स्वच्छन्दं हरिणेन या विहरता दैवात्समासादिता
भङ्गप्रस्रुतदुग्धबिन्दुबिसरा शालेर्नवा मञ्जरी ।

निःश्वासानलदग्धकोमलतृणप्रख्यापितान्तर्व्यथ-
स्तामेव प्रतिवासरं मुनिरिव ध्यायन्वने शुष्यति ॥

धर्मकीर्तेः.

६५८

सारङ्गो न लतागृहेषु रमते नो पांसुले भूतले
नो रम्यासु वनोपकण्ठहरितच्छायासु शीतास्वपि ।
तामेवायतलोचनामनुदिनं ध्यायन्मुहुः प्रेयसीं
शैलेन्द्रोदरकंदरेषु गतधीः शृङ्गारिवेषः स्थितः ॥

६५९

शृङ्गेणाङ्गं मृगाणां कषति परिचयप्राप्तये निःस्पृहाणां
मन्दस्वच्छन्दचारी परिहरति भयादालयं यूथपस्य ।
दृष्टस्तिष्ठत्यलक्ष्यो झगिति निपतितैस्तत्कुरङ्गीकटाक्षैः
सारङ्गो दुःखमास्ते विधुरविधिवशादन्ययूथप्रविष्टः ॥

६६०

आदाय मांसमखिलं स्तनवर्जमङ्गा-
न्मां मुञ्च वागुरिक याहि कुरु प्रसादम् ।
अद्यापि घासकवलग्रसनानभिज्ञो
मन्मार्गवीक्षणपरस्तनयो मदीयः ॥

केषामपि.

६६१

पुरो रेवा पारे गिरिरतिदुरारोहशिखरः
सरः सव्ये वामे दवदहनदाहव्यतिकरः ।
धनुष्पाणिः पश्चाच्छबरहतको धावतितरां
न यातुं न स्थातुं हरिणशिशुरेष प्रभवति ॥

श्रीजयापीडस्य.

६६२

क्व क्रीडति क्व चरति क्व करोति वृत्तिं
वारि क्व नाम पिबति स्वपिति क्व नाम ।

इत्थं मृगं निरपराधमबाधमानं
व्याधोऽनुधावति वधाय धनुर्दधानः ॥

६६३

चन्द्रः सुधांशुरयमत्रिसुतो द्विजेशः
पुण्यैरवापि शरणाय मयेति तोषम् ।
मुग्धैणशाव भज मा त्यज पापमेनं ॥
मीनं प्रभुज्य सहसा कृतमेषभोगम् ॥

प॰ पाजकस्य.

---

## अथ करभाः

६६४

करभ यदि कदाचित्प्रभ्रमन्दैवयोगा-
न्मधुकरकुलतस्त्वं प्रापयेथा मधूनि ।
विरम विरम तेभ्यः सन्ति शष्पाण्यरण्ये
प्रथममुखरसास्ते शोषयन्त्येव पश्चात् ॥

कस्यापि.

६६५

विकचकुमुदैः फुल्लाम्भोजैः सरोभिरलंकृतां
मरकतमणिश्यामां शष्पैर्विहाय वनस्थलीम् ।
स्मरति करभो यद्वृक्षाणां चरन्मरुधन्वनां
परिचयरतिः सा दुर्वारा न सा गुणवैरिता ॥

जीवनागस्य.

६६६

करभदयिते यत्तत्पीतं सदुर्लभमेकदा
मधु वनगतं तस्यालाभे विरौषि किमुत्सुका ।
कुरु परिचितैः पीलोः पत्त्रैर्धृतिं मरुगोचरे
जगति सकले कस्यावाप्तिः सुखस्य निरन्तरा ॥

६६७

करभदयिते योऽसौ पीलुस्त्वया मधुलुब्धया
व्यपगतघनच्छायस्त्यक्तो न सादरमीक्षितः ।
चलकिसलयः सोऽपीदानीं प्ररूढनवाङ्कुरः
करभदयितावृन्दैरन्यैः सुखं परिभुज्यते ॥

६६८

करभ किमिदं दीर्घोच्छ्वासैः क्षिणोषि शरीरकं
विरम शठ हे कस्यात्यन्तं सखे सुखमागतम् ।
चर किसलयं स्वस्थः पीलोर्विमुञ्च मधुस्पृहां
पुनरपि भवान्कल्याणानां भविष्यति भाजनम् ॥

केषामपि.

६६९

करभ रभसात्क्रोष्टुं वाञ्छस्यहो श्रवणज्वरः
शरणमथवानृज्वी दीर्घा तवैव शिरोधरा ।
पृथुगलबिलावृत्तिश्रान्तोच्चरिष्यति वाङ्मुखा-
दियति समये को जानीते भविष्यति कस्य किम् ॥

भट्टभल्लटस्य.

६७०

तथा संतुष्टः सञ्जलतृणशमीपीलुबदरै-
श्चरन्स्वस्थोऽरण्ये करभशिशुकः शोकरहितः ।
कृतो मध्वास्वादप्रवणहृदयो मुग्धविधिना
यथा नान्यद्भुङ्क्ते न पिबति न शेते न रमते ॥

६७१

यस्यासीन्नवपीलुपत्रबदरग्रासोऽपि संतुष्टये
दीर्घाध्वन्यनुगम्यते न पदवी यस्य स्वयूथ्यैरपि ।
सोऽयं संप्रति याति बालकरभः क्षीणोद्यमः क्षामतां
मन्ये नूनमनेन दैवहतकेनास्वादितं भ्रामरम् ॥

६७२

पीलूनां हि फलं कषायरहितं रोमन्थयित्वा मरौ
शाखाग्रं यदखादि चारु करभीवक्त्रार्पितं प्रेमतः ।
तत्स्मृत्वा करभेन खेदविधुरं दीर्घं तथा कूजितं
प्राणानामभवत्तदेव सहसा प्रस्थानतूर्यं यथा ॥

एते केषांचित्.

६७३

क्रमेलकं निन्दति कोमलेच्छुः
क्रमेलकः कण्टकलम्पटस्तम् ।
प्रीतौ तयोरिष्टभुजोः समायां
मध्यस्थता नैकतरोपहासः ॥

नैषधकर्तुः

---

## अथ खगाः

तत्रादौ

## मयूराश्चातकाश्च

६७४

एक एव खगो मानी वने वसति चातकः ।
पिपासितो वा म्रियते याचते वा पुरंदरम् ॥

कस्यापि.

६७५

अयि चकितमुग्धचातक मरुभुवि धावसि मुधा किमुद्ग्रीवम् ।
ग्रीष्मे दवाग्निवलितस्तापिच्छोऽयं न विद्युत्वान् ॥

भट्टवासुदेवस्य.

६७६

पिपासुरप्येव जलं शिखण्डी
प्रतीक्षते प्राणसमां पिबन्तीम् ।
नूनं प्रियास्नेहनिबद्धदृष्टिः
स्वल्पं पयः पश्यति निम्नगासु ॥

६७७

अत्युन्नतिव्यसनिनः शिरसोऽधुनैष
स्वस्यैव चातकशिशुः प्रणयं विधत्ताम् ।

अस्यैतदिच्छति नहि प्रततासु दिक्षु
ताः स्वच्छशीतमधुराः क्व नु नाम नापः ॥

भट्टभल्लटस्य.

६७८

केकाः कला वनभुवस्तिलकायमानो
रम्यः कलापमहिमैष शिखण्डिनोऽस्य ।
दुर्लक्षणं ननु विहायसि वायसादि-
क्षुण्णेऽप्ययं चटकतुल्यगतिर्न जातः ॥

भा° जयवर्धनस्य.

६७९

नीलाब्जपुञ्जरजसारुणितान्विमुच्य
स्वच्छान्सुधाधिकरसानपि वारिराशीन् ।
यच्चातकः पिबति वारिधरोदबिन्दू-
न्मन्ये तदानतिभयाच्छिरसोऽभिमानी ॥

६८०

भूमिस्थमम्बु यदि चातक पातुमिच्छेः
कण्ठव्रणं प्रकटयेस्तदयोग्यतां च ।
दिव्याम्बुपाननियमस्तव मोहयेत्कं
दोषोऽपि संवृतिमतां भजते गुणत्वम् ॥

भर्तृसारस्वतस्य.

६८१

किं नैव सन्ति नवतामरसावतंसा
हंसावलीवलयिनो जलसन्निवेशाः ।
कोऽपि ग्रहो गुरुरयं बत चातकस्य
पौरंदरीं यदभिवाञ्छति वारिधाराम् ॥

६८२

किं दूरेण पयोधरा उपरि किं नान्ये रटन्तः श्रुता
निन्द्याः पापतया स्वकुक्षिषु गताः किं नाम पक्षाः क्षयम् ।

रम्यं वा गगने न किं विहरणं किं तूग्रकाकावली–
पर्यायप्रतिपत्तिलाघवभयाद्भूमौ स्थिता बर्हिणः ॥

केषामपि.

६८३

नो ताण्डवेन नयनामृतनिर्झरेण
केकारवेण न च कर्णरसायनेन ।
बर्हेण चापि सुरचापरुचा तवाय-
मोतुर्न तुष्यति शिखिन्वधमन्तरेण ॥

कस्यापि.

६८४

चातक तात कियद्भवता पातकमतुलमकारि ।
नवजलदादपि चञ्चुपुटे यत्तव न पतति वारि ॥

६८५

जलकणवितरणरहितः प्रकटितधवलितवेषः ।
चातक रटसि वृथा किं जलदः शारद एषः ॥

चर्पटीनाथस्य.

६८६

सन्ति कूपाः स्फुरद्रूपाः परितः सरितः शुभाः ।
तथापि चातकस्यैकः फलदो जलदोदयः ॥

६८७

केकानिभाद्घटयसे पटुचाटुकानि
चञ्चत्कलापमपि नृत्यसि रञ्जनाय ।
हे चातक प्रयतसे जलदं प्रतीत्थं
बिन्दुं जलस्य लभसे न च लज्जसे च ॥

६८८

वाहत्वमीश्वरसुतस्य विधाय बर्हि-
न्प्रम्लायितः स निजपक्षकलाप एव ।
नाराधितः स भवता पुरुषोत्तमः किं
यस्ते तृषं प्रशमयेत्कचमेघवर्षैः ॥

## अथ हंसाः सारसाश्च

६८९

वसतोऽतिशयप्रीत्या मानसोचितसंस्थितेः ।
पल्वलाम्भसि हंसस्य हंसतैव विकल्प्यते ॥

६९०

पिबन्ति मधु पद्मेभ्यो भृङ्गाः केसरधूसराः ।
हंसाः शैवालमश्नन्ति धिग्दैवमसमञ्जसम् ॥

कयोरपि.

६९१

यदि नाम दैवयोगाज्जगदसरोजं कदाचिदपि जातम् ।
अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ॥

भट्टवासुदेवस्य.

६९२

कटु रटति निकटवर्ती वाचाटष्टिट्टिभः पटुर्यत्र ।
अपसरणमेव शरणं मौनं वा तत्र हंसस्य ॥

६९३

अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् ।
रमते न मरालस्य मानसं मानसं विना ॥

कस्यापि.

६९४

क्षुधितोऽपि पद्मखण्डे जहाति रजसावृतं हि किंजल्कम् ।
गुणिनि कृतपक्षपातो बिसं तु बहु मन्यते हंसः ॥

भट्टसूक्तिकोशकस्य.

६९५

तरलयसि दृशं किमुत्सुका-
मकलुषमानसवासलालिते ।
अवतर कलहंसि वापिकां
पुनरपि यास्यसि पङ्कजालयम् ॥

भट्टबाणस्य.

६९६

भृङ्गाङ्गनाजनमनोहरहारिगीत-
राजीवरेणुकणकीर्णपिशङ्गतोयाम् ।
रम्यां हिमाचलनदीं प्रविहाय हंस
हे हे हताश वद कां दिशमुत्सुकोऽसि ॥

६९७

हे हंस मेलितपयःसलिलं विवेक्तुं
शक्तस्य संप्रति मतिः क नु तेऽद्य याता ।
कासारवारिणि कलां पतितां यदिन्दो-
रादातुमिच्छसि बिसाङ्कुरवाञ्छया त्वम् ॥

६९८

शीतांशुशेखरशिरोरुहसंश्रितानि
पुण्यानि पावितजगन्ति मनोरमाणि ।
भ्रान्त्वा चिरं सुरसरित्सलिलानि दैवा-
ल्लब्धानि हातुमिव वाञ्छसि नासि हंसः ॥

६९९

स्थित्वा चिरं नभसि निश्चलतारकेण
मातङ्गसङ्गकलुषां नलिनीं निरीक्ष्य ।
उत्पन्नमन्युपरिघर्घरनिःस्वनेन
हंसेन साश्रु परिवृत्य गतं न लीनम् ॥

७००

येनोज्झितं सहचरीवदनोपनीतं
रम्यं मृणालशकलं हिमशङ्खशुभ्रम् ।
सोऽयं खगो हतविधे तव चेष्टितेन
शेवालनाललवलम्पटतां विधत्ते ॥

७०१

रटसि कटु किमुच्चैर्वायस स्पर्धया मे
विहगहतक विष्ठारक्तवक्त्रान्तरालः ।

विततधवलपक्षाक्षेपविक्षोभिताम्भाः
कमलवनविहारी सारसोऽहं न काकः ॥

७०२

हंसोऽध्वगः श्रममपोहयितुं दिनान्ते
कारण्डकाकबकभासवनं प्रविष्टः ।
मूकोऽयमित्युपहसन्ति लुनन्ति पक्षा–
न्नीचाश्रयो हि महतामवमानभूमिः ॥

एते केषामपि.

७०३

क्व कठिनमहो पीलोः पत्त्रं मृदुः क्व बिसाङ्कुरः
क्व कटु लवणं कौपं चाम्भः क्व तामरसासवः ।
क्व कुसुमरजो हृद्यं रूक्षाः क्व चोषरपांसवः
क्व मरुविषयो ध्वाङ्क्षक्षेत्रं क्व हंस भवादृशाः ॥

श्रीभण्डकस्य.

७०४

भो राजहंस किमिति त्वमिहागतोऽसि
योऽसौ बकः स इह हंस इति प्रतीतः ।
तद्गम्यतां त्वरितमेव ततः प्रभाते
यावद्वदन्ति बक एष न मूढलोकाः ॥

७०५

अये वापीहंसा निजवसतिसंकोचपिशुनं
कुरुध्वं मा चेतो वियति वहतो वीक्ष्य विहगान् ।
अमी ते सारङ्गा भुवनमहनीयव्रतभृतो
निरीहाणामेषां तृणमिव भवन्त्यम्बुनिधयः ॥

७०६

तरौ तीरोद्भूते क्वचिदपि दलाच्छादिततनुः
पतद्धारासारां गमय विषमां प्रावृषमिमाम् ।
निवृत्तायां त्वस्यां सरसि सरसोत्फुल्लनलिने
स एव त्वं हंसः पुनरपि विलासास्त इह ते ॥

७०७

गतं तद्गाम्भीर्यं जलमपि वृतं जालकशतैः
सखे हंसोत्तिष्ठ प्रथममसुतो दग्धसरसः ।
स यावत्पङ्काम्भःकलुषितवपुर्भूरिविलप-
न्न काको वाचाटश्चरणयुगलं मूर्ध्नि कुरुते ॥

७०८

स्पृशति न बिसं चञ्च्वा भूयस्तया सह खण्डितं
पिबति न जलं याति स्वप्तुं न शेवलजालकम् ।
कमलकलिकाभङ्गक्रीडां करोति न सारसः
क्वणति करुणं शोकग्रस्तः प्रियाविरहाकुलः ॥

७०९

सरसि बहुशस्ताराछायां दशन्परिवाञ्चितः
कुमुद विटपान्वेषी हंसो निशास्वविचक्षणः ।
दशति न पुनस्ताराशङ्की दिवापि सितोत्पलं
कुहकचाकितो लोकः सत्येऽप्यपायमपेक्षते ॥

एते केषामपि.

७१०

मुक्ताभानि पयांसि भङ्गविलसद्दुग्धा बिसग्रन्थयः
स्फीतास्तामरसासवा विहरणक्रीडासहं सैकतम् ।
सन्त्येव प्रतिदेशमत्रविषमे हे हंस पङ्काङ्किते
धृष्टोत्कुष्टबके जरत्सरसि ते कोऽयं निवासग्रहः ॥

श्रीशिवस्वामिनः.

७११

आपूर्येत पुनः स्फुरच्छफरिकासारोर्मिभिर्वारिभि-
र्भूयोऽपि प्रविभज्यमाननलिनं पश्येम तोयाशयम् ।
इत्याशाशततन्तुबद्धहृदयो नक्तंदिनं दीनधीः
शुष्यत्यातपशोषितस्य सरसस्तीरे जरत्सारसः ॥

७१२

तावद्दोलितपङ्कजच्युतरजःपिङ्गाङ्गरागोज्ज्वलो
यः शृण्वन्कलकूजितं मधुलिहां संजातहर्षोत्सवः ।
कान्ताचञ्चुपुटापवर्जितबिसग्रासग्रहेऽप्यक्षमः
सोऽयं संप्रति हंसको मरुगतः कष्टं तृणं वाञ्छति ॥

७१३

यां स्मृत्वा सहसैव मानससरस्त्यक्त्वा विशेषार्थिन-
स्तामेवोत्सुकचेतसः कमलिनीं दृष्ट्वा बकाध्यासिताम् ।
लीयन्ते विगताभिमानलघवस्तत्रैव भूयोऽपि ये
हंसास्ते न भवन्ति हंसचपलाः प्रायो बका एव ते ॥

केषामपि·

७१४

यामालिङ्ग्य बका रटन्ति कटुकं दीर्घोच्छ्वसत्कंधरा
यस्यामंसतटावघट्टितजलं वल्गन्त्यमी मद्गवः ।
या शश्वन्मलिनात्मकैरपि बकैर्नक्तंदिनं सेव्यते
सा हंसेन मनस्विना कमलिनी युक्तं यदि त्यज्यते ॥

अर्थवर्मणः ·

७१५

रूप हारि मनोहरा सहचरी पानाय पाद्मं मधु
क्रीडा चाप्सु सरोरुहेषु वसतिस्तेषां रजो मण्डनम् ।
वृत्तिः साधुमता बिसेन सुहृदश्चारुस्वनाः षट्पदाः
सेवादैन्यविमाननाविरहितो हंसः सुखं जीवति ॥

यशःस्वामिनः

७१६

मत्स्या अपि हि जानन्ति क्षीरनीरविवेचनम् ।
प्रसिद्धं राजहंसानां यशः पुण्यैरवाप्यते ॥

७१७

क्रुद्धोलूकनखप्रपातविगलत्पक्षा अपि स्वाश्रयं
ये नोज्झन्ति पुरीषपुष्टवपुषस्ते केचिदन्ये द्विजाः ।

ये तु स्वर्गतरङ्गिणीबिसलतालेशेन संवर्धिता
गङ्गानीरमपि त्यजन्ति कलुषं ते राजहंसाः कुतः ॥

कस्यापि.

---

## अथ कोकिलाः

७१८

समुद्गिरसि वाचः किं पुंस्कोकिल सुकोमलाः ।
श्वभ्रेऽस्मिञ्जडपाषाणगुरुनिर्घोषभैरवे ॥

भा० अमृतदत्तस्य.

७१९

काकैः सह विवृद्धस्य कोकिलस्य कला गिरः ।
खलसङ्गेऽपि नैष्ठुर्य कल्याणप्रकृतेः कुतः ॥

तक्षकस्य.

७२०

श्रोत्रोत्सवं तव कलं कलकण्ठ कोऽत्र
नादं शृणोति रतिविग्रहसंधिदूतम् ।
दावाग्निदग्धघनपादपकोटरान्त--
राविर्भवत्कटुरवासु वनस्थलीषु ॥

कस्यापि.

७२१

मूकीभूय तमेव कोकिल मधुं बन्धुं प्रतीक्षस्व हे
हेलोल्लासितमालतीपरिमलामोदानुकूलानिलम् ।
यत्रैतास्तव सूक्तयः सफलतामायान्त्यमी तूल्लस-
त्पांसूत्तम्भभृतो निदाघदिवसाः संतापसंधायिनः ॥

भट्टवृद्धेः.

७२२

भ्रातः कोकिल कूजितैरलमलं नार्घन्ति यस्माद्गुणा-
स्तूष्णीमास्व विशीर्णपर्णनिचयच्छन्नः कचित्कोटरे ।
उद्यानद्रुमवाटिकाकटुरटत्काकावलीसंकुलः
कालोऽयं शिशिरस्य संप्रति सखे नायं वसन्तोत्सवः ॥

७२३

क्वचिज्झिल्लीनादः क्वचिदतुलकाकोलकलहः
क्वचित्कङ्काराव: क्वचिदपि कपीनां कलकलः ।
क्वचिद्घोरः फेरुध्वनिरयमहो दैवघटना
कथंकारं तारं क्वणतु चकितः कोकिलयुवा ॥

## अथ भ्रमराः

७२४

केतकीकुसुमं भृङ्गः पीडयमानोऽपि सेवते ।
दोषाः किं नाम कुर्वन्ति गुणापहृतचेतसः ॥

कस्यापि.

७२५

कृत्वापि कोषपानं भ्रमरयुवा पुरत एव कमलिन्याः ।
अभिलषति बकुलकलिकां मधुलिहि मलिने कुतः सत्यम् ॥

७२६

मदनमवलोक्य निष्फलमनित्यतामपि च बन्धुजीवानाम् ।
गुरुमुपगम्य भ्रमरः संप्रति जातो जपासक्तः ॥

७२७

भ्रमर भ्रमता दिगन्तराणि
क्वचिदासादितमीक्षितं श्रुतं वा ।
वद सत्यमपास्य पक्षपातं
यदि जातीकुसुमानुकारि पुष्पम् ॥

७२८

कमलं भवनं रजोऽङ्गरागो
मधु पानं मधुराः प्रियाप्रलापाः ।
शयनं मृदु केसरोपधानं
भ्रमरस्याम्भसि का न राजलीला ॥

७२९

पतितमुत्पतितं स्थितमक्रियं
सकरुणं क्वणितं गतमागतम् ।
कमलिनीमलिना तुहिनाहतां
नहि तदस्ति विलोक्य न यत्कृतम् ॥

कस्यापि.

७३०

कमलिनीमलिनी दयितं विना
न सहते सह तेन निषेवितम् ।
तमधुना मधुना निहितं हृदि
स्मरति सा रतिसारमहर्निशम् ॥

भट्टरुद्रटस्य.

७३१

मदं न लिप्सेत शिलीमुखो यदि
द्विपान्न कर्णाग्रनिपातमाप्नुयात् ।
परोपसर्पी सुखलेशलिप्सया
नरो भवत्येव पराभवास्पदम् ॥

७३२

मधुकर बहुशस्त्वया निरस्ताः
कुसुमलतास्तृणवत्सुपुष्पिताग्राः ।
फलमनुभव कण्टकावृताभ्य-
स्तदिदमपत्रप केतकीलताभ्यः ॥

७३३

फुल्लेषु यः कमलिनीकमलोदरेषु
चूतेषु यो विलसितः कलिकान्तरस्थः ।
पश्याद्य तस्य मधुपस्य शरद्व्यपाये
कृच्छ्रेण वेणुविवरे दिवसाः प्रयान्ति ॥

७३४

पुष्पासवं सुरभि गन्धिरजोऽङ्गरागः
पीत्वा लतासु मधुपः कमले निषण्णः ।
बद्धोऽधुना शशिकरैः करुणं विरौति
संतोषहीनमिह कं न भजन्त्यनर्थाः ॥

एते केषांचित्.

७३५

अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धाननामरजसं कलिकामकाले
बालां कदर्थयसि किं नवमालिकायाः ॥

विकटनितम्बायाः.

७३६

ऐरावणाननमदाम्बुकणावपात-
संसक्ततामरसरेणुपिशङ्गिताङ्गः ।
चण्डानिलाहततुषारविशीर्णपक्षः
क्षीणः क्षितौ मधुकरो विवशोऽत्र शेते ॥

भट्टनायकस्य.

७३७

सोत्कः परिभ्रमसि किं व्यवपातिधैर्यः
कूजन्द्विरेफ करुणं कुसुमासवार्थी ।
अन्यासु पादपलतासु धृतिं बधान
भग्ना हि सा कुसुमिता सहकारवल्ली ॥

धर्मकीर्तेः.

७३८

स्वामोदवासितसमग्रदिगन्तराला
रक्ता मनोहरमुखा सुकुमारमूर्तिः ।
सेव्या सरोजकलिका तु यदैव जाता
नीतस्तदैव विधिना मधुपोऽन्यदेशम् ॥

कस्यापि.

७३९

जात्युज्ज्वले मधुरकोमलवाग्विलासौ
द्वौ पुष्करे मधुकरौ युगपत्प्रविष्टौ ।
एकस्तयोर्मधुभराकुलपूर्णदेहः
कष्टे विधौ न रजसापि युतो द्वितीयः ॥

चाटस्य॰

७४०

मधुकरगणश्चूतं त्यक्त्वा गतो नवमालिकां
पुनरपि गतो रक्ताशोकं कदम्बतरुं ततः ।
तदपि सुचिरं स्थित्वा तेभ्यः प्रयाति सरोरुहं
परिचितगुणद्वेषी लोको नवं नवमीहते ॥

७४१

लिखितकमले सौन्दर्येण प्रकामहृतात्मना
किमिव न कृतं तत्र भ्रान्त्वा मधुस्पृहयालिना ।
अधिगतरसः सोऽभूत्तस्मान्मनागपि नाल्पधी-
र्धुरि तु लिखितस्तृष्णान्धानां जनेन विवेकिना ॥

७४२

भ्रमति बकुले मन्दं कुन्दे न विन्दति निर्वृतिं
प्रकृतिसुरभौ रक्ताशोके न याति विशोकताम् ।
सुरभिकुसुमामोदोत्कण्ठापनीतमना वने
वहति तनुतामङ्गे भृङ्गः स्मरन्नवमालिकाम् ॥

७४३

स्पृशति शनकैश्चुम्बन्नङ्गैः करोति निपीडनं
चरणपतनं मुद्राभेदं विधातुमपीहते ।
समयमुचितं चित्तौत्सुक्यात्प्रतीक्षितुमक्षमो
मधुकरयुवा पुण्यैर्लब्ध्वा नवां नवमालिकाम् ॥

७४४

हिमोत्सन्नां दृष्ट्वा हतकमलनालां कमलिनीं
द्विरेफाः संवृत्ताः सपदि गजगण्डप्रणयिनः ।
अहो धिग्भूतानां प्रकृतिरियमप्रत्ययकरी
न कश्चित्क्षीणार्थे प्रथमगुणगन्धं गणयति ॥

७४५

किमामोदभ्रान्त्या भ्रमसि सुचिरं भृङ्ग ननु हे
न जानीषे तत्त्वं प्रतपतितरां ग्रीष्मसमयः ।
स्थितं शून्यं पुष्पैः प्रकटविटपं पश्य विपिनं
गतः सौरभ्याढ्यः प्रकृतिसुभगश्चैत्रविभवः ॥

७४६

केनाघ्रातमुदारमस्य कुसुमं कैश्चुम्बितं केसरं
पीतः केन रसोऽस्य केन रजसा चोद्वेल्लितं केन वा ।
हे हे मुग्धमधुव्रत व्रज जवादन्याँस्तरून्पुष्पिता-
नुत्तालेऽत्र वृथैव पिप्पलतरौ किं किंचिदासाद्यते ॥

७४७

प्रत्यग्रोऽत्र यथासुखं मधुरसः पातव्य इत्युत्सुक-
स्तृष्णाविभ्रमविप्रलब्धहृदयस्तत्त्वावबोधं विना ।
निर्विण्णोऽप्यफलश्रमो न विरमत्यालेख्यपद्माकरे
दुर्बुद्धिर्व्यसनी तथापि मधुपस्तृष्णाशयोद्भ्राम्यति ॥

७४८

यस्याः संगमवाञ्छया न गणिता वाप्यो विनिद्रोत्पला
यामालिङ्ग्य समुत्सुकेन मनसा यातः परां निर्वृतिम् ।
भग्नां तामवलोक्य चन्दनलतां भृङ्गेण यज्जीव्यते
धैर्यं नाम तदस्तु तस्य न पुनः स्नेहानुरूपं कृतम् ॥

७४९

येनामोदिनि केसरस्य मुकुले पीतं मधु स्वेच्छया
नीता येन निशा शशाङ्कधवला पद्मोदरे शारदे ।

भ्रान्तं येन मदप्रवाहमलिने गण्डस्थले दन्तिनां
सोऽयं भृङ्गयुवा करीरविटपे बध्नातु तुष्टिं कुतः ॥

केषामपि॰

७५०

मा भून्नाम सहामुनैव निधनं दैवात्कथंचित्पुन-
स्तृष्णा वा हतजीविते यदि तदा किं पुष्पशून्यं जगत् ।
येनैवोन्मथितः स एव दयितः पद्माकरो निर्दयं
दानाम्भःस्पृहयानुयात्यलिरहो लोलस्तमेव द्विपम् ॥

शङ्कुकस्य.

७५१

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरादिकिं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥

भट्टभल्लटस्य.

७५२

रे रे भृङ्ग मदान्धवारणचलत्कर्णानिलान्दोलन-
क्लेशक्लान्ततनो मुधैव भवता दुःखं किमित्यास्यते ।
उत्कूजत्समदद्विरेफवलयव्यालुप्तकोशश्रियः
सामोदाः प्रकटाशयाः प्रतिपदं सन्त्येव पद्माकराः ॥

सुखविष्णोः.

७५३

गन्धाढ्यां नवमालिकां मधुकरस्त्यक्त्वा गतो यूथिकां
तां त्यक्त्वापि गतः स चन्दनतरुं तस्मात्सरोजं गतः ।
बद्धस्तत्र निशाकरेण सुचिरं क्रन्दत्यसौ मन्दधीः
संतोषेण विना पराभवशतं प्राप्नोति लुब्धो जनः ॥

७५४

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पद्मिनी च ।

७६०

निजकुलोचितचेष्टितमात्मनो
यदपहाय यियाससि हंसताम् ।
बक चर व्रतमेव तथापि ते
फलति तत्तदिदं यततां नृणाम् ॥

भट्टगोविन्दराजस्य.

७६१

न कोकिलानामिव मञ्जु कूजितं
न लब्धलास्यानि गतानि हंसवत् ।
न बर्हिणानामिव चित्रपक्षता
गुणस्तथाप्यस्ति बके बकव्रतम् ॥

भा° श्रीजयवर्धनस्य.

७६२

तद्वैदग्ध्यं समुदितपयस्तोयतत्त्वं विवेक्तु-
मालापास्ते स च मृदुपदन्यासहृद्यो विलासः ।
आस्तां तावद्बक यदि तथा वेत्सि किंचिच्छुथाशां
तूष्णीमेवासितुमयि सखे त्वं कथं मे न हंसः ॥

भट्टभल्लटस्य.

७६३

कस्त्वं लोहितलोचनास्यचरणो हंसः कुतो मानसा-
त्किं तत्रास्ति सुवर्णपङ्कजवनान्यम्भः सुधासंनिभम् ।
मुक्ताशुक्तिरथास्ति शङ्खनिचयो वैदूर्यरोहाः क्वचि-
च्छम्बूकाः किमु सन्ति नेति च बकैराकर्ण्य हीहीकृतम् ॥

---

## अथ काकाः

७६४

तुल्यवर्णच्छदः कृष्णः कोकिलैः सह संगतः ।
केन विज्ञायते काकः स्वयं यदि न भाषते ॥

वाल्मीकेः.

७६५

आत्मरुतादपि विरुतं कुर्वाणाः स्पर्धया सह मयूरैः ।
किं जानन्ति वराकाः काकाः केकारवान्कर्तुम् ॥

कस्यापि-

७६६

कृष्णं वपुर्वहतु चुम्बतु सत्फलानि
रम्येषु संचरतु चूतवनान्तरेषु ।
पुंस्कोकिलस्य चरितानि करोतु नाम
काकः किल ध्वनिविधौ ननु काक एव ॥

भा° जयवर्धनस्य-

७६७

संप्राप्य कोकिलकुलैः कमनीयकान्तिः
कान्तस्वरैरपि बलात्खलु संनिकर्षम् ।
वैधुर्यभाजि हतवेधसि किं वराकः
काकः करोत्वनुकृतिं न ययौ यदेषाम् ॥

गोविन्दराजस्य-

७६८

इयं पल्ली भिल्लैरनुचितसमारम्भरसिकैः
समन्तादाक्रान्ता विषविषमबाणप्रणयिभिः ।
तरोरस्य स्कन्धे गमय समयं कीर निभृतं
न वाणी कल्याणी तदिह मुखमुद्रैव शरणम् ॥

७६९

किरति मुखगृहीतं भुक्तशेषं पुरीषं
विलिखति चरणाग्रैर्देवतानां शिरांसि ।
व्रजति च हतमानः साधुमूर्धस्वशङ्कः
किमिव न कुरुते खं प्राप्य काको वराकः ॥

७७०

दौर्भाग्यं वचसां तनोर्मलिनता चेष्टास्वहो चापलं
शङ्कायास्तदुपज्ञतैव विदिता वृत्तिस्त्ववाच्यैव सा ।

इत्थं दुष्कृतशाखिनः फलमिव स्फीतं तथाप्यातुरः
काकः कोकिललाञ्छनच्छविरुचा कष्टं मुहुर्मूर्छति ॥
वासुदेवस्य.

७७१

नृत्यन्तः शिखिनो मनोहरममी श्रव्यं पठन्तः शुका
वीक्ष्यन्ते न त एव खल्विह रुषा वार्यन्त एवाथवा ।
पान्थस्त्रीगृहमिष्टलाभकथनाल्लब्धान्वयेनामुना
संप्रत्येतदनर्गलं बलिभुजा मायाविना भुज्यते ॥

७७२

रे रे ध्वाङ्क्ष विरूक्षतास्तु वचसः काणाक्षिता क्षम्यते
लौल्यं नाम तवेति कात्र गणना भाण्ड्यं विभूषैव ते ।
सर्वं सोढमिदं स्वभावविहितं वह्नेरिवौष्ण्यं हि ते
यत्त्वेवं विगुणस्य कापि भवतो ग्रीवा न तत्सह्यते ॥

७७३

काकः कोकिलमुन्नमय्य कुरुते चूते फलास्वादनं
भुङ्क्ते राजशुकं निवार्य कुररः क्रीडापरो दाडिमम् ।
घूको बर्हिणमस्य शाखिशिखरे शेते सजानिः सुखं
हा जातं विपरीतमद्य विपिने श्येने परोक्षं गते ॥
कस्यापि.

७७४

किं केकीव शिखण्डमण्डिततनुः किं कीरवत्पाठकः
किं पुंस्कोकिलवत्स्वनेन मधुरः किं हंसवत्सद्गतिः ।
किं सामान्यशकुन्तशावक इव क्रीडाविनोदाकरः
काकः केन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥

७७५

उत्पत्तिर्मरुतां प्रभोर्युगदिने प्रख्याप्यविश्वोत्सवे
पुण्याहश्रुतिषु प्रसिद्धिरधिका पूर्णं वयः पौरुषम् ।
काकुत्स्थेन समं सपत्नकलहे दैवज्ञता तादृशी
काकस्तेन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥

७७६

आद्यः प्रवेशसमयः स कलेर्युगस्य
प्राप्तस्तिरस्कृतबहूदकहंससार्थः ।
आहूय सादरतया तपसोऽन्तिमेऽह्नि
काणो द्विजः प्रतिगृहं बत यत्र पूज्यः ॥

## अथ कीटमणयः

७७७

सूर्यादन्यत्र यच्चन्द्रेऽप्यर्थसंस्पर्शि तत्कृतम् ।
खद्योत इति कीटस्य नाम तुष्टेन केनचित् ॥

७७८

घनसंतमसमलीमसदशदिशि निशि यद्विराजसि तदन्यत् ।
कीटमणे दिनमधुना तरणिकरान्तरितचारुसितकिरणम् ॥

भल्लटस्य.

७७९

जर्जरतृणाग्रमदहन्सर्षपकणमप्रकाशयन्नूनम् ।
कीटत्वमात्मतन्त्रः खद्योतः ख्यापयन्भाति ॥

७८०

भ्राजिष्णवो नभसि भूरिहतान्धकार-
स्वल्पप्रभाः स्वतनुमात्रनिबद्धभासः ।
खद्योतकाः प्रकटतीव्रगुरुप्रभावा-
स्तावन्न सप्ततुरगः समुदेति यावत् ॥

किशोरकस्य.

७८१

युष्मादृशः कृपणकाः क्रिमयोऽपि यस्यां
भान्ति स्म संतमसमय्यगमन्निशासौ ।
सूर्यांशुदीप्रदशदिग्दिवसोऽधुनायं
भात्यत्र नेन्दुरपि कीटमणे किमु त्वम् ॥

७८२

इन्दुः प्रयास्यति विनङ्क्ष्यति तारकश्रीः
स्थास्यन्ति लीढतिमिरा न मणिप्रदीपाः ।
अन्धं समग्रमपि कीटमणे भविष्य-
त्युन्मेषमेष्यति भवानिति दूरमेतत् ॥

कयोरपि.

७८३

सत्त्वान्तःस्फुरिताय वा कृतगुणाध्यारोपतुच्छाय वा
तस्मै कातरमोहनाय महसो लेशाय मा स्वस्ति भूत् ।
यच्छायास्फुरणारुणेन खचता खद्योतनाम्नामुना
कीटेनाहितयापि जङ्गममणिभ्रान्त्या विडम्ब्यामहे ॥

भल्लटस्य.

---

## अथ वृक्षाः

७८४

प्रत्यग्रैः पर्णनिचयैस्तरुर्यैरेव शोभितः ।
जहाति जीर्णांस्तानेव किं वा चित्रं कुजन्मनः ॥

उपाध्यायोदयस्य.

७८५

यथापल्लवपुष्पाढ्या यथापुष्पफलर्द्धयः ।
यथाफलर्द्धिस्वारोहा हा मातः क्वागमन्द्रुमाः ॥

७८६

साध्वेव तद्विधावस्य वेधाः क्लिष्टो न यन्मुधा ।
स्वरूपाननुरूपेण चन्दनस्य फलेन किम् ॥

भल्लट्टस्य.

७८७

मया बदरलुब्धेन वृक्षाणामनभिज्ञया
वने कण्टकसादृश्यात्खदिरः पर्युपासितः ॥

७८८

महातरुर्वा भवति समूलो वा विनश्यति ।
नाङ्कुरप्रक्रियामेति न्यग्रोधकणिकाङ्कुरः ॥

७८९

पुष्पपत्रफलच्छायामूलवल्कलदारुभिः ।
धन्या महीरुहा येषां विमुखा यान्ति नार्थिनः ॥

७९०

पतत्यङ्गारवर्षे वा वाति वा प्रलयानिले ।
तालः स्तब्धतयारब्धस्तथैव सह नश्यति ॥

७९१

छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः ।
मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥

७९२

अगतीनां खलीकाराद्दुःखं नैवोपजायते ।
भवन्त्यशोकाः प्रायेण साङ्कुराः पादताडिताः ॥

केषामपि.

७९३

यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः ।
निजवपुषैव परेषां तथापि संतापमपहरति ॥

भट्टादित्यकस्य.

७९४

प्राप्ते वसन्तमासे वृद्धिं प्राप्नोति सकलवनराजिः ।
यन्न करीरे पत्रं तत्किं दोषो वसन्तस्य ॥

७९५

फलितघनविटपविघटितपटुदिनकरमहसि लसति कल्पतरौ ।
छायार्थी कः पशुरपि भवति जरद्वीरुधां प्रणयी ॥

भल्लटस्य.

७९६

फलकुसुमकिसलयोज्ज्वलविटपशतान्तरिततरणिकिरणौघे ।
मार्गतरौ निकटस्थे कः पथिकः क्लान्तिमनुभवति ॥

भा॰ अमृतदत्तस्य.

७९७

दूरीकृतस्वार्थलवा जनस्य
समुद्यता ये भुवि तापशान्त्यै ।
द्रुमास्त एवागतिका न विद्मः
प्रजापतेराशयलेशमत्र ॥

प्रकाशवर्षस्य.

७९८

चन्दने विषधरान्सहामहे
वस्तु सुन्दरमगुप्तिमत्कुतः ।
रक्षितुं वद किमात्मसौष्ठवं
संचिताः खदिर कण्टकास्त्वया ॥

भल्लटस्य.

७९९

ग्रथित एष मिथः कृतशृङ्खलो
विषधरैरधिरुह्य महाजडः ।
मलयजः सुमनोभिरनाश्रितो
यदत एव फलेन न युज्यते ॥

८००

यत्किंचनानुचितमप्युचितानुबन्धि
किं चन्दनस्य न कृतं कुसुमं फलं वा ।
लज्जामहे भृशमपक्रम एव यातु-
स्तस्यान्तिकं परिगृहीतबृहत्कुठारः ॥

भल्लटस्य.

८०१

हे बालचम्पकतरो तरुणीकपोल-
लावण्यचुम्बनसुखोचितचारुपुष्प ।
किं पुष्पितेन विजहीहि विकासहास-
मुद्दामपामरगणा मरुभूमिरेषा ॥

नरेन्द्रस्य.

८०२

अन्तःप्रतप्तमरुसैकतदह्यमान-
मूलस्य चम्पकतरोः क्व विकासचिन्ता ।
प्रायो भवत्यनुचितस्थितिदेशभाजां
श्रेयः स्वजीवपरिपालनमात्रमेव ॥

८०३

दौर्जन्यमात्मनि परं प्रथितं विधात्रा
भूर्जद्रुमस्य विफलत्वसमर्पणेन ।
किं चर्मभिर्निशितशस्त्रशतावकृत्तै-
राशां न पूरयति सोऽर्थिपरम्पराणाम् ॥

गोविन्दराजस्य.

८०४

किं कण्टकैकरसिकेन फलद्विषा किं
वैरस्यसीमनि किमु स्थिरकौतुकेन ।
छायाविलासविमुखेन सतां किमङ्ग
धात्रा खलेन खदिरद्रुम एष सृष्टः ॥

वामनस्य.

८०५

लब्धं चिरादमृतवत्किममृत्यवे स्या-
द्दीर्घं रसायनवदायुरुत प्रदद्यात् ।
एतत्फलं यदयमध्वगशापदग्धः
स्तब्धः फलं फलति वर्षशतेन तालः ॥

भल्लटस्य.

८०६

हे वृक्ष शोभित महाफलभारलक्ष्म्या
क्षुत्तापशान्तिजनकैकजगत्प्रसिद्ध ।
त्वत्तो मया कथमपीदमधो निरस्त-
मेकं फलं शकुनिखण्डितमल्पमाप्तम् ॥

कस्यापि.

८०७

अत्यन्तशीतलतया सुभगस्वभाव

सत्यं न कश्चिदपि ते तरुरस्ति तुल्यः ।

छायार्थिनामपि पुनर्विकटद्विजिह्व-

सङ्गेन चन्दन विषद्रुमनिर्विशेषः ॥

भा० अमृतदत्तस्य.

८०८

कथमियति वनान्ते कश्चिदेको न तादृ-

ग्वरवनतरुरुच्चैः पुष्पवल्लीफलाढ्यः ।

जगदसुखविधातुर्दग्धधातुर्नियोगा-

द्धवखदिरपलाशाः केवलं वृद्धिभाजः ॥

८०९

शाखासंततिसंनिरुद्धगगनाभोगस्य लब्ध्वा तरो-

श्छायां यस्य भवद्भिरेव शमिता घर्मापदोऽनेकशः ।

भोः पान्था ननु दृश्यतां विधिगतिस्तस्यैव कालक्षय-

प्रक्षीणस्य तलेऽद्य तप्तसिकताङ्गारैः परं दह्यते ॥

कयोरपि.

८१०

चित्रैर्यस्य पतत्त्रिभिर्दशदिशो भ्रान्त्वा समेतैः सुखं

विश्रान्तं शयितं प्रभुक्तमुषितं स्कन्धे फलैः प्रश्रिते ।

तस्यैवोन्मथितस्य दुष्टकरिणा मार्गद्रुमस्याधुना

कारीषाय कषन्ति शोषपरुषां गोपालबालास्त्वचम् ॥

शिवस्वामिनः.

८११

संतोषः किमशक्तता किमथवा तस्मिन्नसंभावना

शोभैवाथ च काननस्थितिरियं प्रद्वेष एवाथवा ।

आस्तां खल्वनुरूपया सफलया पुष्पश्रिया दुर्विधे

संबन्धोऽननुरूपयापि न कृतः किं चन्दनस्य त्वया ॥

८१२

सन्मूलः प्रथितोन्नतिर्घनलसच्छायः स्थितः सत्पथे
सेव्यः सद्भिरितीदमाकलयता तालोऽध्वगेनाश्रितः ।
पुंसः शक्तिरियत्यसौ स तु फलेदद्याथवा श्वोऽथवा
काले क्वाप्यथवा कदाचिदथवा नेत्यत्र वेधाः प्रभुः ॥

८१३

यज्जातोऽसि चतुष्पथे घनलसच्छायोऽसि किं छायया
संयुक्तः फलिनोऽसि किं यदि फलैः पूर्णोऽसि किं संनतः ।
हे सद्वृक्ष सहस्व संप्रति सखे शाखाशिखाकर्षण-
क्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥

भदन्तज्ञानवर्मणः.

८१४

सुस्कन्धस्य विसारिसौरभगुणाक्रान्ताखिलाशस्य ते
तन्वीचारुपयोधरान्तरकृतस्पर्शस्य गोप्याकृतेः ।
दोषः कोऽपि भुजंगसंगमकृतः प्रोद्भूत एषोऽधुना
येन त्वां परिहृत्य चन्दनतरो यान्त्यध्वगा दूरतः ॥

कस्यापि.

८१५

छिन्नस्तत्रसुहृत्स चन्दनतरुर्यूयं पलाय्यागता
भोगाभ्याससुखासिकाः प्रतिदिनं ता विस्मृतास्तत्र वः ।
दंष्ट्राकोटिविषोल्कया प्रतिकृतं तस्य प्रहर्तुर्न चे-
त्किं तेनैव सह स्वयं न निधनं याताः स्थ भो भोगिनः ॥

८१६

त्वन्मूले पुरुषायुषं गतमिदं कालेन संशुष्यतां
क्षोदीयांसमपि क्षणं परमतः शक्तिः कुतः प्राणितुम् ।
तत्स्वस्त्यस्तु विवृद्धिमेहि महतीमद्यापि का नस्त्वरा
कल्याणैः फलितासि तालविटपिन्पुत्रेषु पौत्रेषु वा ॥

एतौ भट्टभल्लटस्य.

८१७

छायास्यैव घना सुगन्धिरयमेवापन्नतापच्छिदा-
मग्रेऽस्यैव गुणग्रहः सगुणता किं चन्दनस्योच्यताम् ।
आ मूलात्पुनरेष बद्धवृतिभिर्व्यालैस्तथा दूषितो
जाने येन वरं धवोऽथ खदिरोऽप्यन्योऽथवा न त्वयम् ॥

थोआकस्य.

८१८

न श्लाघ्यानि फलानि पल्लवकृता छाया न वाञ्छापि सा
नो पुष्पं सुमनोहरं न विहगाः शब्दामृतस्यन्दिनः ।
काकव्रातपुरीषनिर्भरजरन्मूर्तेरशुद्धात्मनो
निःस्तब्धस्य तरोरधः कथमहो सृष्टोऽसि दुर्वेधसा ॥

८१९

नास्य स्वादु फलं न चारु कुसुमं न स्निग्धपर्णा लता
न च्छाया क्लमहारिणी न च कलक्वाणास्तथा पत्रिणः ।
एषोऽसौ खदिरद्रुमः किमथवा पान्थेन दृष्टस्त्वया
तत्किं पान्थ कठोरकण्टकमुखैर्गात्रक्षतार्थी भवान् ॥

भट्टवृद्धेः.

८२०

स्निग्धाः पल्लविनः प्रकामविटपव्याविद्धचण्डातपा
नम्राः स्वादुफलाः समाश्रितजनक्षुत्तापविच्छेदिनः ।
दग्धास्ते तरवः प्रयान्तु पथिकास्तेष्वेव मार्गेष्वमी
रूक्षाः कण्टकिनः ससर्पविवरा भूयः प्ररूढा द्रुमाः ॥

८२१

छाया नात्मन एव या कथमसावन्यस्य निष्प्रग्रहा
ग्रीष्मोष्मापदि शीतलस्तलभुवि स्पन्दोऽनिलादेः कुतः ।
वार्ता वर्षशते गते किल फलं भावीति वार्तैव सा
द्राघिम्णा मुषिताः कियच्चिरमहो तालेन बाला वयम् ॥

८२२

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकृतये मार्गस्थितस्यापि मे ॥

८२३

आमोदैर्मरुतो मृगाः किसलयैर्लम्बैस्त्वचा तापसाः
पुष्पैः षट्चरणाः फलैः शकुनयो घर्मार्दिताश्छायया ।
स्कन्धैर्गन्धगजाश्च विश्रमरुजाः शश्वद्विभक्तास्त्वया
प्राप्तस्त्वं द्रुम बोधिसत्त्वपदवीं सत्यं कुजाताः परे ॥

८२४

भ्राम्यद्भृङ्गभरावनम्रकुसुमश्च्योतन्मधूद्गन्धिषु
च्छायावत्सु तलेषु पान्थनिवहा विश्रम्य गेहेष्विव ।
नित्यं निर्झरवारिवारिततृषस्तृप्यन्ति येषां फलै-
स्ते नन्दन्तु फलन्तु यान्तु च परामत्युन्नतिं पादपाः ॥

८२५

हे हे मण्डितमार्ग मार्गविटपिश्लाघ्याः समाः शाश्वती-
र्व्याप्याावृणु दिक्तटानि विटपैः सालैश्च चुम्बाम्बरम् ।
मूले विश्रमणाशयैव लुठिता यत्र त्वया केवलं
घर्मार्तेः परिमोचिताः फलशतैर्यावद्वयं तर्पिताः ॥

८२६

वृद्धिर्यस्य तरोर्मनोरथशतैराशावता प्रार्थिता
जातोऽसौ सरसः प्रवासिफलदः सर्वाश्रितोऽपाश्रयः ।
नानादेशसमागतैरविदितैराक्रान्तमन्यैः खगै-
स्तं लब्धावसरोऽपि वृद्धशकुनिर्दूरे स्थितो वीक्षते ॥

८२७

दावाग्निप्लोषदुःखं खरपवनजलक्लेशमर्काच्च तापं
मातङ्गाकर्षणानि व्यसनमपि गुरु प्राप्तवन्तोऽपि वज्रात् ।

दारुच्छायाफलानि त्वचमपि कुसुमं मञ्जरीः पल्लवान्वा
नार्थिभ्यो वारयन्ति प्रतिदिवसमहो साधु वृत्तं तरूणाम् ॥

८२८

हंसाः पद्मवनाशया बलिभुजो गृध्राश्च मांसाशया
पान्थाः स्वादुफलाशया मधुलिहः सौरभ्यगन्धाशया ।
दूरान्निष्फलरक्तपुष्पनिचयैर्निःसार रथ्योन्नते
रे रे शल्मलिपादप प्रतिदिनं के न त्वया वञ्चिताः ॥

८२९

भ्रातर्भीममरुभ्रमश्रमशमव्यापारपारंगमं
मत्वा चन्दनपादपं पथिक मा विश्रान्तये शिश्रियः ।
एतस्यान्तिकवर्तिभिर्घनविषज्वालावलीभीषणै--
राश्वास्य स्मृतिशेषतां विषधरैर्नीताः कियन्तोऽध्वगाः ॥

८३०

उच्चैर्यो मधुपानलुब्धमनसां भृङ्गाङ्गनानां गणै-
रुद्गीतो रचितालयः खगकुलैर्देशान्तरादागतैः ।
आसीद्यश्च निषेवितोऽध्वगशतैर्ग्रीष्मोष्मतान्तिच्छिदे
सोऽयं संप्रति दुर्मदेन दलितश्छायातरुर्दन्तिना ॥

८३१

भुक्तं स्वादु फलं कृतं च शयनं शाखाग्रजैः पल्लवै-
स्त्वच्छायापरिशीतलं च सलिलं पीतं विनीतः क्लमः ।
विश्रान्तं सुचिरं ततोऽपि मनसा प्राप्ता परा निर्वृति-
स्त्वं सन्मार्गतरुर्वयं च पथिका भूयात्पुनः संगमः ॥

---

## अथ मेघाः

८३२

अस्त्येव भूभृतां मूर्ध्नि दिवि वा द्योततेऽम्बुदः ।
मरुद्भिर्भज्यमानोऽपि स किमेति रसातलम् ॥

८३३

अम्बुदः कृतपदो नभस्तले
तोयपूरपरिपूरितोदधिः ।
गोष्पदस्य भरणेऽप्यशक्तिमा-
नित्यसत्यमभिधीयते कथम् ॥

महर्षेः.

८३४

एतदत्र पथिकैकजीवितं
पश्य शुष्यति कथं महत्सरः ।
धिङ्मुधाम्बुधर रुद्धसद्गति-
र्वर्धिता किमिह हट्टवाहिनी ॥

प्रकाशवर्षस्य.

८३५

स्वार्थानपेक्षं जनतापशान्त्यै
नित्योदिताः सन्ति पयोमुचोऽमी ।
विवर्षिणस्तानवगृह्णते ये
सन्त्येव ते केऽपि महानुभावाः ॥

८३६

क्व दृष्टमन्धेन बलाहकेन
घ्रातुं गवा यन्न तृणं निघृष्टम् ।
महातरुर्बन्धुरिवाध्वगाना-
मायात्यवश्यायकणैर्दरिद्रः ॥

कस्यापि.

८३७

उत्तुङ्गशैलशिखराश्रयणेन केचि-
दुद्दामवीचिवलिताः सरितो भवन्ति ।
अन्ये पुनर्जलकणास्तृणलोष्टपाता-
दम्भोमुचां पयसि न क्षयमाप्नुवन्ति ॥

कस्यापि.

८३८

यत्रोषितोऽसि चिरकालमकिंचनः स-
न्नर्णःप्रतिग्रहधनग्रहणाधमर्णः ।
निर्लज्ज गर्जसि समुद्रतटेऽपि तत्र
धृष्टोऽधमस्तव समो घन नैव दृष्टः ॥

८३९

आस्यं निरस्य रसितैः सुचिरं विहस्य
गात्रान्तरेषु घन वर्षसि चातकस्य ।
तच्चञ्चुकोटिकुटिलायतकंधरस्य
प्राणात्ययोऽस्य भवतः परिहासमात्रम् ॥

जह्लणस्य.

८४०

आक्रम्योच्चैः शिरसि वसतिर्भूभृतामुन्नतानां
तोयादानं तदपि जलधेर्लोकसंतापशान्त्यै ।
दीर्घा छाया प्रकृतिमहति व्योम्नि चाभोगबन्धो
हे हे मेघ स्पृहयति न ते कः किलेत्थं व्रताय ॥

८४१

कृत्वा चुम्बनमम्बरेऽतिगहने विद्योत्य विद्युल्लता
जाड्यादूर्जितगर्जितेन बहुधा स्पर्धां च कृत्वा घनैः ।
तत्पश्चान्नयता रजोऽपि न शमं भूमौ घनेनामुना
हासायैव कृतं यथोन्नतिभृतः सर्वे चिरं लज्जिताः ॥

वृद्धेः.

८४२

साधूत्पातघनौघ साधु सुधियां ध्येयं धरायामिदं
कोऽन्यः कर्तुमलं तवैव घटते कर्मेदृशं दुष्करम् ।
सर्वस्यौपयिकानि यानि कतिचित्क्षेत्राणि तत्राशनिः
सर्वानौपयिकेषु दग्धसिकतारण्येष्वपां वृष्टयः ॥

८४३

भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः
पाठीनैः पृथुपङ्ककूटलुठितैर्यस्मिन्मुहुर्मूर्च्छितम् ।
तस्मिञ्छुष्कसरस्यकालजलदेनागत्य तच्चेष्टितं
येनाकण्ठनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥

दाक्षिणात्यस्य.

८४४

यद्भूभृतो लघुगुणैरपि बद्धमूल—
मापादितानि सहसैव तृणैः शिरांसि ।
अम्भोमुचः प्रचुरवर्षविशृङ्खलस्य
तच्चेष्टितं दुरवधारगतेर्जलस्य ॥

श्रीजयवर्धनस्य.

८४५

कृच्छ्राद्दत्ते विरलविरलान्वारिबिन्दून्प्रवृद्धो
गर्जत्येकः सरभसतरं पश्य तन्मात्रलाभात् ।
नृत्यत्यन्योऽप्यतुलमहिमश्लाघ्यभूमिर्न जाने
मध्यादाभ्यां विपुलहृदयश्चातकः किं नु मेघः ॥

कस्यापि.

८४६

गतास्ते जीमूताः स्फुरदलिकुलश्यामवपुषः
श्रिया येषां लोके स्थलजलविभागोऽप्यपहृतः ।
वृथा तृष्णान्धः किं भ्रमसि विधुरश्चातकशिशो
शरज्जीमूतोऽयं कुत इह पयोबिन्दुरपि ते ॥

विश्रान्तिवर्मणः.

८४७

पश्यामः किमयं विचेष्टत इति स्वल्पाभ्रसिद्धिक्रियै—
र्दर्पाद्दूरमुपेक्षितेन बलवत्कर्मेरितैर्मन्त्रिभिः ।
लब्धात्मप्रसरेण रक्षितुमथाशक्येन मुक्त्वाशनिं
स्फीतस्तावदहो घनेन रिपुणा दग्धो गिरिग्रामकः ॥

भट्टमल्लटस्य.

८४८

गर्जित्वा बहु संनिरुध्य गगनं प्रच्छाद्य दिङ्मण्डलं
संपाद्योद्दलितेन्द्रनीलशकलश्यामाभिरामं वपुः ।
प्राप्ते वारिधरागमेऽपि सलिलं तत्त्यक्तमम्भोमुचा
चञ्चूश्चातकपोतकस्य सकला सिक्ता न येन स्वयम् ॥

कस्यापि.

८४९

अत्रोत्पातघनेन मन्त्रिविकले शून्याम्बरव्यापिना
धृष्टस्वप्रकृतिक्रियासमुचिते ग्रामे तथा जृम्भितम् ।
रथ्याकर्दमवाहिनामतिशुचिस्वच्छात्मनामन्तरं
नाप्यज्ञायि जनैर्यथौघपयसां स्रोतोजलानामपि ॥

भट्टवृद्धेः.

८५०

रे मेघाः स्वशरीरदानगुरु किं बौद्धं यशो न श्रुतं
युष्माभिः किमु पारिजातचरितं नाकर्णितं वा क्वचित् ।
येनैतत्सुखलभ्यमम्बु ददतां युष्माकमुद्गर्जतां
नो लज्जाप्यभिजायतेऽतिरभसाद्व्योम्न्युद्धतं धावताम् ॥

कलशकस्य.

८५१

स्थाने वर्षति नैव गर्जति वृथा क्रान्तिं हरत्यञ्जसा
क्षेत्राणां परितापजर्जररुचां क्षेमंकरः क्ष्मातले ।
यद्यद्भद्रकसान्द्रतां हृदि दधात्यन्यत्करोत्युल्लस-
न्सन्मेघोऽयममोघदर्शनघनास्निग्धच्छविर्वर्धताम् ॥

८५२

नो गर्जत्यम्बुराशिस्त्रिजगदधिपतिप्रार्थितार्थप्रदान-
व्यापारस्फीतकीर्तिः स्फुरदनलशिखानर्घरत्नैकपूर्णः ।
तत्तोयस्तोकमात्रव्यपहृतविकृतिः प्राकृतोऽयं प्रकृत्या
शून्ये क्षिप्त्वाम्बु गर्जत्यगणितनिधनो वारिवाहः सगर्वम् ॥

एतावमृतवर्धनस्य.

## अथ समुद्रः

८५३

न पालयति मर्यादां वेलाख्यामम्बुधिस्तथा।
तृष्यतां नोपकर्तव्यमितीमामपरां यथा ॥

भा° अमृतदत्तस्य.

८५४

गवादीनां पयोऽन्येद्युः सद्यो वा दधि जायते ।
क्षीरोदधेस्तु नाद्यापि महतां विकृतिः कुतः ॥

८५५

यद्यपि स्वच्छभावेन दर्शयत्युदधिर्मणीन् ।
तथापि जानुदघ्नोऽयमिति चेतसि मा कृथाः ॥

८५६

यस्याम्बुकणिकाप्यास्ये न पतत्यर्थिनां क्वचित् ।
कष्टमम्भोनिधिः सोऽपि नदीन इति कथ्यते ॥

८५७

यातु नाशं समुद्रस्य महिमा स भुवि श्रुतः ।
वाडवः क्षुत्पिपासार्तो येनैकोऽपि न तर्पितः ॥

८५८

अमृतरसविसरवितरणमरणोत्तारितसुरे सति पयोधौ ।
कस्य स्फुरन्ति हृदये ग्रीष्मतडाका भुवि वराकाः ॥

एते केषांचित्.

८५९

यदयं शशिशेखरो हरो
हरिरप्येष यदीशिता श्रियः ।
अमरा अपि यत्सुरा अमी
तदिमास्तस्य विभूतिविप्रुषः ॥

रत्नाकरस्य.

८६०

क्षारतैव हि गुणस्तथास्ति ते
येन न व्रजति कश्चिदन्तिकम् ।
भीषणाकृति बिभर्षि यादसां
चक्रमर्णव किमर्थमग्रतः ॥

प्रकाशवर्षस्य.

८६१

अपास्य लक्ष्मीहरणोत्थवैरिता-
मचिन्तयित्वा च तदद्रिमन्थनम् ।
ददौ निवासं हरये महोदधि-
र्विमत्सरा धीरधियां हि वृत्तयः ॥

कस्यापि.

८६२

जितेन्दुभासो नयतां मणीनध-
स्तृणानि मूर्ध्ना बिभृतां जलेश्वरः ।
प्रभोर्न कश्चित्प्रभुरस्ति तत्त्वतो
रत्नानि रत्नानि तृणं तृणं पुनः ॥

पुण्यस्य.

८६३

ग्रीष्मं द्विषन्तु जलदागममर्थयन्तां
ते संकटप्रकृतयः कृपणास्तडागाः ।
अब्धेस्तु मुग्धशफरीचटुलाचलेन्द्र-
निष्कम्पकुक्षिपयसो द्वयमप्यचिन्त्यम् ॥

कस्यापि.

८६४

ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी
मुक्तौघः सिकता प्रवाललतिकाः शेवालमम्भः सुधा ।
तीरे कल्पमहीरुहाः किमपरं नामापि रत्नाकरो
दूरात्कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति ॥

कस्यापि.

८६५

आस्तां क्षमापहरणं जलधेर्जलेन
दूरे दवाग्निपरिदीपितमानसानाम् ।
एतावदस्तु यदि तोयकणैर्न जिह्वा
दन्दह्यते द्विगुणतां च न याति तृष्णा ॥

रत्नाकरस्य.

८६६

रत्नान्यमूनि मकरालय मावमंस्थाः
कल्लोलवेल्लितदृषत्परुषप्रहारैः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ।

भा° त्रिविक्रमस्य.

८६७

लज्जामहे वयमहो भृशमप्यनेके
सांयात्रिकाः सलिलराशिममी विशन्ति ।
स्कन्धाधिरोपिततदीयतटोपकण्ठ-
कौलेयकाम्बुदृतयो यदुदीर्णतृष्णाः ॥

प्रकाशवर्षस्य.

८६८

आ स्त्रीशिशुप्रथितयैष पिपासितेभ्यः
संरक्ष्यतेऽम्बुधिरपेयतयैव दूरात् ।
दंष्ट्रा करालमकरालिकरालिताभिः
किं भाययस्यपरमूर्मिपरम्पराभिः ॥

भल्लटस्य.

८६९

धिग्धिग्धिगम्बुधिममी निरपत्रपस्य
यस्याध्वगा मरुभुवीव नितान्ततान्ताः ।
तृड्दाहशुष्कगलनिर्गतदीर्घजिह्वा
दीना विवर्तितदृशोऽनुतटं प्रयान्ति ॥

८७०

निर्मथ्यते यदि सुरासुरसैन्यसंघै-
रापूर्यते यदि जलैर्जलदापगाभिः ।
पेपीयते च वडवामुखवह्निना चे-
न्न क्षुभ्यति स्म जलधिर्न तनुत्वमेति ॥

८७१

मैनाकादिभिरद्रिभिर्मघवतः संत्रस्य यत्रास्यते
चण्डार्चिर्भगवानुदेति च यतो यत्रास्तमभ्येति च ।
शेते क्वापि निलीय यस्य जगतां कुक्ष्येकदेशे पति-
र्गाम्भीर्यश्रियमस्य कस्तुलयितुं वारां निधेरर्हति ॥

८७२

उपकृतवता श्रीरत्नाभ्यां हरेः शशिलेखया
मनसिजरिपोः पीयूषेणाप्यशेषदिवौकसाम् ।
कथमितरथा तेन स्थेयं यशोभरमन्थरं
यदि न मथनायासं धीरः सहेत पयोनिधिः ॥

एते केषांचित्-

८७३

विषमभिमुखं मुक्तं रौद्रं दिशो दश संश्रिताः
शशितरुमणिप्रायैः प्रायः प्रलोभनमाहितम् ।
किमिव न कृतं मन्थारम्भे शठेन पयोधिना
तदपि निपुणैर्नास्य क्षान्तं सुरैरमृतं विना ॥

८७४

यदिह भवतो गाम्भीर्येण प्रयाति महत्तया-
प्यनुचितगुणारम्भः कालः किमेतदनन्तरम् ।
अयि जलनिधे किं कल्लोलैरलब्धसमाप्तिभि-
र्विरम सरितामेतत्तोयं न तेऽस्ति मनागपि ॥

एतौ शङ्कुकस्य-

८७५

समाश्रित्योत्सङ्गं विवृतवदनस्यास्य वसतः
क्षणेनैकस्यान्तर्ज्वलितवपुषो यत्क्षणमपि ।
न तृष्णामौर्वाग्नेरपनयति पुष्टेऽपि विभवे
नृशंसस्याम्भोधेर्व्रजतु विलयं सोऽस्य महिमा ॥

८७६

अहो बत सरित्पतेरिदमनार्यरूपं परं
यदुज्ज्वलरुचीन्मणीन्सुचिरचर्चितास्थागुणान् ।
जडैरनुपयोगिभिः परत एत्य लब्धास्पदैः
क्षिपत्यनिशमूर्जितैर्झगिति तन्मयत्वं गतः ॥

कयोरपि.

८७७

इहैकश्चूडालोऽभ्यजनि कलशाद्यस्य सकलैः
पिपासोरम्भोभिश्चुलुकमपि नो भर्तुमशकः ।
स्वमाहात्म्यश्लाघागुरुगहनगर्जाभिरभितः
कुषित्वा क्लिश्नासि श्रुतिकुहरमब्धे किमिति नः ॥

भल्लटस्य.

८७८

रूक्षं क्षारमपेयमत्र सलिलं लब्ध्वा परं तप्यते
व्यालग्राहभियावगाहनमपि स्वस्थेन नासाद्यते ।
तत्किं पान्थ पयोधिनामनि मरौ तृष्णाविमूढो भवा-
नन्तर्निह्नुतिनाशितामलमणिव्राते मुधा धावसि ॥

वृद्धेः.

८७९

सर्वासां त्रिजगत्यपामियमसावाधारता तावकी
प्रोल्लासोऽयमसौ तवाम्बुनिलये सेयं महासत्त्वता ।
सेवित्वा बहुभङ्गभीषणतनुं त्वामेव वेलाचल-
ग्रावस्रोतसि पाप तापकलहो यत्क्वापि निर्वाप्यते ॥

भल्लटस्य.

८८०

कल्लोलैर्विकिरत्वसौ गिरिवरान्वेलाविलासोत्थितैः
शब्दैर्वा बधिरीकरोतु ककुभो धत्तां च विस्तीर्णताम् ।
पान्थानां रवितापतप्तवपुषां तृष्णातिरेकच्छिदः
किं साम्यं प्रतनोः करोतु सरसोऽप्यब्धिः कृताडम्बरः ॥

८८१

दत्तं येन सुधानिधानमसमं सत्त्वाधिकेनार्थिने
श्रीवासोऽपि महामणिर्विधुरसौ कल्पद्रुमो गौस्तथा ।
शापात्क्षारजलस्तथापि जलधिः प्राप्तायशा इत्यहो
लोकोऽयं तृणवद्गुणं विगणयन्दोषग्रहैकाग्रधीः ॥

एतौ कलशकस्य ।

८८२

हा कष्टं तटवासिनोऽपि विफलप्राग्भारमालोक्य मा-
मन्यत्रैव पिपासवः प्रतिदिनं गच्छन्त्यमी जन्तवः ।
इत्थं व्यर्थजलातिभारवहनप्रोद्भूतखेदादिव
स्वां मूर्तिं वडवानले जलनिधिर्मन्ये जुहोत्यन्वहम् ॥

८८३

मर्यादापरिपालनेन महतां क्षौणीभृतां रक्षणा
द्विश्रान्त्या मधुसूदनस्य सुचिरं यत्किंचिदासादितम् ।
गाम्भीर्योचितमात्मनो जलधिना मन्थव्यथासंभ्रमा-
द्देवेष्वर्पयतामृतं द्रुतमहो सर्वं तदुत्पुंसितम् ॥

८८४

आश्चर्यं वडवानलः स भगवानाश्चर्यमम्भोनिधि-
र्यत्कर्मातिशयं विचिन्त्य मनसः कम्पः समुत्पद्यते ।
एकस्याश्रयघस्मरस्य पिबतस्तृप्तिर्न जाता जलै-
रन्यस्यापि महात्मनो न वपुषः स्वल्पोऽपि जातः श्रमः ॥

८८५

नोद्वेगं यदि यासि यद्यवहितः कर्णं ददासि क्षणं
त्वां पृच्छामि यदम्बुधे किमपि तन्निश्चित्य देह्युत्तरम् ।

नैराश्यानुशयातिमात्रनिशितं निःश्वस्य यद्दृश्यसे
तृष्यद्भिः पथिकैः कियत्तदधिकं स्यादौर्वदाहाद्दतः ॥

८८६

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनां शिखरिणां गणाः शेरते ।
इतश्च वडवानलः सह समस्तसंवर्तकै-
रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥

८८७

वैकुण्ठाय श्रियमभिनवं शीतभानुं भवाय
प्रादादुच्चैःश्रवसमपि वा वज्रिणे तत्क गण्यम् ।
तृष्णार्ताय स्वमपि मुनये यद्ददाति स्म देहं
कोऽन्यस्तस्माद्भवति भुवनेष्वम्बुधेर्बोधिसत्त्वः ॥

८८८

रत्नोज्ज्वलाः प्रविकिरल्लँहरीः समीरै-
रब्धिः क्रियेत यदि रुद्धतटाभिमुख्यः ।
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां
दातुर्मनागपि न तस्य तु दातृतायाः ॥

८८९

अन्तर्ये सततं लुठन्त्यगणितास्तानेव पाथोधरै-
रात्तानापततस्तरङ्गवलयैरालिङ्ग्य गृह्णन्नसौ ।
व्यक्तं मौक्तिकरत्नतां जलकणान्संप्रापयत्यम्बुधिः
प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते स्वामिभिः ॥

कल्हणस्य.

८९०

स्वस्त्यस्तु विद्रुमलतासुमनोमणिभ्यः
कल्याणिनी भवतु मौक्तिकशुक्तिपङ्क्तिः ।
प्राप्तं मया सकलमेव फलं पयोधे-
र्यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥

८९१

आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥

---

## अथ मणयः

८९२

कालप्राप्तं महारत्नं यो न गृह्णात्यबुद्धिमान् ।
अन्यहस्तगतं दृष्ट्वा पश्चात्स परितप्यते ॥

अमरुकस्य.

८९३

भिद्यतेऽनुप्रविश्यान्तर्यो यथारुच्युपाधिना ।
विशुद्धिः कीदृशी तस्य जडस्य स्फटिकाश्मनः ॥

भल्लटस्य.

८९४

स्फटिकस्य गुणो योऽसौ स एवायाति दोषताम् ।
धत्ते स्वच्छतया छायां यस्तां मलवतामपि ॥

८९५

येन पाषाणखण्डस्य मूल्यमल्पं वसुंधरा ।
अनस्तमितसारस्य तेजसस्तद्विजृम्भितम् ॥

८९६

शुष्कतनुतृणलवाग्रं गृह्णाति धनाशयान्यदीयं यः ।
मूढास्तृणमणिमपि तं नियुञ्जते पादरक्षायै ॥

वल्लभदेवस्य.

८९७

सद्वंशजः साधुगुणः सुवृत्तः
संतापभित्तुल्यगुणोपगूढः ।

कान्तो दृशः पश्य तथापि हारः
क्षिप्तो बहिस्तुङ्गकुचद्वयेन ॥

भट्टप्रभाकरस्य.

८९८

कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रपुणि प्रतिबध्यते ।
न स विरौति न चापि हि शोभते
भवति योजयितुर्वचनीयता ॥

पञ्चतन्त्रे.

८९९

मरकतस्य वरं मलिनात्मता
त्यजति जातु निजां प्रकृतिं न यः ।
अमलतां स्फटिकस्य धिगञ्जसा
भजति रूपमुपान्तगतस्य यः ॥

प्रकाशवर्षस्य.

९००

अस्मिन्सखे ननु मणित्वमहासुभिक्षे
चिन्तामणे त्वमुपलो भव मा मणिर्भूः ।
अद्येदृशा हि मणयः प्रभवन्ति लोके
येषां तृणग्रहणकौशलमेव भूषा ॥

कस्यापि.

९०१

भूमौ पतन्नपि रजःपरिधूसरोऽपि
जात्यन्धदुर्जनजनैरवधीरितोऽपि ।
त्रैलोक्यवन्दनमहामहिमानमन्त-
श्चिन्तामणिर्नहि जहाति कदाचिदेव ॥

९०२

चिन्तामणे भुवि न केनचिदीश्वरेण
मूर्ध्ना धृतोऽसि यदि मा स्म ततो विषीदः ।

नास्त्येव हि त्वदधिरोपणपुण्यबीजं
सौभाग्ययोग्यमिह कस्यचिदुत्तमाङ्गम् ॥

९०३

चिन्तामणेस्तृणमणेश्च कृतं विधात्रा
केनोभयोरपि मणित्वमदः समानम् ।
नैकोऽर्थितानि ददर्थिजनाय खिन्नो
गृह्णन्नरत्तृणलवं न तु लज्जितोऽन्यः ॥

भल्लटस्य.

९०४

मनोरथशतैर्वृतो भुवननाथचूडोचित-
स्तृणैरलमधःकृतः कृतपदः क्वचिग्रावसु ।
व्रजत्यपि सचेतसां विषयमीदृशां यो दृशो
लुठत्यचलकंदरे विधुर एष चिन्तामणिः ॥

आनन्दवर्धनस्य.

९०५

परामृषति सस्पृहं मुहुरपेलवं वीक्षते
महत्किमपि रत्नमित्यसमसंमदं गूहते ।
कुतोऽपि परिलेपवच्छविमवाप्य काचोपले
वहत्यतिकदर्थनां बत वराककः पामरः ॥

कल्हणस्य.

९०६

किरणनिकरैराशाचक्रं चिरं परिपूरय-
न्किमिह गहने भ्रातर्व्यर्थं समुल्लसितो भवान् ।
क इह भवतो वेत्त्यत्यन्तं निसर्गमहार्घतां
मरकतमणे दग्धग्रामे हतादरपामरे ॥

भट्टगोविन्दराजस्य.

९०७

दूरे कस्यचिदेष कोऽप्यकृतधीर्नैवास्य वेत्त्यन्तरं
मानी कोऽपि न याचते मृगयते कोऽप्यल्पमल्पाशयः ।

इत्थं प्रार्थितदानदुर्व्यसनिनो नौदार्यरेखोज्ज्वला
जाता नैपुणदुस्तरेषु निकषा स्थानेषु चिन्तामणेः ॥

भल्लटस्य.

९०८

ये गृह्णन्ति हठात्तृणानि मणयो ये वाप्ययःपिण्डिकां
ते दृष्टाः प्रतिधाम दग्धमणयो विच्छिन्नसंख्याश्चिरम् ।
नो जाने किमभावतः किमथवा दैवादिह श्रूयते
नामाप्यत्र न तादृशस्य तु मणे रत्नानि गृह्णाति यः ॥

शङ्कुकस्य.

९०९

यन्मुक्तामणयोऽम्बुधेरुदरतः क्षिप्ता महावीचिभिः
पर्यन्तेषु लुठन्ति निर्मलरुचा स्पष्टाट्टहासा इव ।
तत्तस्यैव परिक्षयाज्जलनिधेर्द्वीपान्तरालम्बिनां
रत्नानां तु परिग्रहव्यसनिनः सन्त्येव सांयात्रिकाः ॥

कस्यापि.

९१०

माणिक्योऽयं महार्घः क्षितितलमहितो दीप्तिमानुच्चजन्मा
दृष्ट्वैनं नूनमाराद्व्यपसरतितरां कापि दौर्गत्यनीतिः ।
इत्थं भ्रान्तिप्रपञ्चैर्विपदपहृतये केनचित्स्थापितः स-
न्नन्ते दृष्टः स एव व्रणशतपरुषः कोऽपि पाषाणखण्डः ॥

अर्थवर्मणः.

९११

यामः स्वस्ति तवास्तु रोहणगिरे मत्तः स्थितिप्रच्युता
वर्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैवं कृथाः ।
श्रीमंस्ते मणयो वयं यदि भवल्लब्धप्रतिष्ठास्तदा
ते शृङ्गारपरायणाः क्षितिभुजो मौलौ करिष्यन्ति नः ॥

गोविन्दराजस्य.

---

## अथ शङ्खः

९१२

उच्चैरुच्चरतु चिरं चीरी वर्त्मनि तरुं समारुह्य ।
दिग्व्यापिनि शब्दगुणे शङ्खः संभावनाभूमिः ॥

भा० जयवर्धनस्य.

९१३

शङ्खोऽस्थिशेषः स्फुटितो मृतो य-
दुच्छ्वासितेनोच्छ्वसते नु सत्यम् ।
किं तूच्चरत्येव न सोऽस्य शब्दः
श्रव्यो न यो यो न सदर्थशंसी ॥

मल्लटस्य.

९१४

प्राणान्विहाय धवलत्वगुणोचितानि
प्राप्तानि यज्जगति वक्त्रविशेषयोगात् ।
शङ्खैर्महाविभवशब्दविजृम्भितानि
तज्जीवितं सहृदयाः प्रभवन्ति येषाम् ॥

९१५

धीरः श्रोत्रसुखावहोऽपि सदृशः सत्यं परं मङ्गलं
क्वापि ग्रामसुराङ्गणे स तु लसन्संध्यासु शङ्खध्वनिः ।
माद्यन्मेदुरसारमेयसरलग्रीवाप्रदीर्घीभव-
न्नादो नाम कृतानुकारमुदितग्राम्याट्टहासाहतः ॥

जयवर्धनस्य.

९१६

रत्नाकराजनिभुवोऽप्यपचीयमानः
शुष्कास्थिशेषतनुतामपि लम्बमानः ।
श्वासैः सफूत्कृतिभिरप्युपहन्यमानः
शुद्धाशयो वदति मङ्गलमेव शङ्खः ॥

कस्यापि.

९१७

शङ्खाः सन्ति सहस्रशो जलनिधेर्वीचिच्छटाघट्टिताः
पर्यन्तेषु लुठन्ति ये दलशतैः कल्माषितक्ष्मातलाः ।
एकः कोऽपि स पाञ्चजन्य उदभूदाश्चर्यभूतः सतां
यः संवर्तभरक्षमैर्मधुरिपोः श्वासानिलैः पूर्यते ॥

कविरत्नकस्य.

९१८

सर्वाशापरिपूरि हुंकृतमदो जन्मापि दुग्धोदधे-
र्गोविन्दाननचुम्बि सुन्दरतरं पूर्णेन्दुबिम्बाद्वपुः ।
श्रीरेषा सहजा गुणाः किमपरं भण्यन्त एते हि य-
त्कौटिल्यं हृदि पाञ्चजन्य भवतस्तेनातिलज्जामहे ॥

भट्टेन्दुराजस्य.

---

## अथ पद्माः

९१९

वरमश्रीकतैवास्तु नेतरश्रीसमानता ।
इति कैरवकोद्भेदे कमलं मुकुलायते ॥

जयवर्धनस्य.

९२०

लक्ष्मीसंपर्करूपोऽयं दोषः पद्मस्य निश्चितम् ।
यदयं गुणसंदोहधामनीन्दौ पराङ्मुखः ॥

प्रकाशवर्षस्य.

९२१

अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः ।
कथं कमलनालस्य मा भूवन्भङ्गुरा गुणाः ॥

भट्टभल्लटस्य.

९२२

किं दीर्घदीर्घेषु गुणेषु पद्म
सितेष्ववच्छादनकारणं ते ।

अस्त्येव तान्पश्यति चेदनार्या
त्रस्तेव लक्ष्मीर्न पदं विधत्ते ॥

भल्लटस्य..

९२३

स्थलकुशेशय संचिनु कण्टका-
न्प्रथय पङ्ककुलोद्भवतां मुदा ।
अपि बधान धृतिं जलसंगमे
व्रजसि येन परास्पदतां श्रियः ॥

लुट्टकस्य..

९२४

अक्षेष्वियं व्यसनिता हृदये यदेते
रागो घनो मधुमदोत्कटमाननं च ।
पद्मस्तथापि परमास्पदमेव लक्ष्म्या-
स्तद्दैन्यमेव किल दुर्भगता यदेभिः ॥

९२५

पद्मादयो बहुगुणा अपि यन्निशासु
नाशं न यान्ति विरहेण दिवाकरस्य ।
तत्पङ्कसंकरजलाशयजन्मजाड्य-
ज्यायोविजृम्भितमिदं त्रिजगत्प्रतीतम् ॥

९२६

लक्ष्मीं विशेषय कुशेशय कौशलाङ्कां
जृम्भां जहीहि चलतां च विमुञ्च किंचित् ।
आशागतान्यलिकुलानि मुदं नयेह
मित्रे विधौ सति विधत्स्व यथेष्टमेतत् ॥

एतौ धर्मदेवस्य..

९२७

नित्यं तथा शृणु कुशेशय मद्वचांसि
स्नेहेन यानि भवतः कथयामि किंचित् ।

कान्त्यानया विमलया भ्रमरैर्गुणैर्वा
किं यासि रम्यतमतामुत कण्टकर्द्धैः ॥

भा° श्रीशूरस्य.

९२८

संकोचमेहि बिसपुष्प जहीहि शोभां
दोषाकरोऽयमधुना समुदेति पश्य ।
वक्रात्मनि प्रभवति क्रमशो विचिन्त्य
प्रच्छन्नता गुणवतां स्वयमेव योग्या ॥

९२९

त्रुटयद्गुणोऽपि बहुकण्टकतां गतोऽपि
रन्ध्रान्वितोऽपि हतकर्दमसंभवोऽपि ।
भृङ्गोपभोग्यविभवोऽपि तथापि पद्मो
मित्रोदये विकसनं लभते सदैव ॥

कयोरपि.

९३०

कामं भवन्तु मधुलम्पटषट्पदौघ-
संघट्टघुंघुमघनध्वनयोऽब्जखण्डाः ।
गायन्नतिश्रुतिसुखं विधिरेव यत्र
भृङ्गः स कोऽपि धरणीधरनाभिपद्मः ॥

भट्टवासुदेवस्य.

९३१

तापापहे सहृदये रुचिरे प्रबुद्धे
मित्रानुरागनिरते धृतसद्गुणौघे ।
स्वाङ्गप्रदानपरितोषितषट्पदेऽस्मि-
न्युक्तं तवेह कमले कमले स्थितिर्यत् ॥

श्रुतधरस्य.

९३२

न पङ्कादुद्भूतिर्न जडसहवासव्यसनिता
वपुर्दिग्धं कान्त्या स्थलनलिनरत्नद्युतिमुषा ।

व्यधास्यद्दुर्वेधा हृदयलघिमानं यदि न ते
त्वमेवैकं लक्ष्म्याः परममभविष्यः पदमिह ॥
श्रीजयवर्धनस्य.

९३३

उत्पन्ना बहवस्तलेषु सरसामम्भोरुहाणां चया
ये यामिन्यधिपानुकारिरमणीवक्त्रोपमानं गताः ।
नाभौ भौमरिपोरजायत महापद्मः स कोऽप्येकको
यस्त्रैलोक्यसमुद्भवप्रभवितुर्जन्मावनित्वं गतः ॥

९३४

पुष्पेऽन्यत्रावकाशो निपुणमपहृतः सौरभालोभनाभिः
स्वाभोगेऽन्तःप्रवेशोऽप्यशिथिलनिबिडः कोशभावान्न दत्तः ।
नीत्वा नैराश्यमित्थं गलितगतिरसौ मुग्धबुद्धिः प्रदोषे
पद्मेन श्रीमतापि प्रसभमुभयतो भ्रंशितः पश्य भृङ्गः ॥
कयोश्चित्

९३५

भ्रातः पङ्कज संकोचः कंचित्कालं विषह्यताम् ।
सैव प्रभाते शोभा ते भाते दिनकरे भवेत् ॥

९३६

अधोगतिं च संप्राप्य बिसाः पङ्ककलङ्किताः ।
गुणिनो निर्गुणैर्दोशैः कृष्टाः स्वाङ्कुरदर्शिताः ॥

९३७

तदङ्कुराणि पद्मानि गुणैर्युक्तानि मानिभिः ।
शिरसा धार्यमाणानि मीलितानि जडात्मना ॥

---

## अथ मरुः

९३८

मरौ नास्त्येव सलिलं कृच्छ्राद्यद्यपि लभ्यते ।
तत्कटु स्तोकमुष्णं च न करोति वितृष्णताम् ॥
कस्यापि.

९३९

चटुलचातकचञ्चुपुटात्पत-
ञ्जलकणोऽपि मरोरतिगोचरः ।
स पुनरद्य घनागमबन्धुना
जलधरेण जलैरपरः कृतः ॥

छात्रस्य.

९४०

किं पान्थ निर्मथनसिद्ध्युपयोगिवस्तु-
संभारशालिनि मरौ सुगृहीतनाम्नि ।
संदृश्यतेऽतिविपरीतमिदं हि तत्र
कूपोऽस्ति तत्र च जलं यदयत्नलभ्यम् ॥

अमृतदत्तस्य.

९४१

अस्मिन्मरौ किमपरं वचसामवाच्यं
मा मुञ्च पान्थ मुहुराश्रितवत्सलो भूः ।
एतत्त्वया जललवामिषलालसेन
दृष्टं ज्वलत्परिकरं सिकतावितानम् ॥

जयमाधवसूनोर्लोठकस्य.

९४२

सत्पादपान्विपुलपल्लवपुष्पभार-
संपत्परीतवपुषः फलभारनम्रान् ।
यो मञ्जुशिञ्जितशकुन्तशताश्रितोरु-
शाखान्मरौ मृगयते न ततोऽस्ति मुग्धः ॥

सुखशर्मणः.

९४३

जलतरुतृणशून्यः श्राम्यतामध्वगानां
किमपि किल बताहं नोपकर्तुं समर्थः ।
इति न परमभीक्ष्णं नानुशेते न याव-
च्छठमरुरनृताम्भःप्राप्तये तान्प्रयुङ्क्ते ॥

थो इत्युच्यमानानन्दस्य.

९४४

गतमतिजवाद्भ्रान्तं भ्रान्तं समुत्कषिता च भू-
श्चिरतरमथो निःश्वस्याथो सदैन्यमवस्थितम् ।
किमिव न कृतं पान्थेनेत्थं तथापि शठो मरुः
प्रकृतिविरसः कष्टं यातो मनागपि नार्द्रताम् ॥

९४५

इतः काकानीकं प्रतिभयमितः कौशिककृता-
दितोऽमी गृध्राद्याः कुलमिदमितः कङ्कवयसाम् ।
श्मशानस्थानेऽस्मिन्नखिलगुणवन्ध्ये इततरा-
वपि द्वित्राः केचिन्न खलु कलवाचः शकुनयः ॥

कयोश्चित्.

९४६

किमसि विमतिः किं वोन्मादी क्षणादभिलक्ष्यसे
पुनरपि पुनः प्रेक्षापूर्वा न काचन ते क्रिया ।
स्वयमजलकां जानानोऽपि प्रविश्य मरुस्थलीं
शिशिरमधुरं वारि प्राप्तुं यदध्वग वाञ्छसि ॥

नरसिंहस्य.

९४७

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥

यशसः.

९४८

तापः स्वात्मनि संश्रितद्रुमलतादोषोऽध्वगैर्वर्जनं
सत्यं तीव्रतया तृषस्तव मरो कोऽसावनर्थोदयः ।
नन्वर्थः सुमहानयं जललवस्वाम्यस्मयोद्दर्जिनः
संनह्यन्ति यतस्तवोपकृतये धाराधराः प्राकृताः ॥

ईश्वरसूनोर्लोठकस्य.

९४९

एवं चेद्विधिना कृतोऽस्युपकृतौ कस्यांचिदप्यक्षमः
कामं मोपकृतास्ततस्तव मरो वाच्यं न धीरो भव ।
किं त्वारान्मृगतृष्णयोपजनयन्नम्भोमुचां वञ्चनां
प्रेम्णा कर्षसि तर्षमूर्छितधियोऽप्यन्यानतः शोच्यसे ॥

भा० अमृतदत्तस्य.

९५०

आम्राः किं फलभारनम्रशिरसो रम्याः किमूष्मच्छिदः
सच्छायाः कदलीद्रुमाः सुरभयः किं पुष्पिताश्चम्पकाः ।
एतास्ता निरवग्रहोग्रकरभोल्लीढावरूढाः पुनः
शम्यो भ्राम्यसि मूढ निर्मरुति किं मिथ्यैव मर्तुं मरौ ॥

भल्लटस्य.

---

## अथ संकीर्णवस्तुपद्धतिः

९५१

जलान्तराणि श्वभ्रेषु तिष्ठन्तु क्वापि यान्तु वा ।
सुरसिन्धुप्रवाहस्य सृतौ रत्नाकरोऽवधिः ॥

९५२

क्वान्तःशून्यो नडः क्वेक्षुस्तथापि सदृशाकृती ।
विवेकशून्यमनसां विप्रलम्भाय निर्मितौ ॥

९५३

नास्य भारग्रहे शक्तिर्न च वाहगुणः कृषौ ।
देवागारबलीवर्दस्तथाप्यश्नाति शोभनम् ॥

९५४

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥

९५५

वरमुन्नतलाङ्गूलात्सटाधूननभीषणात् ।
सिंहात्पादप्रहारोऽपि न सृगालाधिरोहणम् ॥

केषामपि.

९५६

गन्धैकसारो विफलः सेव्यश्चन्दनपादपः ।
भुजंगाः पवनाहाराः सेवकाः सदृशो विधिः ॥

लुट्टकस्य.

९५७

क्व गतो मृगो न जीवत्यनुदिनमश्नंस्तृणानि विविधानि ।
स्वयमाहतगजभोक्तुः सिंहस्य तु दुर्लभा वृत्तिः ॥

भट्टार्कस्य.

९५८

वक्रमशय्यासंस्थितमन्तःकोटरमनेकदुर्ग्रन्थि ।
प्रगुणीकर्तुं शक्तो दुर्दारु न विश्वकर्मापि ॥

कस्यापि.

९५९

न तदनुकृतं मनागपि न वा जलं सुचिरसेवितैः शीतम् ।
अन्धीकृते कुदीपैः प्रत्युत धूमेन मे नयने ॥

प्रकाशवर्षस्य.

९६०

उत्सन्नमापणममुं द्रक्ष्यामो निर्मलैः कदा नयनैः ।
चिन्तामणिकाचकणौ विपरीतगुणागुणौ यत्र ॥

भट्टवासुदेवस्य.

९६१

उज्ज्वलचम्पकमुकुलाशङ्कितया यः प्रदीपकं स्पृशति ।
कज्जलकलङ्कदाहं मुक्त्वान्यत्तस्य किं घटताम् ॥

कस्यापि.

९६२

शिखरी चितशिखराशिखः स्फुरदौर्वशिखाकदम्बकोऽम्बुनिधिः ।
कस्यापि लङ्घनीयौ न तु नगरावकरनिकरोऽयम् ।

भट्टवृद्धेः.

९६३

फणमणिभासुरगुरुतरसमर्थबहुमस्तके शेषे ।
कः क्षितिभरमुद्वोढुं प्रार्थयते कृपणफणिकीटान् ॥

९६४

यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गम् ।
यदि जलदनिनदमुदितास्त एव मूढा न नृत्येयुः ॥

कयोरपि.

९६५

शरदि समग्रनिशाकरकरशतहततिमिरसंचया रजनी ।
जलदान्तरितार्कामपि दिवसच्छायां न पूरयति ॥

विद्याधिपतेः.

९६६

मृदुसुभगपरिकररुचोऽप्यनुचितमिदमेकमेव मदनस्य ।
यदनेन कृतः केतौ मकरो दंष्ट्राकरालमुखः ॥

भा० अमृतदत्तस्य.

९६७

हेमकार सुधिये नमोऽस्तु ते
दुस्तरेषु बहुशः परीक्षितुम् ।
काञ्चनाभरणमश्मना समं
यत्त्वयैतदधिरोप्यते तुलाम् ॥

९६८

वृत्त एव स घटोऽन्धकूप य-
स्त्वत्प्रसादमपनेतुमक्षमः ।
मुद्रितं त्वधमचेष्टितं त्वया
तन्मुखाम्बुकणिकाः प्रतीच्छता ॥

९६९

शतपदी सति पादशते क्षमा
यदि न गोष्पदमप्यतिवर्तितुम् ।
किमियता द्विपदस्य हनूमतो
जलधिविक्रमणे विवदामहे ॥

९७०

न गुरुवंशपरिग्रहशौण्डता
न च महागुणसंग्रहणादरः ।

फलविधानकथापि न मार्गणे
किमिह लुब्धकबाल गृहेऽधुना ॥

९७१

तृणमणेर्मनुजस्य च तद्वतः
किमुभयोर्विपुलाशयतोच्यते ।
तनुतृणाग्रलवावयवैर्ययो-
रवसिते ग्रहणप्रतिपादने ॥

९७२

भ्रातः सुवर्णमयरूपकतारचित्रा-
लंकारयत्नघटनासु सुवर्णकार ।
दूरीकुरु श्रममिहाद्य सुवर्णपात्रे
दुर्वर्णयोजयितुरस्ति महार्घलाभः ॥

प० पाजकस्य ।

९७३

तनुतृणाग्रधृतेन हृतश्चिरं
क इह येन न मौक्तिकशङ्कया ।
स जलबिन्दुरतो विपरीतदृ-
ग्जगदिदं वयमत्र सचेतनाः ॥

९७४

रे दन्दशूक तदयुक्तमपीश्वरस्त्वां
वाछम्यतो नयति नूपुरधाम सत्यम् ।
आवर्जितालिकुलसत्कृतिमूर्छितानि
किं शिञ्जितानि भवतः क्षम एष कर्तुम् ॥

एतौ भल्लटस्य ।

९७५

सुवर्णकार श्रवणोचितानि
वस्तूनि विक्रेतुमिहागतोऽसि ।
अद्यापि नाश्रावि यदत्र पल्ल्यां
पल्लीपतिर्नूनमविद्धकर्णः ॥

९७६

तानुन्नतान्क्षितिभृतो ननु रूपयामः
पक्षक्षयव्यतिकरे मथितं तदोजः ।
युक्तं किमौर्वशिखिनः परिकोपितस्य
तेजस्विनोऽप्युदधिनिर्मथनं विसोढुम् ॥

जयवर्धनस्य.

९७७

चित्रं कियद्यदयमम्बुधिरम्बुदौघ-
सिन्धुप्रवाहपरिपूर्णतया महीयान् ।
त्वं त्वर्थिनामुपकरोषि यदल्पकूप
निष्पीड्य कुक्षिकुहरं हि महत्त्वमेतत् ॥

वल्लभदेवस्य.

९७८

धिग्वाडवं दहनमर्थितया विपक्ष-
मभ्येति यः स्वजठरप्रतिपूरणाय ।
धिग्वारिराशिमपि यस्तु तथाविधस्य
शत्रोर्जलैरपि न पूरयतेऽभिलाषम् ॥

९७९

शावान्कुलायकगतान्परिपातुकामा
नद्याः प्रगृह्य लघु पक्षपुटेन तोयम् ।
दावानलं किल सिषेच मुहुः कपोती
स्निग्धो जनो न खलु चिन्तयते स्वपीडाम् ॥

९८०

काकः स्वभावचपलः परिशुद्धवृत्ति-
र्लब्ध्वा बलिं स्वजनमाह्वयते परांश्च ।
चर्मास्थिमांसवति हस्तिकलेवरेऽपि
श्वा द्वेष्टि हन्ति च परान्कृपणस्वभावः ॥

केषामपि.

९८१

आदायि वारि यत एव जहाति भूय-
स्तत्रैव यः स जलदः प्रथमो जडानाम् ।
वान्तं प्रतीप्सति तदेव तदेव यस्तु
स्रोतःपतिः स निरपत्रपसार्थवाहः ॥

प्रकाशवर्षस्य.

९८२

बुध्यामहे न बहुधापि विकल्पमानाः
कैर्नामभिर्व्यपदिशाम महामतींस्तान् ।
येषामशेषभुवनाभरणस्य हेम्न-
स्तत्त्वं विवेक्तुमुपलाः परमं प्रमाणम् ॥

भल्लटस्य.

९८३

न म्लानितान्यखिलधामवतां मुखानि
नास्तं तमो न च कृतो भुवनोपकारः ।
सूर्यात्मजोऽहमिति केन गुणेन लोका-
न्प्रत्यापयिष्यसि शने शपथं विना त्वम् ॥

छात्रस्य.

९८४

संरक्षितुं कृषिमकारि कृषीवलेन
पश्यात्मनः प्रतिकृतिस्तृणपूरुषोऽयम् ।
स्तब्धस्य निष्क्रियतयास्तभियोऽस्य नून
मत्स्यन्ति गोमृगगणाः पुनरेव सस्यम् ॥

९८५

कस्यानिमेषविततें नयने दिवौको-
लोकादृते जगति ते अपि वै गृहीत्वा ।
पिण्डे प्रसारितमुखेन तिमे किमेत-
दृष्टं न बालिश विशद्बडिशं त्वयान्तः ॥

९८६

आ जन्मनः कुशलमण्वपि ते कुजन्म-

न्पांसो त्वया यदि कृतं वद तत्त्वमेतत् ।

उत्थापितोऽस्यनलसारथिना यदर्थं

दुष्टेन तत्कुरु कलङ्कय विश्वमेतत् ॥

९८७

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि

यायाद्यदि प्रणयनेन महानपि स्यात् ।

अभ्युद्धरेत्तदपि विश्वमितीदृशीयं

केनापि दिक्प्रकटिता पुरुषोत्तमेन ।

९८८

स्वल्पाशयः स्वकुलशिल्पविकल्पमेव

यः कल्पयन्स्खलति काचवणिक्पिशाचः ।

ग्रस्तः स कौस्तुभमणीन्द्रसपत्नरत्न-

निर्यत्नगुम्फपटुवैकटिकेर्ष्ययान्तः ॥

एते भल्लटस्य.

९८९

देवी क्व दुर्गतिहरा भगिनी भवानी

देवो हरः क्व भगिनीपतिरार्तबन्धुः ।

अम्भोनिधौ क्व शरणागतवृत्तिदैन्यं

मैनाक नाकथयितव्यमिदं त्वया नः ॥

अमृतदत्तस्य.

९९०

तुङ्गात्मतास्तशिखरस्य वृथैव भानो-

र्नालम्बिनी भवति यास्तमये प्रपित्सोः ।

श्लाघ्यः स तामरसनालगुणोऽपि दैत्य-

भीत्या यमेत्य मरुतां पतिराललम्बे ॥

९९१

गृहं श्मशानं गजचर्म चाम्बरं
विलेपनं भस्म वृषश्च वाहनम् ।
कुबेर हे वित्तपते न लज्जसे
प्रियस्य ते सख्युरियं दरिद्रता ॥

९९२

नैकत्र शक्तिविरतिः क्वचिदस्ति सर्वे
भावाः स्वभावपरिनिष्ठिततारतम्याः ।
आकल्पमौर्वदहनेन निपीयमान-
मम्भोधिमेकचुलकेन पपावगस्त्यः ॥

९९३

विष्णुर्बिभर्ति भगवानखिलां धरित्रीं
तं पन्नगस्तमपि तत्सहितं पयोधिः ।
कुम्भोद्भवस्तमपिबत्खलु हेलयैव
सत्यं न कश्चिदवधिर्महतां महिम्नः ॥

कस्यापि.

९९४

आरोपितः पृथुनितम्बतटे तरुण्या
कण्ठे च बाहुलतया निबिडं गृहीतः ।
उत्तुङ्गपीनकुचनिर्भरपीडितोऽयं
कुम्भः करीषदहनस्य फलानि भुङ्क्ते ॥

अमृतवर्धनस्य.

९९५

आबद्धकृत्रिमसटावलितांसभित्ति-
रारोप्यते मृगपतेः पदवीं यदि श्वा ।
मत्तेभकुम्भतटपाटनलम्पटस्य
नादं करिष्यति कथं हरिणाधिपस्य ॥

भल्लटस्य.

९९६

मुखमपि परिशिष्टं यस्य तेजःप्रसूतिं
खरकिरणमथेन्दुं ग्रासपात्रीकरोति ।
यदि किल वपुरस्य प्राभविष्यत्समग्रं
किमिव किमिव राहुर्नाकरिष्यत्तदानीम् ॥

कलशकस्य.

९९७

यत्पुष्पपल्लवफलाहितसाम्यमोहै-
र्न ज्ञायते शुक तव स्थितिरस्थितिर्वा ।
तद्दाडिमं त्यजसि नैव फलाशया त्व-
मर्थातुरो न गणयत्यपकर्षदोषम् ॥

कस्यापि.

९९८

वरमिह रवितापैः किं न शीर्णासि गुल्मे
किमु दवदहनैर्वा सर्वदाहं न दग्धा ।
यदहृदयजनौघैर्वृन्तपर्णानभिज्ञै-
रितरकुसुममध्ये मालति प्रोम्भितासि ॥

भट्टगोविन्दराजस्य.

९९९

किमिदमुचितं शुद्धेः स्पष्टं सपक्षसमुन्नतेः
फलपरिणतेर्युक्तं प्राप्तुं गुणप्रणयस्य ते ।
क्षणमुपगतः कर्णोपान्तं परस्य पुरः स्थिता-
न्विशिख निपतन्क्रूरं दूरान्नृशंस निहंसि यत् ॥

भल्लटस्य.

१०००

स हेमालंकारः क्षितिपतनलग्नेन रजसा
तथा दैन्यं नीतो नरपतिशिरःश्लाघ्यविभवः ।
यथा लोष्टभ्रान्तिव्यवहितविवेकव्यतिकरो
विलोक्यैनं लोकः परिहरति पादक्षतिभयात् ॥

१००१

आहूतेषु विहंगमेषु मशको नायान्पुरो वार्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥

*भल्लटस्य.

१००२

एवं चेत्सरसस्वभावपरता जाड्य किमेतादृशं
यद्यस्त्येव निसर्गतः सरलता किं ग्रन्थिमत्तेदृशी ।
मूलं चेच्छुचि पङ्कजश्रुतिरियं कस्माद्गुणा यद्यमी
किं छिद्राणि सखे मृणाल भवतस्तत्त्वं न मन्यामहे ॥

१००३

त्वं भोगी यदि कुण्डली यदि भवांस्त्वं चेद्भुजंगः सखे
धत्से चेन्मुकुटं सरत्नमुरग स्वस्त्यस्तु ते किं ततः ।
अस्थाने यदि कञ्चुकं त्यजसि तन्नास्माकमत्र स्पृहा
किं तु क्रूरविषोल्कया दहसि यद्भ्रातः क एष ग्रहः ॥

प० जगद्धरस्य.

१००४

मौलौ सन्मणयो गृहं गिरिगुहा त्यागः किलात्मत्वचो
निर्यत्नोपनतैश्च वृत्तिरनिलैरेकत्र चर्येदृशी ।
अन्यत्रानृजु वर्त्म वाग्द्विरसना दृष्टौ विषं दृश्यते
यादृक्तामनु दीपको ज्वलति किं भोगिन्सखे किन्विदम् ॥

१००५

भूयांस्यस्य मुखानि नाम विदितैवास्ते महासत्त्वता
कद्र्वाः प्राक्प्रसवोऽयमत्र कुपिते चिन्त्यं यथेदं जगत् ।
त्रैलोक्याद्भुतमीदृशं तु चरितं शेषस्य येनास्य सा
प्रोन्मृज्येव निवर्तिता विषधरज्ञानेऽपि दुर्वर्णिका ॥

१००६

किं तेन हेमगिरिणा रजताद्रिणा वा
यस्याश्रयेण तरवस्तरवस्त एव ।

मन्यामहे मलयमेव यदाश्रितानि
शाहोटनिम्बकुटजान्यपि चन्दनानि ॥

१००७

यान्दिग्ध्वैव कृता विषेण कुसृतिर्येषां कियद्गण्यते
लोकं हन्तुमनागसं द्विरसना रन्ध्रेषु ये जाग्रति ।
व्यालास्तेऽपि दधत्यमी सदसतोर्मूढा मणीन्मूर्धभि-
र्नौचित्याद्गुणशालिनां क्वचिदपि भ्रंशोऽस्त्यलं चिन्तया ॥

१००८

तत्प्रत्यस्त्रनया धृतो न तु कृतः सम्यक्स्वतन्त्रो भया-
त्स्वस्थस्तान्प्रतिघातयेदिति यथाकामं न संपोषितः ।
संशुष्यन्वृषदंश एष कुरुतां मूकः स्थितोऽप्यत्र किं
गेहे किं बहुनाधुना गृहपतेश्चौराश्चरन्त्याखवः ॥

१००९

स्वात्मीयान्न ददासि चेत्फणमणीन्मा दाः परार्थं परै-
र्यत्किंचिन्निहितं रुणत्सि किमिदं निध्यादि दुष्टाशय ।
एतत्तावदलं भवन्तमपरं पृच्छामि कस्मादहे
फूत्कारैर्विषवह्निवेगगुरुभिर्दन्दह्यसेऽमुं जनम् ॥

१०१०

निःसाराः सुतरां लघुप्रकृतयो योग्या न कार्ये क्वचि-
च्छुष्यन्तोऽद्य जरत्तृणाद्यवयवाः प्राप्ताः स्वतन्त्रेण ये ।
अन्तःसारपराङ्मुखेण धिगहो ते मारुतेनामुना
पश्यात्यन्तचलेन वर्त्म महतामाकाशमारोपिताः ॥

१०११

ये जात्या लघवः सदैव गणनां याता न ये कुत्रचि-
त्पद्भ्यामेव विमर्दिताः प्रतिदिनं भूमौ निलीनाश्चिरम् ।
उत्क्षिप्ताश्चपलाशयेन मरुता पश्यान्तरिक्षे सखे
तुङ्गानामुपरि स्थितिं क्षितिभृतां कुर्वन्त्यमी पांसवः ॥

१०१२

अनीर्ष्याः श्रोतारो मम वचसि चेद्वच्मि तदहं
स्वपक्षाद्भेतव्यं बहु न तु विपक्षात्प्रभवतः ।
तमस्याक्रान्ताशे कियदपि हि तेजोऽन्वयविनः
स्वशक्त्या भासन्ते दिवसकृति सत्येव न पुनः ॥

१०१३

सांमुख्यं वस्तुजातं नयति ननु चिदीशस्य यद्दर्शनाढ्यं
नेत्रद्वन्द्वं किलैतद्विमलमिति ततोऽन्याङ्गसङ्गं विहाय ।
घ्राणं वंशाभिरामं परिमलनिरतं चक्षुषोर्मध्यभागे
नित्यं लीनं न चास्मिन्मृगसि नयनयोः श्वासमामुञ्च खिन्ने ॥

प० प्रशस्तकस्य.

१०१४

एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं पाथसो
यन्मुक्ताफलमित्यमंस्त स जडः शृण्वन्यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै-
स्तत्रोड्डीय गते हहेत्यनुदिनं निद्राति नान्तःशुचा ॥

१०१५

आस्तेऽत्रैव सरस्यहो बत कियान्संतोषपक्षग्रहो
हंसस्यास्य मनाङ्न धावति मतिः श्रीधाम्नि पद्मे क्वचित् ।
सुप्तोऽद्यापि विबुध्यते न तदितस्तावत्प्रतीक्षामहे
वेलामित्युषसि प्रिया मधुलिहः सोढुं त एव क्षमाः ॥

१०१६

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥

१०१७

नामाप्यन्यतरोर्निमीलितमभूत्तत्तावदुन्मीलितं
प्रस्थाने स्खलतः स्ववर्त्मनि विधेरन्यैर्गृहीतः करः ।

लोकश्चायमदृष्टदर्शनदशाद्दग्वैशसादुद्धृतो
युक्तं काष्ठिक लूनवान्यदसितामाम्रालिमाकालिकीम् ॥

१०१८

ऊढा येन महाधुरः सुविषमे मार्गे सदैकाकिना
सोढो येन कदाचिदेव न निजे गोष्ठेऽन्यशौण्डध्वनिः ।
आसीद्यश्च गवां गणस्य तिलकस्तस्यैव संप्रत्यहो
धिक्कष्टं धवलस्य जातजरसो गोः पण्यमुद्घोष्यते ॥

१०१९

भेकेन क्वणता सरोषपरुषं यत्कृष्णसर्पानने
दातुं कर्णचपेटमुज्झितभिया हस्तः समुल्लासितः ।
यच्चाधोमुखमक्षिणी पिदधता नागेन तत्र स्थितं
तत्सर्वं विषमन्त्रिणो भगवतः कस्यापि लीलायितम् ॥

१०२०

नित्यं तीर्थे निवासः प्रकृतिरतितरां स्निग्धमुग्धस्वभावा
वृत्तिर्दैवाद्धि वक्त्रे गगननिपतितैर्निर्मलैर्वारिलेशैः ।
इत्थं सर्वं विलोक्य प्रकटमिह तिमे मुग्धलोकेन लोके
साधुत्वं दर्शितं ते बहिरबहिरमी कण्टकाः केन दृष्टाः ॥

१०२१

मृत्योरास्यमिवाततं धनुरमी चाशीविषाभाः शराः
शिक्षा सापि जितार्जुना प्रतिभयं सर्वाङ्गनिम्ना गतिः ।
अन्तः क्रौर्यमहो शठस्य मधुरं हा हारि गेयं मुखे
व्याधस्यास्य यथा भविष्यति तथा मन्ये वनं निर्मृगम् ॥

एते मल्लटस्य.

१०२२

धिग्व्योम्नो महिमानमेतु दलशः प्रोच्चैस्तदीयं पदं
निन्द्यां दैवगतिं प्रयात्वभवनिस्तस्यास्तु शून्यस्य वा ।
येनोत्क्षिप्तकरस्य नष्टमहसः श्रान्तस्य संतापिनो
मित्रस्यापि निराश्रयस्य न कृतं धृत्यै करालम्बनम् ॥

कस्यापि.

१०२३

दिग्दाहैकरते वनान्तकर ते ज्वाला न मे रोचते
दग्धुं स्वाश्रयमुद्यतस्य भवतो नेच्छन्ति वृद्धिं जनाः ।
मूलान्यस्य महीभृतो दलयितुं दुर्वेधसा निर्मितः
को वा न त्वयि शङ्कते खल जगत्खेदावहे दाव हे ॥

अमृतवर्धनस्य.

१०२४

क्षुत्क्षामेण कथं कथंचिदनिशं गात्रं कृशं बिभ्रता
भ्रान्तं येन गृहे गृहे गृहवतामुच्छिष्टपिण्डार्थिना ।
अस्थ्नः खण्डमवाप्य दैवपतितं शून्यां त्रिलोकीमिमां
मन्वानो धिगहो स एव सरमापुत्रोऽद्य सिंहायते ॥

भट्टापराजितस्य.

१०२५

शुष्कस्नायुवसावसेकमलिनं निर्मांसमप्यस्थि गोः
श्वा लब्धा परितोषमेति न तु तत्तस्य क्षुधः शान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥

पञ्चतन्त्रे.

१०२६

कालुष्यं पयसां विलोक्य शनकैरुड्डीय हंसा गता
धाराजर्जरकेसरास्फुटरुचः पद्मा निमग्ना जले ।
सा सर्वर्तुसुखावतारपदवी छन्ना तृणैर्नूतनैः
कष्टं तादृगपि स्वभावविमलं वृद्ध्यैव नष्टं सरः ॥

भट्टवृद्धेः

१०२७

ये संतोषसुखप्रबुद्धमनसस्तेषामभिन्नो मृदो
येऽप्येते धनलोभसंकुलधियस्तेषां तु दूरे नृणाम् ।
इत्थं कस्य कृते कृतः स विधिना तादृक्पदं संपदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥

लुलस्रुनोर्विद्याधरस्य.

१०२८

द्रव्याणामधरोत्तरव्यतिकरो भग्नाशयानामधो
बीजानां नयनं स्वयं च निजवच्छिद्रक्रियान्वेषणम् ।
व्यूहाबन्धविधायिभिर्गतभयैर्मुग्धप्रसुप्तार्भकं
शून्यं प्राप्य निवासमाखुभिरहो किं किं न यद्यत्कृतम् ॥

धर्मदत्तस्य.

१०२९

अन्योन्यस्य लयं भयादिव महाभूतेषु यातेष्वलं
कल्पान्ते परमेक एव स तरुः स्कन्धोच्चयैर्जृम्भते ।
विन्यस्य त्रिजगन्ति कुक्षिकुहरे देवेन यस्यास्यते
शाखाग्रे शिशुनेव सेवितजलक्रीडाविलासालसम् ॥

त्रिविक्रमस्य.

१०३०

त्रैलोक्योपकृतिप्रसक्तमनसो देवस्य शंभोः प्रिया
जाता शैलकुले वरैरभिमतैरानन्दयन्ती सुरान् ।
म्लेन्छानामपि वाञ्छितार्पणपरा स्वस्यास्पदस्याम्बिका
विन्ध्यस्योन्नतिमातनोति न निजां दैवस्य कीदृग्बलम् ॥

भा० अमृतदत्तस्य.

१०३१

किं त्वं हालिक मूढधीर्हतफलं मा मा कृथा लाङ्गलं
क्षेत्रं नैव भवत्यधः कठिनता नैवात्र दृष्टा त्वया ।
उल्लेखोऽपि न जायतेऽत्र विरम क्लेशः फलं केवलं
निर्बीजा बहवो गताश्च सततं दृष्टाः श्रुता वा न किम् ॥

कस्यापि.

१०३२

कोऽयं भ्रान्तिप्रकारस्तव पवन घनावस्करस्थानजातं
तेजस्विव्रातसेव्ये नभसि नयसि यत्पांसुपूरं प्रतिष्ठाम् ।
यस्मिन्नुत्थाप्यमाने जननयनपथोपद्रवस्तावदास्तां
केनोपायेन सह्यो वपुषि मलिनतादोष एष त्वयैव ॥

भा० अमृतदत्तस्य.

१०३३

जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।
संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥

कस्यापि.

१०३४

कटु रटसि किमेवं कर्णयोः कुञ्जरारे-
रविदितनिजबुद्धे किं न विज्ञातमस्ति ।
शिततरकरदंष्ट्राटङ्कनिर्भिन्नकुम्भं
मशक गलकरन्ध्रे हस्तियूथं ममज्ज ॥

कस्यापि.

१०३५

उद्गर्जन्कुटिलस्तटाश्रयतरुप्रोन्मूलनोड्डामरो
मा गर्वीः सरितः प्रवाह जलधिं प्रक्षोभयामीति भोः ।
स्वां सत्तां यदि वाञ्छसि भ्रम मरुष्वेवास्स्व तत्रैव वा
दूरे वाडववह्निरत्र तु महासत्त्वैर्विशन्पीयसे ॥

१०३६

स्थैर्यं तुङ्गशिरा जगत्स्थितिकृते वेलामहीभृच्छ्रितो
दूरात्प्रेरणया कलावत इमं क्रान्तुं जलानां पते ।
मिथ्या वाञ्छसि किं ततस्तव परं स्याद्रत्नसत्त्वक्षयो
नूनं घट्टनमाप्य पादतलगस्त्वस्यैव चान्ते लुठेः ॥

१०३७

आन्दोलयस्यविरतं गगनार्कमङ्के
तारागणं च शशिनं च तथेतराणि ।
तेजांसि भासुरतडित्प्रभृतीनि साधो
चित्रं तथापि न जहासि यदान्ध्यमन्तः ॥

# अथ शृङ्गारपद्धतिः

तत्रादौ

## विप्रलम्भः

१०३८

अयं स भुवनत्रयप्रथितसंयमः शंकरो
बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिपीडयञ्जयति जातहासः स्मरः ॥

१०३९

भ्रूशार्ङ्गाकृष्टमुक्ताः कुवलयमधुपव्योमलक्ष्मीमुषो ये
क्षीवा ये कृष्णशारा नरहृदयभिदस्तारकक्रूरशल्याः ।
ते दीर्घापाङ्गपुङ्खाः स्मितविषविषमाः पक्ष्मलाः स्त्रीकटाक्षाः
पायासुर्वोऽतिवीर्यास्त्रिभुवनजयिनः पञ्चबाणस्य बाणाः ॥

---

## तत्रादौ विप्रलम्भशृङ्गारे

### दयितगमनपद्धतिः

१०४०

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥

१०४१

हस्तमाक्षिप्य यातोऽसि बलादिति किमद्भुतम् ।
हृदयाद्यदि निर्यासि पौरुषं गणयामि ते ॥

१०४२

यामीति प्रियपृष्टायाः प्रियायाः कण्ठलग्नयोः ।
वचोजीवितयोरासीत्पुरोनिःसरणे रणः ॥

१०४३

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥

१०४४

स्मर्तव्योऽहं त्वया कान्ते न स्मरिष्याम्यहं तव ।
येन त्वां संस्मरिष्यामि हृदयं तत्त्वया हृतम् ॥

१०४५

लज्जां विहाय रुदितं विधृतः पटान्ते
मा गास्त्वमित्युदितमञ्जलयो मुखेऽस्ताः ।
स्थित्वा पुरः पतितमेव निवर्तनाय
प्राणेश्वरे व्रजति किं न कृतं कृशाङ्ग्या ॥

केषामपि.

१०४६

अलमलमनुगम्य प्रस्थितं प्राणनाथं
प्रथमविरहशोके न प्रतीकार एषः ।
सपदि रमणयात्रा श्रेय इत्यारटन्त्या
चरणपतनपूर्वं सा निरुद्धेव काञ्च्या ॥

माघस्य.

१०४७

कृतकमधुराचारे त्यक्त्वा रुषा परुषीकृते
चरणपतनप्रत्याख्यानप्रकोपपराङ्मुखे ।
व्रजति रमणे निःश्वस्योष्णं स्तनाहितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निपातिता ॥

अमरुकस्य.

१०४८

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेण वा
किमुत सकले याते वाह्नि प्रिय त्वमिहैष्यसि ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सबाष्पझलज्झलैः ॥

झलज्झलिकावासुदेवस्य.

१०४९

मा याहीत्यपमङ्गलं व्रज किल स्नेहेन शून्यं वच-
स्तिष्ठेति प्रभुता यथारुचि कुरुष्वैषाप्युदासीनता ।

नो जीवामि विना त्वयेति वचनं संभाव्यते वा न वा
तन्मां शिक्षय नाथ यत्समुचितं वक्तुं त्वयि प्रस्थिते ॥
दाक्षिणात्यस्य कस्यचित्.

१०५०

यामीत्यध्यवसाय एव हृदये बध्नातु नामास्पदं
वक्तुं प्राणसमासमक्षमघृणेनेत्थं कथं पार्यते ।
उक्तं नाम तथापि निर्भरगलद्वाष्पं प्रियाया मुखं
दृष्ट्वापि प्रवसन्त्यहो धनलवप्राप्तिस्पृहा मादृशाम् ॥
मोरिकायाः.

१०५१

या बिम्बौष्ठरुचिर्न विद्रुममणिः स्वप्नेऽपि तां दृष्टवा-
न्हासश्रीः सुदृशस्तपोभिरपि किं मुक्ताफलैः प्राप्यते ।
तत्कान्तिः शतशोऽपि वह्निपतनैर्हेम्नः कुतः सेत्स्यति
त्यक्त्वा रत्नमयीं प्रयासि दयितां कस्मै धनायाध्वग ॥
श्रीशिवस्वामिनः.

१०५२

आयाते श्रुतिगोचरं प्रियतमप्रस्थानकाले पुर-
स्तल्पान्तःस्थितया तदाननमलं दृष्ट्वा चिरं मुग्धया ।
सोच्छ्वासं दृढमन्युनिर्भरगलद्वाष्पाम्बुधौतं तया
स्वं वक्त्रं विनिवेश्य भर्तृहृदये निःशब्दकं रुद्यते ॥
कस्यापि.

१०५३

मा गच्छ प्रमदाप्रिय प्रियशतैर्भूयस्त्वमुक्तो मया
बाला प्राङ्गणमागतेन भवता प्राप्नोति निष्ठां पराम् ।
किं चान्यत्कुचभारपीडनसहैर्यत्नप्रबद्धैरपि
त्रुटयत्कञ्चुकजालकैरनुदिनं निःसूत्रमस्मद्गृहम् ॥
मोरिकाया.

१०५४

आपृष्टासि विनिर्गतोऽध्वगजनस्तन्वाङ्गि गच्छाम्यहं
स्वल्पैरेव दिनैर्ममागतिरिति ज्ञात्वा शुचं मा कृथाः ।

इत्याकर्ण्य वचः प्रियस्य सहसा तन्मुग्धयानुष्ठितं
येनाकाण्डसमाप्तसर्वकरणक्लेशः कृतोऽन्यो जनः ॥

१०५५

लोलाक्ष्या गुरुसंनिधौ मम कृतं नो वक्त्रमन्यादृशं
संलापाल्पतया न चातिकरुणाः कर्तुं न वा पारिताः ।
प्रस्थानाभिमुखस्य संततगलद्बाष्पौघया मुग्धया
दीर्घोष्णश्वसितैरसह्यमदनव्याधिः समावेदितः ॥

१०५६

आ दृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति ।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियास्मिन्क्षणे
मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम् ॥

अमरुकस्य.

१०५७

लग्ना नांशुकपल्लवे भुजलता न द्वारदेशेऽर्पिता
नो वा पादयुगे मुहुर्निपतिता तिष्ठेति नोक्तं वचः ।
काले केवलमम्बुदालिमलिने गन्तुं समभ्युद्यत-
स्तन्व्या बाष्पजलौघपूरितनदीपूरेण रुद्धः पतिः ॥

१०५८

वस्त्रान्ते करपल्लवेन विधृतः सास्रं चिरं वीक्षितो
मा गास्त्यक्तघृणेति मोहकरुणं बद्ध्वाञ्जलिं याचितः ।
उत्सृज्यैवमुपस्थितामपि यदा गन्तुं प्रवृत्तः शठः
पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥

१०५९

गन्तव्यं यदि नाम निश्चितमहो गन्तासि केयं त्वरा
द्वित्राण्येव पदानि तिष्ठतु भवान्पश्यामि यावन्मुखम् ।
संसारे घटिकाप्रणालविगलद्वारा समे जीविते
को जानाति पुनस्त्वया सह मम स्याद्वा न वा संगमः ॥

१०६०

लोलैर्लोचनवारिभिः सशपथैः पादप्रणामैः परै-
रन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम् ।
पुण्याहं व्रज मङ्गलं सुदिवसं प्रातः प्रयातस्य ते
यत्स्नेहोचितमीहितं प्रिय गृहात्तन्निर्गतः श्रोष्यसि ॥

१०६१

आयास्यस्यवधावपर्यवसिते गत्वेति संभाव्यते
संप्राप्ते त्वयि तानि तान्यपि सुखान्यद्यापरोक्षाणि नः ।
किं तु ज्ञातवियोगवेदनमिदं सद्यस्त्वयि प्रस्थिते
चेतः किं नु करिष्यतीत्यविदितं सम्यङ्न निश्चीयते ॥

१०६२

मुग्धे प्रेषय यामि यान्ति पथिकाः कालोऽवधेर्बध्यता-
मुद्विग्ना किमकाण्ड एव भवती तूष्णीं किमेवं स्थिता ।
इत्युक्त्वोपनतां प्रियेण दयितामालिङ्ग्य तादृक्कृतं
दत्तो येन समस्तपान्थविरहिप्राणान्तकृड्डिण्डिमः ॥

१०६३

दूरं सुन्दरि निर्गतासि नगरादेष द्रुमः क्षीरवा-
नस्मादेव निवर्त्यतामिति शनैरुक्त्वाध्वगेन प्रियाम् ।
गाढालिङ्गनमन्थरस्तनतटाभोगस्फुरत्कञ्चुकं
वीक्ष्योरस्तलमश्रुपूरितदृशा प्रस्थानभङ्गः कृतः ॥

एते केषामपि.

१०६४

यास्यामीति गिरः श्रुता अवधिरप्यारोपितश्चेतसि
गेहे यत्नवती भविष्यसि सदेत्येतत्समाकर्णितम् ।
बाले मा शुच इत्युदीरितवतः पत्युर्निरीक्ष्याननं
निःश्वस्य स्तनपायिनि स्वतनये दृष्टिश्चिरं पातिता ॥

धीरनागस्य.

---

## अथ विरहिण्यवस्था

१०६५

रामा नितान्तरक्तेन लोचनानन्दकारिणम् ।
उवाह मनसा कान्तं पाणिना मुखपङ्कजम् ॥

१०६६

दीनायां दीनवदनो रुदत्यां साश्रुलोचनः ।
पुरः सखीजनस्तस्याः प्रतिबिम्बवदाबभौ ॥

१०६७

दह्यमानेऽपि हृदये मृगाक्ष्या मन्मथाग्निना ।
स्नेहस्तथैव यत्तस्थौ तदाश्चर्यमिवाभवत् ॥

शकवृद्धेः.

१०६८

तस्याः स्तनान्तरन्यस्तं चन्दनं तापशोषितम् ।
मनोभवाग्निदग्धस्य बभौ भस्मेव चेतसः ॥

कस्यापि.

१०६९

तापोपशमदक्षाणि मृणालानि नतभ्रुवः ।
नाभूवन्दीर्घसूत्रेभ्यः प्रार्थितं लभ्यते कुतः ॥

भट्टवृद्धेः.

१०७०

विरमत विरमत सख्यो नलिनीदलतालवृन्तपवनेन ।
हृदयगतोऽयं वह्निर्झटिति कदाचिज्ज्वलत्येव ॥

कस्यापि.

१०७१

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥

दामोदरगुप्तस्य.

१०७२

लिखति न गणयति रेखा निर्भरबाष्पाम्बुधौतगण्डतला ।
अवधिदिवसावसानं मा भूदिति शङ्किता बाला ॥

मोरिकायाः.

१०७३

विकासिपद्मास्तरणे निरस्तं
तत्पाणिपद्मद्वयमायताक्ष्याः ।
व्यक्तिं ययौ संततविस्तृतेन
सकज्जलेनाश्रुजलेन सिक्तम् ॥

गङ्गाधरस्य.

१०७४

न निष्ठुरत्वं हृदयं वियोगे
न सौकुमार्यं च बिभर्ति तस्याः ।
विभेद्यमानं स्मरमार्गणैर्य-
न्न दार्ढ्यमाप्नोति न दीर्यते च ॥

रत्नाकरस्य.

१०७५

वियोगिनी चन्दनपङ्कपाण्डु-
मृणालिकाहारनिबद्धजीवा ।
बाला चलाम्भःकणदन्तुरेषु
हंसीव शिश्ये नलिनीदलेषु ॥

बाणस्य.

१०७६

विवृद्धतापोपशमार्थमङ्गे
न्यस्तं यदिन्दीवरदाम तस्याः ।
मुक्तेषुणा पञ्चशरेण भाति
व्यापारितं धौतमिवासिपत्रम् ॥

१०७७

उद्भाव्यमानो नलिनीपलाशैः
समीरणस्तद्धृदयास्पदस्य ।
करोति दाहस्य निवारणं नु
संधुक्षणं वा स्मरपावकस्य ॥

देवगुप्तस्य.

१०७८

परिच्युतस्तत्कुचभारमध्या-
त्किं शोषमायासि मृणालहार ।
न सूत्रतन्तोरपि तावकस्य
तत्रावकाशो भवतः किमु स्यात् ॥

श्रीहर्षस्य.

१०७९

मन्मथाग्निपरितप्तमनस्का
चन्दनेन किमु लिम्पसि गात्रम् ।
किं न वेत्सि बहिरङ्गविधाना-
दन्तरङ्गविधिरेव बलीयान् ॥

कस्यापि.

१०८०

नलिनीदलमाहितं सखीभिः
परितापोपशमाय यद्यदङ्गे ।
अकृतप्रतिकारलज्जयेव
क्षणतो म्लानिमुपैति तत्तदस्याः ॥

श्रीत्रिभाकरवर्मणः.

१०८१

प्रियवियोगकृशे प्रमदाजने
कृपणशूर विमुञ्चसि सायकान् ।
पशुपतेर्यदि लोचनगोचरं
व्रजसि मन्मथ दास्यमुपैमि ते ॥

कस्यापि.

१०८२

किमनया कथया कथयाथवा
समुपयामि न याम्युत यामि वा ।
स्वपिमि किं स्वपिमीति मनस्विनी
मनसिजेन सुदुर्ललिता कृता ॥

१०८३

धृतमपि मधु पारितं न पातुं
नयनसुखोऽपि न वीक्षितः शशाङ्कः ।
श्रुतिसुखमपि न श्रुतं च गीतं
गतवति भर्तरि भर्तृदेवताभिः ॥

१०८४

कर्पूरचन्दनरजोधवलं वहन्ती-
माश्यानचन्दनविलेपनमङ्गमङ्गम् ।
अन्तर्गतस्य दहतो महतः स्मराग्ने-
र्दग्धस्य संक्षयवशादिव भस्मशेषम् ॥

भट्टगोविन्दस्वामिनः.

१०८५

कण्ठग्रहे शिथिलतां गमिते कथंचि-
द्यो मन्यते मरणमेव सुखाभ्युपायम् ।
गच्छन्स एष न बलाद्विधृतो युवाभ्या-
मित्युज्झिते भुजलते वलयैरिवास्याः ॥

कङ्कणस्य.

१०८६

स्मर्तुं वियोगिदयिता दिवसस्य यां यां
रेखां चकार भुवि ताम्ररुचा करेण ।
तां तामरालचलपक्ष्मशिखाविमुक्तै-
र्मुक्ताफलद्युतिभिरश्रुभिरुन्ममार्ज ॥

१०८७

हारो जलार्द्रवसनं नलिनीदलानि
प्रालेयशीकरमुचश्च हिमांशुभासः ।
यस्येन्धनानि सरसानि च चन्दनानि
निर्वाणमेष्यति कथं स मनोभवाग्निः ॥

बाणकवेः.

१०८८
सर्वात्मना प्रभवतापि मनोभवेन
संदर्शितं परमकौशलमायताक्ष्याः ।
लावण्यविभ्रमविलासविचेष्टितानि
नैवेक्षितानि गमिता च तनुस्तनुत्वम् ॥
भट्टावलोकितस्य.

१०८९
संत्यज्यैतां प्रथमविरहत्रासभीतां कृतघ्नै-
र्यातं सर्वैः स्मृतिमतिमनोविभ्रमैर्लीलया च ।
नूनं स्नेहात्किमपि गहनं निःश्वसद्भिर्वराक्याः
प्राणैः कण्ठे निभृतनिभृतं लीनमेवं विचिन्त्य ॥
जयमाधवसूनोर्लोठकस्य.

१०९०
प्रयातेऽस्तं भानौ श्रितशकुनिलीढेषु तरुषु
स्फुरत्संध्यारागे शशिनि शनकैरुल्लसति च ।
प्रियप्रत्याख्यानद्विगुणविरहोत्कण्ठितदृशा
तदारब्धं तन्व्या मरणमपि यत्रोत्सवपदम् ॥
लुट्टकस्य.

१०९१
तन्वङ्ग्या गुरुसंनिधौ नयनयोर्यद्बाष्पमुत्तम्भितं
तेनान्तर्गलितेन मन्मथशिखी सिक्तो वियोगोद्भवः ।
मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता
श्वासायासशतागतालिसरणिव्याजेन धूमावली ॥
कस्यापि.

१०९२
वक्त्रे या मृगनाभिपङ्करचनां खिन्नेव धत्ते परं
यस्याः सान्द्रमुरःस्थले निपतितं भारायते चन्दनम् ।
अङ्गान्यप्यतिपेलवा वहति या क्लेशेन तस्यामपि
न्यस्तः शोकभरोऽपरः कथमहो निस्त्रिंशता वेधसः ॥
श्रीभानुषेणस्य.

१०९३
नितम्बप्राग्भारो गुरुरवधिरेखां न तु गतः
कृशो मध्यः किंचित्तदपि तनिमानं मृगयते ।
स्तनाभोगः स्तोको न तु विरलवृत्तिस्तु कलया
विलासैस्तन्वङ्ग्याः स्फुरितमिव विश्रान्तमिव च ॥

कस्यापि.

१०९४
काचित्पुरा विरहिणी परिवृद्धिहेतो-
र्यस्यै दिदेश सलिलं नवमालिकायै ।
सा पुष्पितैव जलमश्रुवशाद्वियोगे
तस्यै प्रदाय कथमप्यनृणी बभूव ॥

---

## अथ सखीप्रश्नाः

१०९५
गोपायन्ती विरहजनितं दुःखमग्रे गुरूणां
किं त्वं मुग्धे नयनविसृतं बाष्पपूरं रुणत्सि ।
नक्तं नक्तं नयनसलिलैरेष आर्द्रीकृतस्ते
शय्यैकान्तः कथयति दशामातपे दीयमानः ॥

१०९६
मुखं पाण्डुच्छायं नयनयुगलं बाष्पधवलं
तनुः क्षामक्षामा गतमविशदं धैर्यविगमः ।
ह्रियं मुक्त्वा मूढे कथयसि न मे सारवचना-
न्यवस्था येनेयं तव सखि मुहूर्तेन रचिता ॥

कस्यापि.

१०९७
चटुलनयने शून्या दृष्टिः कृता खलु केन ते
क इह सुकृती द्रष्टव्यानामुवाह धुरं पराम् ।
यमभिलिखितप्रख्यैरङ्गैर्न मुञ्चसि चेतसा
वदनकमलं पाणौ कृत्वा निमीलितलोचना ॥

अमरुकस्य.

१०९८

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥

कस्यापि.

१०९९

अन्योन्यग्रथितारुणाङ्गुलिनमत्पाणिद्वयस्योपरि
न्यस्योच्छ्वासविकम्पिताधरदलं निर्वेदशून्यं मुखम् ।
आमीलन्नयनान्तवान्तसलिलं श्लाघ्यस्य निन्द्यस्य वा
कस्येदं दृढसौहृदं प्रतिदिनं दीनं त्वया स्मर्यते ॥

अमरुकस्य.

११००

आसन्नामवलम्ब्य केसरलतामेकेन पुष्पोज्ज्वलां
सव्यं निःसहया नितम्बफलके कृत्वा कराम्भोरुहम् ।
उद्ग्रीवं वद दुर्दिनेऽद्य चरणावुन्नम्य मार्गस्त्वया
बालोद्भ्रान्तमृगेक्षणे सुकृतिनः कस्यायमालोक्यते ॥

११०१

बाले नाथ कृशासि किं ज्वरवशात्कस्मादपथ्याज्ज्वरो
जीर्णे नैव मया सरोजनयने किं तन्न यत्पार्यते ।
वक्तुं ब्रूहि विमुक्तलज्जमधुना तस्यापरारागिणः
प्रेङ्खत्पूर्णशशाङ्कतुल्यवदनं कंदर्पकान्तं वपुः ॥

११०२

अभ्यस्तेऽपि नितम्बभारफलके खेदालसेयं गतिः
किंचित्संवलिता न पक्ष्मविरलालोका दृशोऽन्तर्गताः ।
तन्मन्ये निभृतं त्वयाद्य हृदये कश्चिद्धृतो वल्लभो
निःश्वासाः कथमन्यथा द्विगुणतामेते तवैवं गताः ॥

केषामपि.

११०३

पाण्डुच्छायं क्षामं वक्त्रं कमलमुखि लुलितमलकं करे स्थितमाननं
शून्यालोका दीना दृष्टिः शिखरमभिपतितरशना तनुस्तनुतां गता ।
ध्यानैकाग्रा मन्दा बुद्धिर्मदजननि रहसि रमसे करोषि न सत्कथां
को नामायं रम्यो व्याधिस्तव सुतनु कथय किमिदं न खल्वसि नातुरा ॥

वररुचेः.

११०४

को धन्यः सखि सुस्थितेन मनसा को वेधसा निर्मितः
कः प्रेयान्मदनस्य कस्य फलितः प्राचीनकर्मद्रुमः ।
इत्थं यस्य कृते दिवानिशमविश्रान्तैः स्खलद्वारिभि-
र्मीनालोचनगडुकैः स्नपयसे वक्षोजलिङ्गद्वयम् ॥

कस्यापि.

---

## अथ विरहिणीप्रलापाः

११०५

रोदितुं नैव जानामि नैव जानामि शोचितुम् ।
स्वच्छन्दमश्रु पतति सत्यं सत्यं न रोदिमि ॥

११०६

अद्यापि हि नृशंसस्य पितुस्ते दिवसो गतः ।
तमसा पिहितः पन्था एहि पुत्रक शेवहे ॥

११०७

चक्षुः किं कम्पसे मूढ त्वयि दीनेऽश्रुवाहिनि ।
यो मां त्यक्त्वा गतः सोऽद्य कथमेष्यति सस्फुरे ॥

११०८

अयि लङ्घितमर्याद स्मर स्मर हरानलम् ।
दग्धं दग्धुमयुक्तं ते जनं विरहकातरम् ॥

११०९

स्वयमज्ञातदुःखो यद्दुनोतीति न विस्मयः ।
त्वं पुनः प्राप्तदाहो यद्दहसीति किमुच्यताम् ॥

केषामपि.

१११०

अहं नश्यामि मानेन मानेन कलहं कृथाः ।
विरोधमेत्य कान्तेन कान्ते न परितप्यते ॥

जीवनागस्य.

११११

हृदय स्थीयतां सम्यक्किमेवं परितप्यते ।
वल्लभस्ते जनो योऽसौ न भवांस्तस्य वल्लभम् ॥

१११२

यत्पराधीनयोः प्रेम दैवात्समुपजायते ।
तत्रानुत्सृज्य लज्जां वा जीवितं वा कुतः सुखम् ॥

एतौ वीरभटस्य.

१११३

अरतिरियमुपैति मां न निद्रा
प्रथयति तस्य मनो गुणान्न दोषान् ।
विरमति रजनी न संगमाशा
व्रजति तनुस्तनुतां न चानुरागः ॥

१११४

वरमसौ दिवसो न पुनर्निशा
ननु निशैव वरं न पुनर्दिनम् ।
उभयमप्यथवा व्रजतु क्षयं
प्रियतमेन न यत्र समागमः ॥

१११५

रथ्यारजोऽरुणित धूसरिताङ्गयष्टे
कच्चित्पितुः स्मरसि पुत्रक निर्घृणस्य ।
उक्त्वैवमङ्कगतमर्भकमायताक्ष्या
पान्थस्त्रिया प्ररुदितं करुणं दिनान्ते ॥

१११६

अनृतमनृतमेतद्यत्सुधासूतिरिन्दु-
र्नियतमयमनार्यो निर्गतः कालकूटात् ।

हृदयदहनदक्षा दारुणा चान्यथेयं
वद सखि मधुरत्वे मोहशक्तिः कुतोऽस्य ॥

१११७

अनुदिनमतितीव्रं रोदिषीति त्वमुच्चैः
सखि किल कुरुषे त्वं वाच्यतां मे मुधैव ।
हृदयमिदमनङ्गाङ्गारसङ्गाद्विलीय
प्रसरति बहिरम्भः सुस्थिते नैतदश्रु ॥

एते केषामपि.

१११८

सखि स सुभगो मन्दस्नेहो ममेति न मे व्यथा
विधिविरचितं यस्मात्सर्वो जनः सुखमश्नुते ।
मम तु सततं संतापोऽयं जने विमुखेऽपि य-
त्क्षणमपि हतव्रीडं चेतो न याति विरागताम् ॥

कस्यापि.

१११९

आलि कल्पय पुरः करदीपं
चन्द्रमण्डलमिति प्रथितेन ।
नन्वनेन पिहितं मम चक्षु-
र्मङ्क्षु पाण्डुरतमोगुलकेन ॥

११२०

कोटरे तिमिरमेष कलङ्क-
च्छद्मना वहति हन्त शशाङ्कः ।
यत्कणैरिव विलुम्पति दृष्टिं
मादृशां दयितदीपवियोगे ॥

११२१

कालकूटमिह निन्दति लोको
येन शम्भुरजरामर एव ।
अन्तकं विरहिणीषु सुधांशु
स्तौत्यमुं तु विरलो हि विवेकः ॥

११२२

कालकूटमधुनापि निहन्तुं
हन्त नो वहसि लाञ्छनभङ्ग्या ।
यद्भयादिव निगीर्णमपि त्वा–
माशु मुञ्चति सुधाकर राहुः ॥

११२३

अंशवस्तव निशाकर नूनं
कल्पितास्तरुणकेतकखण्डैः ।
येन पाण्डुरतरद्युतयो नः
कण्टकैरिव तुदन्ति शरीरम् ॥

११२४

अम्बुधेरुदगमद्विधुभङ्ग्या
नूनमौर्वशिखिभास्मनपिण्डः ।
यत्किलास्य घटते नहि तृप्तिः
खण्डिताजनदृगम्बुसरिद्भिः ॥

११२५

रात्रिराज सुकुमारशरीरः
कः सहेत तव नाम मयूखान् ।
स्पर्शमाप्य सहसैव यदीयं
चन्द्रकान्तदृषदोऽपि गलन्ति ॥

११२६

युक्तमाह दयितो मम वक्त्रं
पङ्कजं रहसि चाटुकथासु ।
संस्तवं रुचिभिरस्य हिमांशोः
प्राप्य कामपि रुजं यदुपैति ।

११२७

पद्मनाभ करुणां कुरु भूयो
विग्रहेण परिपूरय राहुम् ।

येन तज्जठरकोटरशायी
जात्वयं विधुरयेन्न विधुर्नः ॥

एते मङ्खकस्य.

११२८

द्विजपतिग्रसनाहितपातक-
प्रभवकुष्ठसितीकृतविग्रहः ।
विरहिणीवदनेन्दुजिघत्सया
स्फुरति राहुरयं न निशाकरः ॥

११२९

वद विधुंतुदमालि मदीरितै-
स्त्यजसि किं द्विजराजभिया रिपुम् ।
किमु दिवं पुनरेति यदीदृशः
पतित एष निषेव्य हि वारुणीम् ॥

११३०

स्वरिपुतीक्ष्णसुदर्शनविभ्रमा-
त्किमु विधुं ग्रसते स विधुंतुदः ।
निपतितं वदने कथमन्यथा
बलिकरम्भनिभं निजमुज्झति ॥

११३१

कुरु करे गुरुमेकमयोघनं
बहिरितो मकुरं च कुरुष्व मे ।
विशति तत्र यदैव विधुस्तदा
सखि सुखादहितं जहि तं द्रुतम् ॥

११३२

दहनजा न पृथुर्दवथुव्यथा
विरहजैव पृथुर्यदि नेदृशम् ।
दहनमाशु विशन्ति कथं स्त्रियः
प्रियमपासुमुपासितुमुद्धुराः ॥

११३३

निशि शशिन्भज कैतवभानुता--

मसति भास्वति तापय पाप माम् ।

अहमहन्यवलोकयितास्मि हे

पुनरहर्पतिनिर्धुतदर्पताम् ॥

११३४

त्वमिव कोऽपि परापकृतौ कृती

न ददृशे न च मन्मथ शुश्रुवे ।

स्वमदहो दहनाज्ज्वलतात्मना

ज्वलयितुं परिरभ्य जगन्ति यः ॥

११३५

असमये मतिरुन्मिषति ध्रुवं

करगतैव गता यदियं कुहूः ।

पुनरुपैति निबध्य निधास्यते

सखि विधोर्न पुनर्मुखमीक्ष्यते ॥

एते नैषधकर्तुः

११३६

प्रकृतिसरलं पश्यत्येवं तथापि न सस्पृहं

मधुरमधुरं वक्ति प्रेयान्पुरेव न नर्मतः ।

घटयति घनं कण्ठाश्लेषं तथापि न भावतः

सखि स भजते मामप्येवं तथापि न जीव्यते ॥

११३७

चरणपतनं सान्त्वालापा मनोहरचाटवः

पुलकिततनोर्गाढाश्लेषो हठाच्च कचग्रहः ।

इति बहुफलो मानारम्भस्तथापि हि नोत्सहे

हृदयदयितः कामं प्रेयान्करोम्यहमत्र किम् ॥

एतौ पुण्ड्रकस्य.

११३८

इदं कृष्णं कृष्णं प्रियतम ननु श्वेतमथ किं

गमिष्यामो यामो भवतु गमनेनाथ भवतु ।

पुरा येनैवं मे चिरमनुसृता चित्तपदवी
स एवान्यो जातः सखि परिचिताः कस्य पुरुषाः ॥

कस्यापि.

११३९

परिष्वक्तस्तावद्गुरुजनभयाद्दूति न मया
न चोक्तस्तिष्ठेति प्रियगमनबाष्पार्द्रगलया ।
द्रुतं गच्छामीति प्रियसखि सुदृष्टोऽपि न कृतो
निरुद्धो यावन्मे नयनसलिलैर्दृष्टिविषयः ॥

अस्थिभङ्गस्य.

११४०

गतोऽस्तं घर्मांशुर्व्रज सहचरीनीडमधुना
सुखं भ्रातः सुप्याः सुजनचरितं वायस कृतम् ।
मयि स्नेहाद्बाष्पस्थगितनयनायामपघृणो
रुदत्यां यो यातस्त्वयि स विलपत्येष्यति कथम् ॥

शिवस्वामिनः.

११४१

गते प्रेमाबन्धे हृदयबहुमानेऽपि गलिते
निवृत्ते सद्भावे जन इव जने गच्छति पुरः ।
तथा चैवोत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसा-
न्न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥

विज्जाकायाः.

११४२

मया बद्धा वेणी निवसितमशुक्लं च वसनं
श्रुताः शोचन्तीनां परिजनसखीनामपि गिरः ।
निवृत्तास्ते दृष्टा गतमनुगता येऽस्य सुहृद-
स्तथाप्येते प्राणा दयितमनुयाता न कृपणाः ॥

भदन्तधीरनागस्य.

११४३

कथमपि सखि व्रीडाकोपाद्व्रजेति मयोदिते
कठिनहृदयस्त्यक्त्वा शय्यां बलाद्गत एव सः ।

इति सरभसं ध्वस्तप्रेम्णि व्यपेतघृणे स्पृहां
पुनरपि हतव्रीडं चेतः करोति करोमि किम् ॥

कस्यापि.

११४४

भ्रातः पान्थ व्रजसि यदि हे तां दिशं पुण्यभाजो
वक्तासीत्थं कठिनहृदयं तं जनं किं यथेति ।
पृष्टा यावत्कथयति च सा वाञ्छितं नैव बाला
तावत्सर्वैर्वदनकमलं रुद्धमश्रुप्रवाहैः ॥

दर्वटस्य.

११४५

भ्रातः पान्थ पथि त्वया नु पथिकः कश्चित्समासादितो
बालेऽनेकशतानि कीदृश इति प्रख्यायतां वल्लभः ।
यं दृष्ट्वा प्रमदाजनस्य भवतः स्फारे मुदा लोचने
स ज्ञेयो दयितो ममेति पथिकायावेद्य मोहं गता ॥

११४६

तैलाक्तानलकान्कपोलपतितानुत्क्षिप्य कर्णान्तिकं
वस्त्रार्धेन विलम्बिना सरभसं प्रच्छाद्य पीनौ स्तनौ ।
बाला वायसमेवमाह रुदती दास्यामि यत्ते प्रियं
चूतात्केसरपादपं व्रज शनैर्यद्येति मे वल्लभः ॥

११४७

संपूर्णानि दिनानि तानि जलदश्यामं नभो वर्तते
मर्तव्यव्यवसायिनीमपि सतीं प्राणा न मुञ्चन्ति माम् ।
वाल्लभ्यं क्व नु नाम तत्क विरहे तस्याधुना जीव्यते
तत्सत्यं सखि लज्जितास्मि वितथेनानेन बाष्पाम्बुना ॥

११४८

आस्तां विश्वसनं सखीषु विदिताभिप्रायसारे जने
तत्राप्यर्पयितुं दृशं स्वरुचितां शक्नोमि न व्रीडया ।
लोकोऽप्येष परोपहासचतुरः सूक्ष्मेङ्गितज्ञोऽप्यलं
मातः कं शरणं व्रजामि हृदये जीर्णोऽनुरागज्वरः ॥

११४९

धन्या सा विरहे सखीजनपुरस्त्यक्त्वा त्रपां निर्वृता
निःश्वासं न परं विमुञ्चति कथाः कृत्वापि या रोदिति ।
पापायाः सभियः सदा गुरुजने शङ्काकुलायास्तु मे
दीपज्वालनहेतुना निशि परं निःश्वासमोक्षः क्षणम् ॥

११५०

यात्रामङ्गलसंनिधानरचनाव्यग्रे सखीनां गणे
बाष्पाम्भःपिहितेक्षणे गुरुजने तद्वत्सुहृन्मण्डले ।
प्राणेशस्य मदीक्षणार्पितदृशः कृच्छ्रादपक्रामतः
किं व्रीडाहतया मया भुजलतापाशो न कण्ठेऽर्पितः ॥

११५१

प्रस्थानं वलयैः कृतं प्रियसखैर्बाष्पैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
गन्तुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवितप्रियसुहृत्सार्थः किमु त्यज्यते ॥

एते केषामपि.

११५२

उत्कम्पोऽपि सकम्प एव हृदये चिन्तापि चिन्तान्विता
निःश्वासा अपि निःश्वसन्ति निभृतं बाष्पोऽपि बाष्पायते ।
कान्तस्य स्मरणे स्मराहितमतेः कष्टं हि रक्तात्मनः
प्ररोहा इव निःसरन्ति हृदये दुःखस्य धिग्वल्लभम् ॥

शर्वटस्य.

११५३

यास्यामीति समुद्यतस्य वदतो विस्रब्धमाकर्णितं
गच्छन्दूरमुपेक्षितो मुहुरसौ व्यावृत्य पश्यन्नपि ।
तच्छून्ये पुनरागतास्मि शयने प्राणास्त एव स्थिताः
सख्यस्तिष्ठत जीवितव्यसनिनी दम्भादहं रोदिमि ॥

११५४

पुष्पैरेव शरैः स्मरेण जनितः शीतांशुना वर्धितः
प्रालेयाचलसंनिधानशिशिरैः श्वासानिलैः पोषितः ।
आलापेन परामृतद्रवमयेनाप्यायितः कोकिलैः
संतापो मम सोऽयमस्य कतरः शीतोपचारक्रमः ॥

कस्यापि.

११५५

योऽसावाननवीक्षणैकरसिको नित्यं ममासीज्जनः
प्राणानामपि नान्यसक्तमनसो यस्याहमालम्बनम् ।
सख्यः पश्यत तस्य संप्रति कथं वार्तापि न श्रूयते
जीव्येतापि च चित्रमेतदपरं शोके कथा वर्तते ॥

कयोरपि.

११५६

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः ॥

भट्टशङ्कुकस्य.

११५७

निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते
निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिनं रुद्यते ।
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तदोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥

११५८

उत्कम्पो हृदये स्खलन्ति वचनान्यावेगलोलं मनो
गात्रं सीदति चक्षुरश्रुकलुषं चिन्ता मुखं शुष्यति ।
यस्यैषा सखि पूर्वरङ्गरचना मानः स मुक्तो मया
वन्द्यास्ता अपि योषितः क्षितितले यासामयं संमतः ॥

११५९

अद्यारभ्य यदि प्रिये पुनरहं मानस्य वान्यस्य वा
गृह्णीयां विषरूपिणः शठमतेर्नामापि संक्षोभिणः ।
तत्तेनैव विना शशाङ्ककिरणस्वच्छाट्टहासा निशा-
प्येको वा दिवसः पयोदमलिनो यायान्मम प्रावृषि ॥

११६०

मानव्याधिनिपीडिताहमधुना शक्नोमि तस्यान्तिकं
नो गन्तुं न सखीजनोऽस्ति चतुरो यो मां बलान्नेष्यति ।
मानी सोऽपि जनो न लाघवभयादभ्येति मातः स्वयं
कालो याति चलं च जीवितमिति क्षुण्णं मनश्चिन्तया ॥

११६१

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरीकुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥

अमरुकस्य.

११६२

सख्यः किं परुषैर्विमुञ्चत रुषं तस्यापराधः सकृ-
त्क्षन्तव्यश्चपलस्य मां प्रति पुनः कर्ता प्रियो नाप्रियम् ।
इत्थं मानपरिग्रहव्यतिकराद्भीता तथा प्रत्युत
प्रारब्धानुनया यथा परिजनेनैवाकुला हस्यते ॥

विग्रहराजस्य.

११६३

यावन्नो सखि गोचरं नयनयोरायाति तावद्द्रुतं
गत्वा ब्रूहि यथाद्य ते दयितया मानः समालम्बितः ।
दृष्टे धूर्तविचेष्टिते तु दयिते तस्मिन्नवश्यं मम
स्वेदाम्भःप्रतिरोधनिर्भरतनोः स्मेरं मुखं जायते ॥

बुद्धकस्य.

११६४

आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे
कण्ठे लग्नस्वकण्ठः प्रभवति कुचयोर्दत्तगाढाङ्गसङ्गः ।
बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक्प्रियो मे
बाले लज्जा निरस्ता नहि नहि सरले चोलकः किं त्रपाकृत्

कस्यापि.

११६५

मातर्नो सन्ति तस्मिञ्छिशिरजलकणाकर्षिणो गन्धवाहा
विद्युद्भासा सिताङ्गाः प्रचुरतरपयःस्यन्दिनो वा घनौघाः ।
केका वा बर्हिणानां गिरिवरशिखरस्थायिनां वा निशीथे
येनासौ जीवितेशः स्मरति परिजनस्यास्य वै दुःखितस्य ॥

विक्रमादित्यस्य.

---

## अथ सखीवाच्यता

११६६

या कामुककरस्पृष्टा न कृतार्थेव लक्ष्यते ।
सा गौरिव तरौ बद्धा यवसैः किं न चार्यते ॥

११६७

समयोचितकोपविभ्रमा
भव भीरु प्रविमुञ्च मार्दवम् ।
मधुरैकरसः प्रियः सदा
विरलः स्यात्सरले न वा पुनः ॥

११६८

जघनमुन्नतमाकुलमेखलं
मुखमपाङ्गविसर्पिततारकम् ।
इदमपोह्य गतो यदि निर्घृणो
ननु वरोरु स एव हि वञ्चितः ॥

११६९

पादानते प्रणयपेशलवाचि कान्ते
त्यक्तस्त्वया यदतिकोपनया न मन्युः ।

तीव्रानुतापगलितः स्वयमेव मन्ये
निर्याति ते तदयमश्रुभरच्छलेन ॥

११७०

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद-
स्त्वयाकाण्डे मानः किमिति सरले संप्रति धृतः ।
समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुना तस्य रुदितैः ॥

केषामपि.

११७१

सखि विवृणुते संतापस्ते तनुस्तनुतां गता
कठिनहृदये धैर्यक्षेपाद्गतिर्गलितक्रमा ।
कथय विषमामन्तर्दाहव्यथां सहते न तां
मदनदहनज्वालावल्लीविलीढमिदं मनः ॥

दर्शनीयस्य.

११७२

कस्माद्दोर्लतिके निधाय न चिरं द्वारोपरोधः कृतो
लग्ना वा किमु न स्थितापि रुदती रुद्धोत्तरीयांशुका ।
कालेऽस्मिन्कुसुमाकरे द्विगुणितप्रेम्णि प्रिये रागिणां
गच्छन्नग्रत एव मूढहृदये मुक्तस्त्वया वल्लभः ॥

दोर्लतिकादर्शनीयस्य.

११७३

आयाते रभसाद्यदि प्रियतमे प्रत्युद्गता नो चिरं
नो वा मण्डलितोन्नतस्तनतटं गाढं समालिङ्गितः ।
आश्लिष्य स्वभुजावलम्बमथवा प्रेमार्द्रया नो गिरा
संभाव्याभिहितो हतासि सरले स्वैरेव दुश्चेष्टितैः ॥

रत्नमित्रस्य.

११७४

कान्तः पुत्रि हठाद्गतश्चरणयोर्न त्वं निपत्य स्थिता
बद्धो मेखलयानया रतिरहःसख्या न वा फूत्कृतम् ।

का लज्जा मुषितासि किं प्रकटितैरेभिर्विलक्षस्मितै-
राः पापे विरहानलस्य न शिखा जानासि मर्मच्छिदः ॥

कस्यापि.

११७५

नार्याः सा रतिशून्यता नयनयोर्यद्दृष्टिपाते स्थितः
कामी प्राप्तरतार्थ एव न भवत्यालिङ्गितुं वाञ्छति ।
आश्लेषादपि यापरं मृगयते धिक्कामयोग्यां स्त्रियं
श्रोणीगोचरमागतो रतिफलं प्राप्नोति तिर्यङ्न किम् ॥

विज्जिकायाः.

११७६

चपलहृदये किं स्वातन्त्र्यात्तथा गृहमागत-
श्चरणपतितः प्रेमार्द्रार्द्रः प्रियः समुपेक्षितः ।
तदिदमधुना यावज्जीवं निरस्तसुखोदया
रुदितशरणा दुर्जातानां सहस्व रुषां फलम् ॥

अमरुकस्य.

११७७

किंचित्प्राप्तनखेन बाष्पसलिलं विक्षिप्य विक्षिप्य हे
किं त्वं रोदिषि कोपने बहुतरं विक्षिप्य रोदिष्यसि ।
यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते
निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति ॥

कस्यापि.

११७८

भ्रश्यन्ति यानि विरहे विदलन्ति यानि
योगे प्रियेण सखि किं वलयैः फलं तैः ।
नैवास्ति यैर्विपदि संपदि चोपयोग-
स्तैः संगमं न खलु वाञ्छति कोऽपि मर्त्यः ॥

उत्प्रेक्षावल्लभस्य.

## अथ दूतीप्रेषणम् ॥

११७९

अद्य भौमदिनं सत्यं सत्यमप्रस्तुतं तव ।
तथापि दूति गन्तव्यं नार्तः कालमपेक्षते ॥

११८०

संपदो जलतरङ्गविलोला
यौवनं त्रिचतुराणि दिनानि ।
शारदाभ्रपरिपेलवमायु-
र्गच्छ दूति वद सत्वरमेतत् ॥

कयोरपि.

११८१

उच्यतां स वचनीयमशेषं
नेश्वरे परुषता सखि साध्वी ।
आनयैनमनुनीय कथं वा
विप्रियाणि जनयन्ननुनेयः ॥

११८२

द्वारि चक्षुरधिपाणि कपोलौ
जीवितं त्वयि कुतः कलहोऽस्याः ।
कामिनामिति वचः पुनरुक्तं
प्रीतये नवनवत्वमियाय ॥

भारवेः.

११८३

कृतसरसमृणालीसूत्रसंधानबन्धः
कुचमुकुलमुखाङ्कश्चन्दनोपात्तमुद्रः ।
स्मरशबरशराणामेष लक्ष्यीभवन्तीं
कथयति खलु लेखस्तामनुद्घाटितोऽपि ॥

कस्यापि.

११८४

सोपालम्भकृतप्रणाममलसैः श्वासानिलैर्लाञ्छितो
बाष्पोत्खातकपोलचन्दनरसेनाक्षिप्तबाह्याक्षरः ।

स्विन्नाग्राङ्गुलिना करेण लिखितो व्यामृष्टवर्णावलि-
र्लेखः शेषमवाचितोऽपि कथयत्यङ्गेषु तस्या व्यथाम् ॥

वज्रवर्मणः.

११८५

पत्रं न श्रवणेऽस्ति बाष्पगुरुणोर्नो नेत्रयोः कज्जलं
रागोऽपूर्व इवाधरे चरणयोस्तन्व्या न चालक्तकः ।
वार्तोच्छित्तिषु निष्ठुरेति भवता मिथ्यैव संभाव्यते
सा लेखं लिखतु च्युतोपकरणा न्यायेन केनाधुना ॥

अमरुकस्य.

११८६

जीवामीति वियोगिनी यदि लिखेदत्रैव वृत्ताः कथा
अद्य श्वोऽथ मरिष्यतीति मरणे कालात्ययः किं कृतः ।
आगन्तव्यमिहेति मां प्रति सखे संभावना निष्फला
भ्रातः संप्रति याहि नास्ति लिखितं तद्ब्रूहि यत्ते क्षमम् ॥

लोठितकस्य.

११८७

यस्मिन्बाष्पतरङ्गिताश्रुकलुषा दृष्टिर्न सिद्धिं गता
यो हस्तेन विवर्तमानवलयेनालिङ्गितो न स्थितः ।
येन स्त्रीहृदयस्य पद्ममृदुनः संभावितो नात्ययो
भो गत्वापि किमश्मसारहृदये त्वं दूति वक्तुं क्षमा ॥

कस्यापि.

११८८

दूति त्वं तरुणी युवा स चपलः श्यामास्तमोभिर्दिशः
संदेशः सरहस्य एव विपिने संकेतकावासकः ।
भूयो भूय इमे वसन्तमरुतश्चेतो हरन्त्यन्यतो
गच्छ क्षेमसमागमाय निपुणे रक्षन्तु ते देवताः ॥

शीलाभट्टारिकायाः.

११८९

संदिष्टस्वजनावमानवदिमामप्रस्मरन्त्या त्वया
शीतस्नानमिव प्रियं प्रति सखे कार्यः प्रयाणोद्यमः ।

मन्युस्तन्मनसो मितंपचगृहादर्थीव कार्यो बहि-
र्विप्रस्येव हि भोजनार्थमटतः कालस्य तूर्णा गतिः ॥

---

## अथ विरहिणां प्रलापाः

११९०

वाहि वात यतः कान्तां तां स्पृष्ट्वा मामपि स्पृश ।
बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम् ॥

११९१

बह्वेतत्कामयानस्य नैतदल्पं विजानतः ।
यदहं सा च वामोरूरेकां धरणिमाश्रितौ ॥

११९२

हारोऽपि नार्पितः कण्ठे संभोगस्पर्शभीरुणा ।
आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः ॥

११९३

न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति सा ।
एतदेवानुशोचामि वयस्तत्रातिवर्तते ॥

११९४

कदा न्वहं सुदन्तोष्ठं मुखं पद्मदलेक्षणम् ।
ईषदुन्नाम्य पास्यामि रसायनमिवोत्तमम् ॥

एते भगवद्वाल्मीकिमुनेः.

११९५

प्रियामुखं तत्संस्मृत्य दीर्घचारुविलोचनम् ।
न याति शतधा येन मनस्तेन नपुंसकम् ॥

११९६

प्राणानां च प्रियायाश्च मूढाः सादृश्यकारिणः ।
प्रिया कण्ठगता रत्यै प्राणा मरणहेतवः ॥

कयोरपि.

११९७

प्रियाविरहितस्याद्य हृदि चिन्ता ममागता ।
इति मत्वा गता निद्रा के कृतघ्नमुपासते ॥

शीलाभट्टारिकायाः.

११९८

क्षणभङ्गि जगत्सर्वमिति तथ्यं मुनेर्वचः ।
कोऽन्यथा हरिणाक्षीणां सहेत विरहव्यथाम् ॥

कस्यापि.

११९९

स्फुटमाचक्षते तज्ज्ञाः शब्दानामिह नित्यताम् ।
प्रिययोक्ता यदद्यापि हृदि तिष्ठन्ति मे गिरः ॥

१२००

पदे वाक्ये प्रमाणे च परां निष्ठामुपागता ।
अतो विद्वज्जनस्यास्य स्पृहणीया मृगेक्षणा ॥

१२०१

मध्येनैकेन तन्वङ्ग्याः क्षामेण क्षपिता वयम् ।
उन्नतं कुचयुग्मं तु न जाने किं करिष्यति ॥

केषामपि.

१२०२

नूनं यां पश्यतो मेऽभून्निमेषो विघ्नकारकः ।
स्वप्नेऽपि दुर्लभा साद्य जीवामि कथमाः सखे ॥

१२०३

निर्दयं हृदयं तन्व्या दुर्वारा मारमार्गणाः ।
जीवितं वज्रकठिनं हा हा दुःखपरम्परा ॥

१२०४

उत्कण्ठितं मनो बाला सुदूरस्था नवं वयः ।
विधिर्वामो रिपुः कामो हा हा दुःखपरम्परा ॥

एते रैरुपकस्य.

१२०५

अनया जघनाभोगगुरुमन्थरयातया ।
अन्यतोऽपि व्रजन्त्या मे हृदये निहितं पदम् ॥

१२०६

मनः प्रकृत्यैव चलं दुर्लक्ष्यं च तथापि मे ।
अनङ्गेन कथं विद्धं समं सर्वशिलीमुखैः ॥

एतौ श्रीहर्षदेवस्य.

१२०७

अन्तर्मलीमसे वक्रे चले कर्णान्तसर्पिणि ।
तस्या नेत्रयुगे दृष्टे दुर्जने च कुतः सुखम् ॥

कस्यापि.

१२०८

दिव्यचक्षुरहं जातः सरागेणापि चेतसा ।
इहस्थो येन पश्यामि देशान्तरगतां प्रियाम् ॥

धैर्यमित्रस्य.

१२०९

रूपातिशयकर्तृणां प्रतिच्छन्दो हि कारणम् ।
विलोलनयनां धात्रा सृजता किं निरीक्षितम् ॥

१२१०

माधुर्यं मृगशावाक्ष्या यदि धात्रा विनिर्मितम् ।
तदित्युक्तिविरुद्धेन लावण्येन किमुच्छ्रितम् ॥

१२११

गतानि हन्त हंसीनां हरन्ती हरिणेक्षणा ।
करोति मामगतिकमहो स्त्रीवृत्तमद्भुतम् ॥

एते केषामपि.

१२१२

सा यौवनमदोन्मत्ता वयमस्वस्थचेतसः ।
तस्या लावण्यमङ्गेषु दाहोऽस्मासु विजृम्भते ॥

अमरुकस्य.

१२१३

यतो यतः क्षिपत्यक्षि क्षिप्रमायतलोचना ।
ततस्ततः प्रक्षिपति पञ्च पञ्चशरः शरान् ॥

१२१४

एतत्कान्तमिदं कान्तमित्यावसथतृष्णया ।
तस्या भ्रमति सर्वाङ्गं मन्ये मूढ इव स्मरः ॥

१२१५

मध्यदेशात्पुनः काञ्चीदेशं गच्छद्भिराकुलैः ।
तस्या वपुषि लोकस्य लोचनैः पथिकायितम् ॥

१२१६

प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः ।
प्राप्यते येन निर्वाणं सरागेणापि चक्षुषा ॥

१२१७

अपूर्वः कोऽपि तन्वङ्ग्या मम मार्गः प्रदर्शितः ।
योगं चिन्तयतो येन राग एव विवर्धते ॥

१२१८

दूरस्था यस्य दयिता नवा पीनपयोधरा ।
तस्य संतापशमने न वापी न पयोधराः ॥

१२१९

आभोगिनौ मण्डलिनौ तत्क्षणोन्मुक्तकञ्चुकौ ।
वरमाशीविषौ स्पृष्टौ न तु तन्व्याः पयोधरौ ॥

१२२०

विहारो मृगशावाक्ष्याः सुगताधिष्ठितो यदि ।
कथं वसति तत्रैव स्मरो विततकार्मुकः ॥

१२२१

सखे समं प्रयातेषु समस्तेष्विन्द्रियेषु मे ।
मनो गृहीतं तन्वङ्ग्या कस्यचित्किंचिदीप्सितम् ॥

१२२२

यो यः पश्यति तन्नेत्रे रुचिरे वनजायते ।
तस्य तस्यान्यनेत्रेषु रुचिरेव न जायते ॥

१२२३

कथं मुग्धे कथं वक्रे कान्तायास्ते विलोचने ।
कथं जनानुरागाय कथं जनविपत्तये ॥

१२२४

मम कामशरासारात्रणिते चेतसि स्थिता ।
कथं सलवणा तन्वी संतापं न करिष्यति ॥

१२२५

स्मृता भवति तापाय दृष्टा चोन्मादवर्धिनी ।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥

१२२६

मां प्राप्य दैवहतकं मुनेरप्यनृतं वचः ।
यतः प्रियावियोगेन क्षणभङ्गो न दृश्यते ॥

१२२७

नूनमाज्ञाकरस्तस्याः सुभगो मकरध्वजः ।
यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥

१२२८

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
इति वित्रस्तसारङ्गनेत्रया को न वञ्चितः ॥

१२२९

यस्य केशेषु जीमूता नद्यः सर्वाङ्गसंधिषु ।
कुक्षौ समुद्राश्चत्वारः स जयेद्विरहानलम् ॥

१२३०

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं स तन्व्याः कथयेद्गुणान् ॥

१२३१

यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् ।
अयत्नेनैव तन्वङ्गी बहिर्दृश्येत सर्वदा ॥

१२३२

नपुंसकमिति ज्ञात्वा त्वां प्रति प्रेषितं मया ।
मनस्तत्रैव रमते हताः पाणिनिना वयम् ॥

एते केषांचित्.

१२३३

गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ।
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥

१२३४

गुरुणा स्तनभारेण सोपदिष्टा तथा तथा ।
यथा तत्क्षणमेवाप्ता तयान्यायसमागतिः ॥

शङ्कुकस्य.

१२३५

सति प्रदीपे सत्यग्नौ सत्सु तारामणीन्दुषु ।
विरामे मृगशावाक्ष्यास्तमोभूतमिदं जगत् ॥

अमरुकस्य.

१२३६

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ।
पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥

१२३७

क्षिपतोऽप्यन्यतश्चित्तं सैव सारङ्गलोचना ।
शङ्केव कृतपापस्य हृदयान्नापसर्पति ॥

कयोरपि.

१२३८

यः प्रदोषः प्रदोषोऽसौ कालः कालः किमुच्यते ।
दोषा दोषाकरवती विना तन्व्याः समागमात् ॥

१२३९

एकमुत्कण्ठया व्याप्तमन्यद्दयितया हृतम् ।
चेतनां हृदयं धत्ते कियन्ति हृदयानि मे ॥

विचित्रपशोः.

१२४०

नियतं यदि नास्माकं निसर्गविधुरो विधिः ।
किमिन्दुवदना नीता क्षणं नयनगोचरम् ॥

गोविन्दस्वामिनः.

१२४१

यदि सा चारुसर्वाङ्गी चित्ते वसति मे प्रिया ।
तत्कथं शून्यचित्तोऽहमहो विधिविपर्ययः ॥

कस्यापि.

१२४२

दिक्षु भूमौ तथा व्योम्नि सर्वत्रैव विभाव्यते ।
स्मर्यते प्राणसंदेहे तन्वी नारायणाथते ॥

भा° विनीतदेवस्य.

१२४३

अहो अहं नमो मह्यं यदहं वीक्षितोऽनया ।
बालया त्रस्तसारङ्गचपलायतनेत्रया ॥

१२४४

तावदेवामृतमयी यावल्लोचनगोचरे ।
चक्षुष्पथादतीता तु विषादप्यतिरिच्यते ॥

१२४५

एकतो दिवसान्बाला गणयत्येकतोऽन्तकः ।
न विद्मः प्रथमं कस्य यास्यामो वयमन्तिकम् ॥

कयोरपि.

१२४६

मर्तव्यपक्षनिःक्षिप्ता यदि नाम विधेर्वयम् ।
उपायाः किमु नान्ये स्युर्दर्शिता यन्मृगेक्षणा ॥

भदन्तकम्बलकस्य.

१२४७
तन्वङ्ग्या विप्रयुक्तस्य दिवसा यान्ति ये मम ।
निर्घृणस्तानपि यमः प्रायेण गणयिष्यति ॥

१२४८
विरहे मृगशावाक्ष्या तयैवोपकृतं मम ।
यदन्यस्त्रीपरिष्वङ्गप्रार्थनाशल्यमुद्धृतम् ॥

१२४९
मूढाः संयोगमिच्छन्ति वियोगस्तु मयेष्यते ।
एकैव संगमे बाला वियोगे तन्मयं जगत् ॥

केषामपि.

१२५०
एकैव संगमे बाला वियोगे तन्मयं जगत् ।
कृतोपकार एवायं वियोगः केन निन्ह्यते ॥

१२५१
यदि स्मरामि तन्वङ्गीं जीविताशा कुतो मम ।
अथ विस्मृत्य जीवामि जीवितव्यसनेन किम् ॥

एतौ दीपकस्य.

१२५२
अपेहि हृदयाद्वा मे वामे दर्शनमेहि वा ।
अदूरविरहोत्कण्ठादुःखं दुःखेन सह्यते ॥

कस्यापि.

१२५३
स मे समासमो मासो सा मे माससमा समा ।
यो यातया तया याति या यात्यायातया तया ॥

चतुरक्षरः ॥ शाश्वतस्य.

१२५४
सा दृष्टा यैर्न वा दृष्टा मुषिताः सममेव ते ।
हृतं हृदयमेकेषामन्येषां चक्षुषः फलम् ॥

शक्रदेवस्य.

१२५५

यदि प्रियावियोगेऽपि रुद्यते दीनदीनकम् ।
तदिदं दग्धमरणमुपयोगं क्व यास्यति ॥

दग्धमरणस्य.

१२५६

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।
मा संचर मनःपान्थ तत्रास्ति स्मरतस्करः ॥

कस्यापि.

१२५७

मनःशुक निवर्तस्व कामिनीगण्डदाडिमात् ।
कामव्याधेन विन्यस्तं तत्रास्त्यलकजालकम् ॥

राजानकाह्लादकस्य.

१२५८

मनोभृङ्ग निवर्तस्व कामिनीवदनाम्बुजात् ।
मदनेन्दौ समुदिते बन्धनं प्राप्स्यसि ध्रुवम् ॥

रैरुपकस्य.

१२५९

अयि हृदय दयां मयि कुरु कुरङ्गनयनां विना बधान धृतिम् ।
टसदिति झटिति स्फुटं वास्फुटमिदमुक्तं गतिर्नान्या ॥

कस्यापि.

१२६०

पाण्डुरसि निशि न शेषे प्रतिदिनमाविष्करोषि तनिमानम् ।
वयमिव किं त्वमपि सखे शशाङ्क तामेव चिन्तयसि ॥

हरगणस्य.

१२६१

कान्ता ददाति मदनं मदनः संतापमनुपमं च ।
संतापो मरणमहो तथापि शरणं नृणां सैव ॥

१२६२

अलसयति गात्रमधिकं भ्रमयति चेतस्तनोति संतापम् ।
मोहं च मुहुः कुरुते विषविषमं वीक्षितं तन्व्याः ॥

भट्टकर्णाटकस्य.

१२६३

निर्विण्णे निर्विण्णा मुदिते मुदिता समाकुलाकुलिते ।
प्रतिबिम्बसमा कान्ता संक्रुद्धे केवलं भीता ॥

१२६४

यावद्वाञ्छितसुरतव्यायामसहाविरुद्धसंयोगा ।
चित्तानुवृत्तिकुशला पुण्यवतामेव जायते जाया ॥

दामोदरगुप्तस्य.

१२६५

नूनमयं मे शापः कान्ताविरहो रसायनीभूतः ।
वर्षसहस्राभ्यधिकान्नयामि कथमन्यथा दिवसान् ॥

१२६६

अवलोकनमपि सुखयति कुवलयदलचारुचपलनयनायाः ।
किं पुनरलकचलद्द्युति सरभसमालिङ्गनं तन्व्याः ॥

१२६७

चारुमधुव्रतनयनमधरदलं दशनकेसरं तस्याः ।
मुखकमलमनुस्मरतः स्मरहरमनसः कुतो निद्रा ॥

१२६८

स्तनयुगमत्युत्तुङ्गं निम्नो मध्यः समुन्नतं जघनम् ।
इति विषये हरिणाक्ष्या वपुषि नवे क इव न स्खलति ॥

१२६९

उपप्लवोऽसौ किमु राजपुत्री
ज्योत्स्नाद्रवोऽसावुत वज्रपातः ।
अलं तया सैव हि जीवितं मे
धिग्मामहं वा चरितार्थ एकः ॥

१२७०

यदा प्रकृत्यैव जनस्य रागिणो
ज्वलेत्प्रदीप्तो हृदि मन्मथानलः ।
तदत्र भूयः किमनर्थपण्डितैः
कुकाव्यगव्याहुतयो निपातिताः ॥

एते केषामपि.

१२७१

त्यागो हि सर्वव्यसनानि हन्ती-
त्यलीकमेतद्भुवि संप्रतीतम् ।
जातानि सर्वव्यसनानि तस्या-
स्त्यागेन मे मुग्धविलोचनायाः ॥

शूद्रकस्य.

१२७२

कालक्रमं प्रत्यकथैव ताव-
त्क्षणं वियोगो मरणेन तुल्यः ।
प्रियामुखोद्वीक्षणलालसाना-
मक्ष्णोर्निमेषोऽपि हि विघ्नभूतः ॥

कस्यापि.

१२७३

मुहुरङ्गुलिसंवृताधरौष्ठं
प्रतिषेधाक्षरविक्लवाभिधानम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं नु ॥

कालिदासस्य.

१२७४

अयि वरोरु हतस्मरदीपिके
यदि गतासि मदीक्षणगोचरात् ।
असमसायकसायककीलिता
वद गमिष्यसि मे हृदयात्कथम् ॥

वसुनागस्य.

१२७५

कुङ्कुमपङ्ककलङ्कितदेहा
गौरपयोधरलम्बितहारा ।
नूपुरहंसरणत्पदपद्मा
कं न वशीकुरुते भुवि रामा ॥

१२७६

सनूपुरालक्तकपादताडितो
द्रुमोऽपि यासां विकसत्यचेतनः ।
तदङ्गसंस्पर्शरसद्रवीकृतो
विलीयते यन्न नरस्तदद्भुतम् ॥

१२७७

चन्द्रश्चण्डकरायते मृदुगतिर्वातोऽपि वज्रायते
माल्यं सूचिकुलायते मलयजालेपः स्फुलिङ्गायते ।
आलोकस्तिमिरायते विधिवशात्प्राणोऽपि भारायते
हा हन्त प्रमदावियोगसमयः कल्पान्तकालायते ॥

१२७८

अद्यापि तां सुरतलब्धयशःपताकां
लम्बालकां विरहपाण्डुरगण्डभित्तिम् ।
स्वप्नेऽपि लोलनयनां क्षणदृष्टनष्टां
विद्यां प्रसादगुणितामिव संस्मरामि ॥

एते केषांचित्.

१२७९

तप्ते महाविरहवह्निशिखावलीभि-
रापाण्डुरस्तनघने हृदये प्रियायाः ।
मन्मार्गवीक्षणनिवेशितदीनदृष्टे-
र्नूनं छमच्छमिति बाष्पकणाः पतन्ति ॥

छमच्छामिकारत्नस्य.

१२८०

निद्रार्धमीलितदृशो मदमन्थराया
नाप्यर्थवन्ति न च यानि निरर्थकानि ।
अद्यापि मे मृगदृशो मधुराणि तस्या-
स्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥

कलशकस्य.

१२८१
अम्भोजगर्भसुकुमारतनुस्तदासौ
कण्ठग्रहप्रसृमरापघने निलीय ।
सद्यः पतन्मदनमार्गणरन्ध्रमार्गै-
र्नूनं मम प्रियतमा हृदये प्रविष्टा ॥

श्रीहर्षदेवस्य.

१२८२
तीक्ष्णं कटाक्षविशिखं मयि पातयन्ती
मर्माणि मुग्धवदना न तथा दुनोति ।
क्रोधात्सवेपथु यथा प्रतिसंहरन्ती
पातादसह्यतरमुद्धरणे हि शल्यम् ।

कस्यापि.

१२८३
कचग्रहोत्तानितमर्धकुङ्कुमं
त्रपाचलत्तारकमन्दलोचनम् ।
बलाद्गृहीताधरवेदनाकुलं
कदा पिबेयं ननु तत्प्रियामुखम् ॥

वसुनागस्य.

१२८४
तत्तादृशं सकलचन्द्रकलाकलाप–
लावण्यनिर्मितमिवायतलोचनायाः ।
रूपं प्रविश्य हृदयं दहतीव मन्ये
वामे विधौ न खलु यो विपदां न पन्थाः ॥

१२८५
पीतो यदाप्रभृति कामपिपासितेन
तस्या मयाधररसः प्रचुरः प्रियायाः ।
तृष्णा तदाप्रभृति मे द्विगुणत्वमेति
लावण्यमस्ति बहु तत्र किमत्र चित्रम् ॥

कयोरपि.

१२८६

बाला च सा विदितपञ्चशरप्रपञ्चा
तन्वी च सा स्तनभरोपचिताङ्गयष्टिः ।
लज्जां समुद्वहति सा सुरतावसाने
हा कापि सा किमिव किं कथयामि तस्याः ॥

भासस्य.

१२८७

नूनं हि ते कविवरा विपरीतवाचो
ये नित्यमाहुरबला इति कामिनीनाम् ।
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजिता अबला कथं ताः ॥

१२८८

लम्बालकं विरहपाण्डुरगण्डभित्ति
मुग्धं मनोहरमनङ्गगृहं प्रियायाः ।
पक्ष्मान्तवान्तघनबाष्पजलार्द्रगण्डं
ध्यायन्मुखं हृदय यासि न खण्डखण्डम् ॥

१२८९

कान्तामुखं सुरतकेलिविमर्दखेद-
संजातधर्मकणविच्छुरितं रतान्ते ।
आपाण्डुरं तरलतारनिमीलिताक्षं
संस्मृत्य हे हृदय किं शतधा न यासि ॥

१२९०

बाष्पाविलेन निभृतेन सुदीनदीन-
मुन्मीलितेन शनकैररुणेन गाढम् ।
निःश्वस्य लोचनयुगेन निमीलितं त-
त्तन्व्याः सदा गुरुसमक्षमहं स्मरामि ॥

१२९१

अद्यापि तत्प्रचलकुण्डलघृष्टिगौरं
वक्त्रं स्मरामि विपरीतरताभियोगे ।

आन्दोलनश्रमजलस्फुटसान्द्रबिन्दु-
मुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥

विज्ञकस्य.

१२९२
मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
कान्तापयोधरतटे रतिखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥

१२९३
आ कर्णमूलमपकृष्य धनुः सबाणं
मय्येव किं प्रहरसि स्मर बद्धकोपः ।
तस्यां मुहुः क्षिप शरान्हरिणेक्षणायां
तन्मन्मथोऽपि भव मन्मथ एव मा भूः ॥

१२९४
प्राप्ते निदाघसमये मदनाग्नितापो
निर्वापितो मम यथा हि सुशीतलाङ्ग्या ।
सान्तर्गता दहति मां तरलायताक्षी
वामे विधौ प्रियतमापि विपक्षभूता ॥

१२९५
नभसि जलदलक्ष्मीं सास्रया वीक्ष्य दृष्ट्या
प्रवससि यदि कान्तेत्यर्धमुक्त्वा कथंचित् ।
मम पटमवलम्ब्य प्रोल्लिखन्ती धरित्रीं
यदनु कृतवती सा तत्र वाचो निवृत्ताः ॥

१२९६
विरहपवनवेगात्कम्पिताभिः शिखाभि-
र्दहति मम शरीरं निर्घृणो मन्मथाग्निः ।
अपसर मृगनेत्रे दह्यमानात्प्रतूर्णं
हृदयहतकगेहाद्दह्यसे त्वं न यावत् ॥

केषामपि.

१२९७

अलसवलितमुग्धस्निग्धनिःस्पन्दमन्दै
रभसविकसितान्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमून्मूलितं वा ॥

भवभूतेः.

१२९८

तव कुसुमशरत्वं शीतलत्वं हिमांशो-
र्द्वयमिदमयथार्थं दृश्यतेऽस्मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥

१२९९

ललितललितैरत्युत्पन्नैर्विलोक्य विलोकितै-
र्गुरुजनभयान्मन्दं मन्दं व्रजत्यवगण्य माम् ।
कतिपयपदन्यासं कृत्वा समुत्सुकमानसा
झटिति वलितग्रीवं बाला मुहुर्मुहुरीक्षते ॥

कस्यापि.

१३००

हेलोत्तानितवामहस्तपिहितस्मेरास्यमुद्राङ्गुलि-
च्छिद्रान्तर्दरदृश्यमानविकसद्दन्तांशुसंशोभितम् ।
पादाङ्गुष्ठविलिख्यमानवसुधं किंचिन्नमत्कंधरं
साचिक्षिप्तदृशो न मोहयति कं संभाषणं सुभ्रुवः ॥

१३०१

न्यक्कारेण बहिः प्रियेण हृदये गूढार्थसंसूचिना
साकूतेन विदग्धनर्मवचसा संजातमिथ्याक्रुधाम् ।
बालानां हसितानुविद्धरुदितश्रीमन्मुखीनां गिरः
कार्कश्येऽप्यविलुप्तमार्दवजुषः कुर्वन्ति कं नोत्सुकम् ॥

१३०२

नैरन्तर्यमुपैति गात्रलतिका छन्नैव यत्रांशुकैः
शुष्यन्नेव बिभर्ति मूर्तिमधरो यस्मिन्नसस्यन्दिनीम् ।
यस्मिन्विस्मृतमेव सुष्ठु विहितं कंदर्पतन्त्रं भवे-
न्मन्ये तस्य रतस्य चर्वितरसैः प्राप्तं फलं जन्मनः ॥

१३०३

संदष्टेऽधरपल्लवे सचकितं हस्ताग्रमाधुन्वती
मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता ।
सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं वृथैव मथितो मूढैः सुरैः सागरः ॥

१३०४

आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं
किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसः सीकरैः ।
तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतिव्यत्यये
तत्त्वां पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतैः ॥

१३०५

रतक्रीडा रण्डां रमयति चिरब्रह्मचरणा-
न्नवीनत्वात्कन्यामपि च पतिवत्नीं भयवशात् ।
विना त्वेतैर्वेश्या बहुलजनसंभोगरसवि-
द्धवेधस्य प्रीता ननु सुभगवाच्यः स पुरुषः ॥

१३०६

यः कंदर्पवसन्तयोरविरहो लोकप्रसिद्धया स्थित-
श्चित्तोन्माथिनि कामिनां स वपुषि व्यक्तं बतालक्ष्यते ।
यन्मुग्धाब्जमनोहरं स्तनयुगं बाहू लतालासिनौ
रोमाली भ्रमरावलिः किसलयाकारा नखश्रेणयः ॥

१३०७

तारुण्योष्माणि यत्पयोधरभरः कामप्युपैत्युन्नतिं
तस्मिन्नुन्नतिभाजि यन्मुखशशी भाति प्रसीदद्युतिः ।

तस्मिन्भाति यदीक्षणाम्बुजयुगं धत्ते विकासश्रियं
तन्मोहाय न कल्पतेऽद्भुतमिदं कस्य स्वरूपं तव ॥

१३०८

त्रिभिर्नेत्रैः कोपाकुलितहृदयो यं पशुपतिः
प्रयत्नेनाधाक्षीत्क्षपणमुररीकृत्य तपसः ।
हसन्तीनां हेलालसमभिपतन्पक्ष्मलदृशां
तृतीयो दृग्भागो झटिति तमनङ्गं जनयति ॥

१३०९

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥

१३१०

हर हर करुणापराङ्मुखोऽयं
गणयति तान्यपि वासराणि वेधाः ।
कुवलयनयनास्तनान्तरेषु
क्षणमपि येषु न शेरते युवानः ॥

केषामपि.

१३११

तरुणी रमणी रतिरम्यतरा
प्रमदा समदा सुखदा च सदा ।
दयिता यदि सा हृदये रसति
क्व जपः क्व तपः क्व समाधिविधिः ॥

कस्यापि.

१३१२

स्वप्नेन प्रापितायाः प्रतिरजनि तव श्रीषु मग्नाः कटाक्षाः
श्रोत्रे गीतामृताब्धौ त्वगपि तनुतनूमञ्जरीसौकुमार्ये ।
नासा श्वासाधिवासेऽधरमधुनि रसज्ञा चरित्रेषु चित्तं
तन्नस्तन्वाङ्गि कैश्चिन्न करणहरिणैर्वागुरा लङ्घितासि ॥

श्रीहर्षस्य.

१३१३

पाणौ मा कुरु चूतसायकममुं मा चापमारोपय
क्रीडानिर्जितविश्व मूर्छितजनाघातेन किं पौरुषम् ।
तस्या एव मृगीदृशो मनसिज प्रेङ्खत्कटाक्षेक्षण-
श्रेणीजर्जरितं मनागपि मनो नाद्यापि संधुक्षति ॥

१३१४

हृदि बिसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि ॥

एतौ जयदेवस्य.

१३१५

अस्माकमस्मान्मदनापमृत्यो-
स्त्राणाय पीयूषरसोऽपि नासौ ।
सुधारसादप्यधिकं प्रयच्छ
प्रसीद तन्वङ्गि निजाधरं नः ॥

१३१६

दयस्व किं घातयसि त्वमस्मा-
ननङ्ग चण्डालशरैरदृश्यैः ।
भिन्ना वरं तीक्ष्णकटाक्षबाणैः
प्रेम्णस्तव प्रेमरसात्पवित्रैः ॥

एतौ श्रीहर्षस्य.

१३१७

शशिमुखि विमुखी वियोगरोगा-
कुलिततनौ मयि चेत्तनोषि मानम् ।
कथय कथमखर्वगर्वशर्वा-
हितनिहितेषुगणान्सहे वराकः ॥

१३१८

कदाधरदले बाले दन्तकेसरशोभिते ।
भवामि त्वन्मुखाम्भोजे रसिको मधुपो यथा ॥

१३१९

धीशालिनां वचनपुण्ड्रकगोलकैः किं
तन्व्या वियोगविषमूर्छितचेतसो मे
ब्रूते जनो निगडबन्धनमस्य योग्यं
चेतो हठाद्व्रजति पादनिबन्धनं किम् ॥

१३२०

अपूर्वोऽयं कान्ते ज्वलति मुखदीपस्तव चिरं
तमो द्रष्टॄणां यो जनयतितरां याति सुतनो ।
अधस्ताद्यत्रेयं बत सुरभिधूमालकतति-
र्यदीया वार्तैव ज्वलयति पतङ्गानिव जनान् ॥

१३२१

मनश्चकोर को राकाशीतांशुरिति तन्मुखे ।
भ्रमो जिताब्जेऽपि दिवा द्युतिमांश्चन्द्रमाः कथम् ॥

एते रैरूपकस्य.

१३२२

प्रसादपरतन्त्रयोर्मधुमदोज्झितव्रीडयो-
श्चिरं मयि निरस्तयोः शिथिलहासहेलाजुषोः ।
प्रियानयनयोस्तदा यदनुभूतमन्तर्मया
सखे विगतवाचिकं तदलमेव किं ब्रूमहे ॥

कलशकस्य.

१३२३

पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः
प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः ।
स्फुटो रेखान्यासः कथमपि स तादृक्परिणतो
गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ॥

१३२४

ततश्चाभिज्ञाय स्फुरदरुणगण्डस्थलरुचा
मनस्विन्या रूढप्रणयगरिमोद्गद्गदगिरा ।

अहो चित्रं चित्रं स्फुटमिति निगद्याश्रुकलुषं
रुषा कामास्त्रं मे शिरसि निहितो वामचरणः ॥

दुर्वहकस्य.

१३२५

कृशासीत्यालीना मलिनवसनासीत्यवनता
चिराद्दृष्टासीति स्तनकलशकम्पं प्ररुदिता ।
परिष्वक्ता यावत्प्रणयपदवीं कामपि गता
ततः सारङ्गाक्ष्या हृदयमिदमापीतमिव मे ॥

कस्यापि.

१३२६

कृशा केनासि त्वं प्रकृतिरियमङ्गस्य ननु मे
मलाधूम्रा कस्माद्गुरुजनगृहे पाचकतया ।
स्मरस्यस्मान्कच्चिन्नहि नहि नहीत्येवमगम-
त्स्मरोत्कम्पं बाला मम हृदि निपत्य प्ररुदिता ॥

मारुलायाः.

१३२७

क्वचिन्मोहान्पश्याम्यविरचितलम्बालकमुखीं
क्वचित्संकल्पस्तां सुहृदिव पुरः स्थापयति मे ।
क्वचिद्द्रष्टव्याशा सुखयति मुहूर्तं ह्यनुसृता
नमस्तस्यै यस्या रमयति वियोगोऽपि हृदयम् ॥

१३२८

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं
प्रसक्ते निर्वाणे हृदय परितापं वहसि किम् ॥

( कालिदासस्य )

१३२९

विकल्परचिताकृतिं सततमेव तामीक्षसे
सदा समभिभाषसे समुपगूहसे सर्वदा ।
प्रमोदमुकुलेक्षणं पिबसि पाययस्याननं
तथापि च दिवानिशं हृदय हे किमुत्कण्ठसे ॥

१३३०

प्रसीद प्राणेशे कुरु मम वचः सुन्दरमुखि
त्यजैतत्संतप्तं मदनशिखिना दग्धहृदयम् ।
मदीयं बालत्वं प्रकृतिसुकुमाराङ्गलतिकं
वहन्तीमाशङ्के मदनहुतभुक्तामपि दहेत् ॥

एते केषामपि.

१३३१

सखे सत्यं सत्यं विरहदहनः कोऽपि हृदये
ज्वलत्यस्मिन्नक्तंदिनमपि न मे ताम्यति मतिः ।
अलं बालोन्मीलत्कमलकलिकाकोमलतनु-
र्वसत्यस्मिन्कान्ता सुचिरमिति चिन्ता दहति माम् ॥

भट्टवृत्तिकारस्य.

१३३२

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनामुक्तं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिव समुपस्थास्यत इति ॥

कालिदासस्य.

१३३३

अनारब्धाक्षेपं परमकृतबाष्पव्यतिकर-
मनुक्रान्तस्तापं हृदयविनिपीतव्यवसितम् ।
कृशाङ्ग्या यत्पापे व्रजति मयि नैराश्यपिशुनं
श्लथैरङ्गैरुक्तं हृदयमिदमुन्मूलयति तत् ॥

लुट्टकस्य.

१३३४

इदं किं ते न्यस्तं वलयिनि करे वक्त्रकमलं
न युक्तः कोपोऽयं प्रणयिनि निरागस्यपि जने ।
ब्रुवाणे मय्येवं श्वसनविषमोत्कम्पितकुचं
मृगाक्ष्यास्तत्कालं नयनजलमेवोत्तरमभूत् ॥

१३३५

व्रीडायोगान्नतवदनया संनिपाते गुरूणां
बद्धोत्कम्पं स्तनयुगलके मन्युमन्तर्नियम्य ।
तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं
मय्यासक्तश्चिरविरहिणीहारिनेत्रत्रिभागः ॥

यशःस्वामिनः.

१३३६

श्यामास्वङ्गं चकितहरिणप्रेक्षिते दृष्टिपातं
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासा-
न्हन्तैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति ॥

१३३७

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालिप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥

एतौ कालिदासस्य.

१३३८

स्वप्नेऽपि दुर्लभमहो तव दर्शनं मे
चञ्चच्चकोरनयनेऽस्मि यतो विनिद्रः ।
बाष्पेण रुद्धमपि मार्गनिदर्शनं मे
वामो विधिर्न सहते सुखमल्पमेव ॥

१३३९

अवधीरणां कृतवती भवती
मयि यत्कुकर्ममहिमा स हि मे ।
यदि चातको न लभतेऽम्बु घना-
द्वचनीयता भवति काम्बुमुचः ॥

एतौ रैरुपकस्य.

१३४०

प्रम्लाने नयने विपाण्डुरधरः क्षामं कपोलद्वयं
स्रस्ते बाहुलते शिरोरुहचयो व्यस्तस्थितिः सर्वतः ।
यैवं मद्भ्रमवार्तयापि हि दशामन्त्यां समारोपिता
याते सा मयि जीवतीति वचनं भ्रातर्न संभाव्यते ॥

१३४१

दूराभोगभरेण मुग्नगतिना स्पृष्टा नितम्बस्थली
धत्ते स्वर्णसरोजकुड्मलतुलां मुग्धं स्तनद्वन्द्वकम् ।
आलापाः स्मितसुन्दराः परिचितभ्रूविभ्रमा दृष्टय-
स्तस्यास्तर्जितशैशवव्यतिकरं रम्यं वयो वर्तते ॥

१३४२

याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥

अमरुकस्य.

१३४३

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥

कालिदासस्य.

१३४४

उद्वृत्तस्तनभारभङ्गुरमुरो नोत्कञ्चुकं कारिता
संयोगस्तु यथा तथेति सकला नीवी न विस्रंसिता ।
भूयः संगम आवयोः क्व नु भवेदेवं च नोल्लापिता
संभ्रान्तत्वरितेन भीतसुरतेनैवं वयं वञ्चिताः ॥

१३४५

केशैः केसरमालिकामपि चिरं या बिभ्रती खिद्यति
या गात्रेषु घनं विलेपनमपि न्यस्तं न सोढुं क्षमा ।
दीपस्यापि शिखां न वासभवने शक्नोति या वीक्षितुं
सा तापं विरहानलस्य महतः सोढुं कथं शक्ष्यति ॥

१३४६

सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरभरं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यसमाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥

१३४७

यासि त्वं विरहादहं हतमनाः प्राणाः कठोरक्रियाः
कष्टो मन्मथवह्निरेष विषमे मग्नास्मि या संकटे ।
इत्युक्त्वा कठिनस्तनाहतिवशव्याशीर्णबाष्पा प्रिया
यन्मत्कण्ठविलम्बिबाहुलतिकारोदीद्विलीये ततः ॥

१३४८

त्वं तस्यां यदि नाम रागविधुरं यातं समुत्सृज्य मां
तत्केनाहमिदं किमप्यनुभवाम्यन्तः समुत्कण्ठितम् ।
स्वस्थीभूय ननु क्षणं हृदय हे त्वं भावमाचक्ष्व मे
किं संतापविखण्डितस्य भवतो वृत्तिर्द्विधा जायते ॥

१३४९

उद्ग्रीवं खलु वीक्षितं वपुरिदं लज्जालसं यत्तदा
गच्छन्त्या सखिसंनिधौ किमपि यन्निर्वर्णकं भाषितम् ।
हे प्राणा विरहेण यात किमिदं नैर्घृण्यमालम्बितं
तत्स्मृत्वा यदि मुक्तमासितुमहो यूयं प्रमाणं मम ॥

श्रीकल्याणदत्तस्य.

१३५०

यास्यामीति वचोऽनयापि परुषं श्रुत्वा नमय्याननं
पादाङ्गुष्ठतलेन लोचनजलाक्लिन्नां लिखन्त्या भुवम् ।

यत्प्रोक्तोऽहमयि क्व गम्यत इति व्यावृत्य वक्त्रं तया
तन्मे शल्यमिवाद्य मर्मपतितं मृत्योः परं कारणम् ॥

१३५१

कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया तासां सखीनां पुरः ।
भूयो नैवमिति स्खलन्मृदुपदं संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन् ॥

कयोरपि.

१३५२

चक्षुर्द्रक्ष्यति रूपमन्तिकगतं वक्षः परिष्वक्ष्यते
पर्याप्तं रसना नवाधररसं पानोत्तमं पास्यति ।
श्रोत्रं श्रोष्यति हंसगद्गदकलं काले मितं भाषितं
त्वं चिन्तास्पद मूढ किं नु हृदय प्राप्तावपि प्राप्स्यसि ।

ईशानदेवस्य.

१३५३

दुःखार्ते मयि दुःखिता भवति या हृष्टे प्रहृष्टा तथा
दीने दैन्यमुपैति रोषपरुषे पथ्यं वचो भाषते ।
कालं वेत्ति कथाः करोति निपुणा मत्संस्तवे रज्यति
भार्या मन्त्रिवरः सखा परिजनः सैका बहुत्वं गता ॥

भासस्य.

१३५४

उद्वृत्तः स्तनभार एष तरले नेत्रे चले भ्रूलते
रागाधिष्ठितमोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् ।
सौभाग्याक्षरमालिकेव लिखिता पुष्पायुधेन स्वयं
मध्यस्थापि करोति तापमधिकं रोमावली केन मे ॥

कस्यचित्.

१३५५

पञ्चत्वं तनुरेतु भूतनिवहाः स्वांशान्विशन्तु प्रभो
धातस्त्वां शिरसा प्रणम्य कुरु मामित्यद्य याचे पुनः ।

तद्वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयालय-
व्योम्नि व्योम तदीयवर्त्मनि धरा तन्तालवृन्तेनिलम् ॥

दाक्षिणात्यस्य कस्यापि.

१३५६

कोशद्वन्द्वमियं दधाति नलिनी कादम्बचञ्चुक्षतं
धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम् ।
इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे
चेलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना ॥

कस्यापि.

१३५७

भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथां
कालात्मा कुटिलः करोतु कबरीभारोऽपि मारोद्यमम् ।
मोहं तावदयं च तन्वि तनुतां बिम्बाधरो रागवा—
न्सद्वृत्तः स्तनमण्डलस्तव कथं प्राणैर्मम क्रीडति ॥

श्रीजयदेवस्य.

१३५८

तद्वक्त्राब्जजितः प्रसह्य भजते क्षैण्यं क्षपावल्लभ-
स्तद्भ्रूविभ्रमतर्जितं च विनतिं धत्ते धनुर्मान्मथम् ।
तस्याः पेलवपल्लवद्युतिमुषा शोणाधरेणार्दितं
नूनं प्राप्य विरक्ततां वनमहीं बिम्बं समालम्बते ॥

क्षेमेन्द्रस्य.

१३५९

संतापी मलयानिलो न रतये सौधास्थिता चन्द्रिका
खेदायैव चिरं द्विरेफचलितोत्फुल्लाम्बुजा दीर्घिका ।
सर्वत्राहितविप्रतीपचरितस्यैवं मनोजन्मनः
केयं वृत्तिरदृष्टरूपविषमप्रस्थायिनी दृश्यते ॥

१३६०

दृष्टा सा वरबालिका गुरुजनाद्भीता वियोगातुरा
वैजन्ये सति किं कृशासि किमभूत्पीडेति पृष्टा मया ।

सस्नेहं सभयं विलोक्य मिषतो मत्संनिकर्षागता-
नङ्गो वेति यदित्यवोचदुदितोच्छ्वासं ततो मे व्यथा ॥

१३६१

ईषन्मन्थरलोललोचनयुगं व्यावर्तितभ्रूलतं
संदष्टाधरवेदनाप्रलपितं हा हेति मन्दाक्षरम् ।
कान्तायाः सुरतावसानसमये दृष्टं मुखं यन्मया
स्वेदार्द्रीकृतपाण्डुगण्डपुलकं तत्केन विस्मार्यते ॥

१३६२

जाने कोपपराङ्खी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मु
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः ।
नो यावत्परिरम्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रः कृतः ॥

निद्रादरिद्रस्य.

१३६३

रक्ताशोक कृशोदरी क नु गता त्यक्त्वानुरक्तं जनं
नो दृष्टैव मयेति कम्पयसि किं वातावधूतं शिरः ।
उत्कण्ठाघटमानषट्दघटासंघट्टदष्टच्छद-
प
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥

वसुनागस्य.

१३६४

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥

श्रीयशोवर्मणः.

१३६५

एकः स व्यसनी पुमानचरमैर्निःश्वासवातैः समं
हा मे सा दयितेति यस्य वदतः प्राणाः समं निर्गताः ।

अन्ये तु व्यसनं क्षिपन्ति पशवः कान्तावियोगोद्भवै-
श्चिन्ताग्लानिविषाददैन्यजनितैर्बाष्पैरनाहारिणः ॥

कस्यापि.

१३६६

यत्त्वन्नेत्रसमानकान्ति सलिले तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारः शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता–
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

श्रीयशोवर्मणः.

१३६७

तैस्तैश्चाटुभिराज्ञया किल तया वृत्ते रतिव्यत्यये
लज्जामन्थरया तया निवसिते भ्रान्त्या मदीयांशुके ।
तत्पट्टांशुकमुद्वहन्नहमपि स्थित्वा यदुक्तोऽधुना
वेषो युज्यत एष एव हि तवेत्येतन्न विस्मर्यते ॥

अमरुकस्य.

१३६८

आश्लिष्टापि करोति सा मम तनुं कण्ठग्रहोत्कण्ठितां
दृष्टापि प्रियदर्शना नियमयत्यक्ष्णोर्दिदृक्षां पुनः ।
अन्तश्चेतसि संस्थितापि हृदयं भूयो विशत्येव मे
रूढप्रेमसमागमापि नवतां धत्ते प्रिया प्रत्यहम् ॥

गोपादित्यस्य.

१३६९

तन्व्या संप्रतिपत्तिदुःसहतरैर्वाक्यैर्विषण्णानने
मय्यन्योन्यपरीक्षणात्परिजने मूकस्मितं कुर्वति ।
तत्पादप्रणतिप्रसङ्गरभसानस्मान्विलोक्याकुलं
धृष्टेत्येतदवादि यन्मृगदृशा तेनाहमाश्वासितः ॥

१३७०

स्वाधीनेति न चुम्बितातिनिपुणं पीतोऽधरो नो तृषा
नो तस्या गतिरीक्षिता न हसितं नालिङ्गिता यत्नतः ।

संक्रुद्धापि न तोषिता प्रियतमा मूढेन यावन्मया
तावद्दैवदुरात्मना कथमहं नीतो वियोगं सखे ॥

१३७१

श्वो गन्तव्यमिति प्रजागरदशा मां वीक्ष्य यात्रोन्मुखं
बाष्पेणाकुललोचना स्मितवती मन्मङ्गलाशंसिनी ।
श्रुत्वा प्रत्युषसि प्रभातपटहं प्रत्यूषवाताहता
हा रात्रिस्त्वरिता गतेति पतिता कान्ता प्रियस्योरसि ॥

एते केषामपि.

१३७२

काञ्चीदामकबन्धनं सललिता कर्णोत्पलैस्ताडना
हेलालिङ्गनविघ्नमाहितरुषा मौनेन निर्भर्त्सनम् ।
किं पूर्वोचितमेतदत्र सहसा विस्मृत्य मन्योर्भरा-
न्मय्युत्कण्ठमनस्यदर्शनपथं यातास्यहो कोपने ॥

१३७३

तद्रूपामृतपानदुर्ललितया दृष्ट्या क्व विश्रम्यतां
तद्वाक्यश्रवणाभियोगपरयोः श्रव्यं कुतः श्रोत्रयोः ।
एतैस्तत्परिरम्भनिर्भररसैरङ्गैः कथं स्थीयतां
कष्टं तद्विरहेण संप्रति वयं कष्टामवस्थां गताः ॥

१३७४

सैका दिक्कृतपुण्यतामुपगता यत्रास्ति मुग्धेक्षणा
स्थानं तद्वसुधा बिभर्ति सफलं यत्तदाध्यासितम् ।
धन्यं तन्नभसोऽन्तरं व्रजति यत्तच्चक्षुषोर्गोचरं
तेभ्यो धन्यतरं ममैव हृदयं यत्तन्मयं वर्तते ॥

१३७५

पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मामालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ॥

१३७६

दैवाद्दासोऽपराधी यदि भवति ततस्ताड्यते बध्यते वा
मौनेनानेन मानप्रकटनपटुना नीयते किंकरत्वम् ।
इत्थं तस्या मयोक्तं तरलतरदशाप्यङ्कपालीप्रसक्तं
मुक्तं मुक्ताफलालीधवलरुचि तया निर्वचो लोचनाम्भः ॥

१३७७

पादाङ्गुष्ठेन भूमिं किसलयमृदुना सापदेशं लिखन्ती
भूयो भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे ।
वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना
यत्सा नोवाच किंचित्स्थितमपि हृदये तन्मनो मे दुनोति ॥

१३७८

अद्यापि तन्मनसि संपरिवर्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या ।
जीवेति मङ्गलवचः परिहृत्य पश्चा-
त्कर्णे कृतं कनकपत्रमनालपन्त्या ॥

अयं बिह्लणस्य.

१३७९

स्थानान्निर्गत्य दूरं व्रजति मयि चिरं मुक्तकण्ठं रुदित्वा
पश्चान्निर्मृज्य नेत्रे प्रणतिमुपगता वेपमानाङ्गयष्टिः ।
कान्ता यन्मामवोचत्प्रलयघनघटाटोपबद्धान्धकारे
काले कापालिकोऽपि प्रवसति न गृहात्तन्मनो मे दुनोति ॥

कस्यापि.

१३८०

किं बाले मुग्धतेयं प्रकृतिरियमथो रौद्रता किं नु कोपः
किं वा चापल्यमुच्चैर्व्रतमुत किमु ते यौवनारम्भदर्पः ।
यत्क्लेशालापवक्त्रस्मितललितकुचभ्रूविलासावलग्नैः
स्वस्थो लोकस्त्वदीयैर्मनसि विनिहितैर्दह्यतेऽमीभिरार्यः ॥

अमरुकस्य.

## अथ दूत्युक्तयः

१३८१

हस्ते कपोलममलं पथि चक्षुर्मनस्त्वयि ।
न्यस्तमास्ते चिरं तस्या मानस्यावसरः कुतः ॥

वररुचेः.

१३८२

प्रकटयति क्षणभङ्गं पश्यति सर्वं जगद्गतं शून्यम् ।
आचरति स्मृतिबाह्यं जाता सा बौद्धबुद्धिरिव ॥

१३८३

गुणवृद्धिवर्णलोपद्वन्द्वनिपातोपसर्गसंकीर्णा ।
दुर्घटपदवाक्यार्था व्याकरणप्रक्रियेवासौ ॥

१३८४

अतिपरिगृहीतमौना वर्जितमाल्यानुलेपनस्नाना ।
दूरोत्सारितलज्जा निर्ग्रन्थग्रन्थरचनेव ॥

१३८५

अस्तमितविषयसङ्गा मुकुलितनयनोत्पला मृदुश्वसिता ।
ध्यायति किमप्यलक्ष्यं निस्वं योगाभियुक्तेव ॥

१३८६

अनवरतनयनविगलितजललवघटिताक्षसूत्रवलयेन ।
मृत्युंजयमिव जपति त्वद्गोत्रं विरहिणी बाला ॥

कस्यापि.

१३८७

सा सुन्दर तव विरहे सुतनुरियन्मात्रलोचना सपदि ।
एतावतीमवस्थां याता दिवसैरियन्मात्रैः ॥

भट्टरुद्रटस्य.

१३८८

कुमुदामोदी पवनः पिककूजितभृङ्गसार्थरसितानि ।
इयमियती सामग्री घटिता दैवेन तद्विनाशाय ॥

दामोदरगुप्तस्य.

१३८९

अकृतप्रेमैव वरं न पुनः संजातविघ्नितप्रेमा ।
उद्धृतनयनो हि यथा ताम्यत्येवं न जात्यन्धः ।।

रविगुप्तस्य.

१३९०

दुःखदशां प्रविशन्त्यास्तस्याः कण्ठं मुहुर्मुहुर्बाष्पः ।
स्वल्पावशेषजीवितनिर्याणभियेव निरुणद्धि ।।

बाणस्य.

१३९१

मन्मथशरयातितया याति तया त्वयि सुदूरमध्वानम् ।
अध्वानमेव रुदितं सखे सखेदं सखीषु पुरः ।।

अम्बकस्य.

१३९२

मौने निषण्णा कृतभूरिरक्षा
खट्वाङ्गलीना दधती जटाश्च ।
सा त्वत्कृते ध्यानपरा वराकी
व्रतं महापाशुपतं पपन्ना ।।

१३९३

त्वदर्थिनी चन्दनभस्मदिग्धा
ललाटलेखाश्रुजलाभिषिक्ता ।।
मृणालचीरं दधती स्तनाभ्यां
स्मरोपदिष्टं चरति व्रतं सा ।।

कयोरपि.

१३९४

खे खेदमन्दां विनिवेश्य दृष्टि-
मालोक्य शोभातिशयं घनानाम् ।
नेदीयसा सा मरणेन किंचि-
दाश्वासिता प्राणिति मा स्म भैषीः ।।

शकचेल्लस्य.

१३९५

मूर्छानुबन्धश्वसितप्रलाप-
प्रजागरोत्कम्पविजृम्भणानि ।
फलान्यवाप्तानि तया सुखार्थ-
मात्मार्पणं त्वय्यपि नाम कृत्वा ॥

रत्नाकरस्य.

१३९६

प्रियतमस्त्वमिमामनघार्हसि
प्रियतमा च भवन्तमिहार्हति ।
न हि विभाति निशारहितः शशी
न च विभाति निशापि विनेन्दुना ॥

मोरिकायाः.

१३९७

झगिति वीक्ष्य न यः पुनरीक्षितो
वरमवीक्षित एव स तादृशः ।
व्रजति वल्लभतां च सुदुर्लभो
विषमहो बहलामृतमिश्रितम् ॥

१३९८

स्वप्नान्तरे समुपलभ्य च सा भवन्तं
मिथ्योपगूहनविषक्तभुजावबुध्य ।
दृष्टोऽसि यत्र शयनेऽद्य तदध्यशेत
मुग्धा पुनः पुनरलीकनिमीलिताक्षी ॥

१३९९

तस्या महाशिखरवह्निशिखाकलाप-
तप्ते स्थितोऽसि हृदये सततं प्रियायाः ।
प्रालेयसीकरसमे हृदि सा कृपालो
बाला क्षणं वसति नैव खलु त्वदीये ॥

एते केषामपि.

१४००

ये निर्दहन्ति दशनश्वसितावलोकैः
क्रूरा द्विजिव्हकुटिलाः क्व विलासिनस्ते ।
भीष्मोष्मभिः स्मरणमात्रविषैस्तवेय-
मव्याल मारयति कापि भुजंगभङ्गिः ॥

भट्टवासुदेवस्य.

१४०१

बाला तन्वी मृदुरियमिति त्यज्यतामत्र शङ्का
दृष्टा काचिद्भ्रमरभरतो मञ्जरी भग्नपुष्पा ।
तस्मादेषा रहसि भवता निर्दयं पीडनीया
मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः कदाचित् ॥

विकटनितम्बायाः.

१४०२

किं पृष्टेन द्रुततरमितो गम्यतां सा प्रिया ते
दृष्टा भ्रातर्दिवसमखिलं सास्रमेकं मयैव ।
पान्थे पान्थे त्वमिति रभसोद्ग्रीवमालोकयन्ती
दृष्टे दृष्टे न भवति भवानित्युदस्रं वलन्ती ॥

१४०३

विमुञ्चन्त्या प्राणांस्तव विरहदुःखासहनया
तया संदिष्टं ते कठिनहृदयापश्चिममिदम् ।
अपत्यं बालैका मम विधिहतायाः सलिलदा
यथा नेयं सेवाव्यसनरुचये दीयत इति ॥

ब्रह्मयशःस्वामिनः.

१४०४

त्वां ध्यात्वा विजने प्रयाति सहसा भित्त्या निकामं हता
संज्ञां प्राप्य कथं गतो गतघृणः प्रत्येकमाभाषते ।
किं वा यन्न करोति दैवहतिका प्रामाणिकस्त्वं तु ता-
मुन्मत्तामपहाय साधुचरितास्वन्यासु मध्ये स्थितः ॥

१४०५

हस्तन्यस्तकपोलया दयितया तिर्यङ्नतग्रीवया
नासाग्रस्थितनेत्रवारिविसरैः संसिच्यमानाङ्गया ।
मन्युस्तम्भितबाष्पगद्गदगिरा प्रोच्चारितार्धाक्षरं
संदिष्टं तव यत्तया सकरुणं वक्तुं न तत्पार्यते ॥

१४०६

ग्रीष्माभा श्वसितैर्घनोद्गतिनिभा स्थूलाश्रुभिः संततैः
क्षामा पाण्डुपयोधरा शरदियं हेमन्तवत्कम्पितैः ।
विस्रस्ताननपङ्कजा शिशिरवत्स्वेदैर्मधुश्रीरहो
तस्यास्त्वद्विरहेण कौतुककृता सर्वर्तवो दर्शिताः ॥

हरिगणस्य.

१४०७

अच्छिन्नं नयनाम्बु बन्धुषु कृतं तापः सखीष्वाहितो
न्यस्तं दैन्यमशेषतः परिजने चिन्ता गुरुभ्योऽर्पिता ।
अद्य श्वः किल निर्वृतिं व्रजति सा श्वासैः परं खिद्यते
विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ॥

अमरुकस्य.

१४०८

किं वा बाहुलताकवाटफलकैर्नैवार्गला कल्पिता
किं वा प्रावरणाञ्चले न विधृतः किं वा न मिथ्या क्षुतम्
किं पादेषु निपत्य वातिकरुणं नोत्कण्ठया क्रन्दितं
गेहादुच्चलिते किमन्यदबलालोकः करोतु प्रिये ॥

श्रीडामरस्य.

१४०९

भ्रातः पान्थ गृहं व्रज द्रुततरं दृष्टा मया ते प्रिया
त्वद्वार्ताश्रवणोत्सुका प्रतिपथं पान्थं समेत्यादरात् ।
बाष्पव्याकुलकण्ठगद्गदतया वक्तुं न शक्ता सती
सोच्छ्वासं स्फुटिताधरं च वलितग्रीवं चिरं रोदिति ॥

कस्यापि.

१४१०

नेत्रे त्वन्मार्गलोले गलदलसलसद्वारिधाराकराले
श्वासायासश्रमार्तं स्फुरदधरदलं लोलुपं त्वन्मुखाब्जे ।
चेतश्चिन्तैकतानं त्वयि कृतमथवा सर्वमेव त्वयात्तं
शेषः शोकः कृशाङ्ग्यास्तमपि विधिहता चेष्टते ते प्रदातुम् ॥

भट्टगोविन्दराजस्य.

१४११

दाहोऽम्भः प्रसृतिंपचः प्रचयवान्बाष्पः प्रणालोचितः
श्वासाः प्रेङ्खितदीप्रदीपलतिकाः पाण्डिम्नि मग्नं वपुः ।
किंचान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥

राजशेखरस्य.

१४१२

किंजल्कामोदमाद्यन्मधुकरमधुरे साधुना माधवेऽस्मि-
न्नास्तां दूरेण तावद्विरहहुतभुजा दह्यमाना वराकी ।
क्षामक्षामामिमां स्वां तनुमतिचपल प्रेक्षसे किं स्वयं नो
कोऽयं मानग्रहस्ते कुरु वचनमिदं दूतिकायाः प्रयाहि ॥

शशिवर्धनस्य.

१४१३

स्वप्नेऽपि नाथ सुखदं मुखदर्शनं ते
बालाकुला न लभते विरहाद्विनिद्रा ।
त्वन्मार्गवीक्षणसुखं परमेव तस्या
आसीद्यदश्रुनिवहेन निवारितं तत् ॥

पं० श्रीबकस्य.

१४१४

माल्यं शल्यं गृहकमलिनीकूलमेतत्कुकूलं
वल्ली भल्ली हिमरसमयी वापिका तापिकापि ।
वातः पातः खरशरभरस्योन्मृणाली मृणाली
सारङ्गाक्ष्या रमणविरहे हन्त हारः प्रहारः ॥

१४१५

आहारं प्रति यत्कथापि शमिता यन्मौनमुद्रा मुखे
यच्चक्षुर्विनिमीलनं तनुलता यत्तानवे वर्तते ।
एकान्ते यदवस्थितिर्यदपि च ध्यानैकतानं मन-
स्तन्मन्ये सुभग त्वदर्थमनया तप्येत तीव्रं तपः ॥

शंभोः.

---

## अथ सखीप्रश्नाः

१४१६

उल्लापयन्त्या दयितस्य दूतीं
वध्वा विभूषां च निवेशयन्त्याः ।
प्रसन्नता कापि मुखस्य जज्ञे
वेषश्रिया नु प्रियवार्तया नु ॥

शिवस्वामिनः.

१४१७

मर्मणि स्पृशति भाषते प्रियं
प्रेम संस्मरति रन्ध्रमीक्षते ।
ईदृशस्य बहुचित्रकारिणो
विक्रियापि न शठस्य लक्ष्यते ॥

१४१८

अलमलमघृणस्य तस्य नाम्ना
पुनरपि सैव कथा गतः स कालः ।
कथय कथय वा तथापि दूति
प्रतिवचनं द्विषतोऽपि माननीयम् ॥

एतौ वासुदेवस्य.

१४१९

निःस्पन्दलोचनविलोकितकान्तदूत्यां
विन्यस्तहाररशनागुणभूषणायाम् ।
केयूरनूपुरविपर्ययभाजि जाता
कान्तिर्नवेव दयिताहितलोचनायाम् ॥

गोविन्दराजस्य.

१४२०

कथय निपुणं कस्मिन्दृष्टः कथं नु कियच्चिरं
किमभिलषितं किं तेनोक्तं कदा स इहैष्यति ।
इति बहुविधप्रेमालापप्रकल्पितविस्तराः
प्रियतमकथाः स्वप्नेऽप्यर्थे प्रयान्ति न नेष्टताम् ॥

१४२१

नायातः सखि निर्दयो यदि शठस्त्वं दूति किं दूयसे
स्वच्छन्दं बहुवल्लभः स रमते किं तत्र ते दूषणम् ।
पश्याद्य प्रियसंगमाय दयितस्याकृष्यमाणं गुणै-
रुत्कण्ठार्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥

१४२२

जानेऽन्यासहितं विलोक्य कुटिलं तं कूटवेषं त्वया
प्रत्यक्षागासि निह्नवासहनया कोपेन दष्टोऽधरः ।
श्वासायासविसंस्थुला न च कुचोत्कम्पं विमुञ्चस्यहो
मोहाद्दुःसहविप्लवे चपलया किं प्रेषिता त्वं मया ॥

क्षेमेन्द्रस्य.

१४२३

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तथेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमा
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

कस्यापि.

१४२४

किं त्वं दूति गता गतास्मि सुभगे तस्यान्तिकं कामिनः
किं दृष्टः सुचिरं करोति किमसौ वीणाविनोदक्रियाम् ।
सौभाग्योदयगर्वितः किमवदन्नैवोत्तरं दत्तवा-
न्किं गर्वान्न हि बाष्पगद्गदतया धूर्तस्य माया हि सा ॥

## अथोपहासाः

१४२५

नायातः सामदानाभ्यामिति भेदेऽपि दर्शिते ।
साधु यद्दुर्विनीतस्य त्वया दण्डो निपातितः ॥

१४२६

विहारः कण्ठदेशोऽयं कषाये तव लोचने ।
मुखं विगतरागं च दूति प्रव्रजितासि किम् ॥

१४२७

अनेन वीतरागेण बुद्धेनेवाधरेण ते ।
दूति निर्व्याजमाख्याता सर्ववस्तुषु शून्यता ॥

१४२८

किं त्वं निगूहसे दूति स्तनौ वक्त्रं च पाणिना ।
खण्डिता एव शोभन्ते शूराधरपयोधराः ॥

१४२९

दूति किं तेन पापेन शास्त्रातिक्रमकारिणा ।
पञ्च पञ्चनखा भक्ष्याः षष्ठी त्वं येन भक्षिता ॥

१४३०

पार्श्वाभ्यां सप्रहाराभ्यामधरे व्रणखण्डिते ।
दूति सङ्ग्रामयोग्यासि न योग्या दूतिकर्मणि ॥

१४३१

नखदन्तक्षतक्षामे क्षन्तव्यं दूति मे त्वया ।
अक्षौहिण्यो दशाष्टौ च मित्रार्थे निधनं गताः ॥

१४३२

त्वया कर्म कृतं दूति यत्तदन्येन दुष्करम् ।
शरणागतविध्वंसी छिद्रान्वेषी निपातितः ॥

१४३३

क्षामा तनुर्गतिः खिन्ना नेत्रे तरलतारके ।
वागस्पष्टा श्लथं वासो दूति त्वं ज्वरितासि किम् ॥

१४३४

बहुनात्र किमुक्तेन दूति मत्कार्यसिद्धये ।
स्वमांसान्यपि दत्तानि वस्तुष्वन्येषु का कथा ॥

वररुचेः.

१४३५

वेल्लितालकसमृद्धि ललाटं
पाटलद्युति कपोलयुगं च ।
वेपते तनुरियं तव जाने
ताडितैव भवती रमणेन ॥

जयमाधवस्य.

१४३६

सवेपथुं कण्टकिनीं स्खलद्गतिं
कलं क्वणन्तीं शयनैकतत्पराम् ।
अशेषगात्रप्रभविष्णुतां गतः
कथं ज्वरस्त्वां वनजाक्षि मोक्ष्यति ॥

कस्यापि.

१४३७

रजन्यामन्यस्यां सुरतपरिवर्तादनुचितं
मदीयं यद्वासः कथमपि हृतं तेन सुहृदा ।
त्वया प्रत्यानीतं स्वनिवसनदानात्पुनरिदं
कुतस्त्वादृग्दूति स्खलितशमनोपायनिपुणा ॥

बीजकस्य.

१४३८

नायातो यदि तादृशं स शपथं कृत्वापि दूति प्रिय-
स्तत्किं कोपनया त्वया स्वदशनैरग्राधरः खण्डितः ।
स्वेदाम्भः कणदायि वेपितमिदं त्यक्त्वा भज स्वस्थतां
लोकः कस्य सखि स्वभावकुटिलस्यान्तर्गतं ज्ञास्यति ॥

कस्यापि.

१४३९

रोमाञ्चं वहसि श्वसित्यतितरां ध्यानं किमप्याश्रिता
दृष्टिस्ते भ्रमति प्रचण्डचपले व्यक्तं च ते सीत्कृतम् ।
तं दृष्ट्वा किल बन्धकीव सुरतव्यापारदक्षं जनं
किं दूति ज्वरितासि पापमथवा स्पृष्ट्वा भवन्त्यापदः ॥

कस्यापि.

१४४०

श्वासाः किं त्वरितागतैः पुलकिता कस्मात्प्रसादः कृतः
स्रस्ता वेण्यपि पादयोर्निपतनान्नीवी गमादागमात् ।
स्वेदार्द्रं मुखमातपेन गलितं क्षामा किमत्युक्तिभि-
र्दूति म्लानसरोरुहद्युतिधरस्यौष्ठस्य किं वक्ष्यसि ॥

शीलाभट्टारिकायाः.

१४४१

कस्माद्दूति श्वसिषि निभृतं सत्वरावर्तनेन
भ्रष्टो रागः किमधरदले प्रार्थनाभिस्त्वदर्थम् ।
स्रस्ता चेयं किमलकततिस्तत्पदालुण्ठनेन
वासस्तस्य त्वयि वद कथं प्रत्ययार्थं तवैव ॥

कस्यापि.

१४४२

स्वेदः कस्मात्तव पथि मनस्तापसंतापदोषा-
दोष्ठो दष्टस्तव भवति किं प्रार्थनाभङ्गरोषात् ।
गण्डे नष्टः किमयि तिलकस्त्वद्व्यथोक्तौ रुदत्याः
पुंसो वासः किमममलमलं दुर्जनाद्रक्षितुं स्वम् ॥

पं० जोनकस्य.

१४४३

कस्माद्भग्नाः सुमुखि वलया मार्गपातान्निशायां
किं ते वक्त्रं विगतरचनं क्षालितं धूलिपूर्णम् ।
ओष्ठे रागः किमपि गलितस्त्वद्व्यथोच्छ्वासवातै-
स्तद्वासः किं हृतमिति मया वस्त्रलोभात्किलेति ॥

पं० श्रीबकस्य.

१४४४

मत्कार्यसिद्धयै तव हन्त याम्या
मार्गे पुरोभूत्परुषः समीरः ।
यद्वाहतेयं लुलितालकत्वं
पर्यस्तबन्धः कवरीनिवेशः ॥

१४४५

संस्पृश्य तं दुश्चरितैकबन्धुं
सखि त्वया किं विहितोवगाहः ।
आर्द्राणि गात्राणि तवासते य-
द्वत्से च यन्निस्तिलकं ललाटम् ॥

१४४६

केन क्रमेण स्विदथाद्वितीया
तेनाधिकं सुन्दरि भायिताभूः ।
यच्छाम्यति व्याकुलितेक्षणाया
नाद्यापि ते कम्पकलानुबन्धः ॥

१४४७

स्व एव कस्तूरिकपङ्कजन्मा
दोषं ध्रुवं ते व्यधिताङ्गरागः ।
बिभर्षि यत्सौरभसाङ्गिभृङ्ग-
दंशव्रणैर्भङ्गुरमङ्गमङ्गम् ॥

१४४८

नखानखि प्रस्तुत आस्त तस्य
केनापि सार्धं किमु संप्रहारः ।
यद्वारणार्थं सहसा विशन्ती
त्वं तन्नखोल्लेखपथं गतासि ॥

प० मङ्खकस्य.

---

## अथ स्त्रीविलोकनम्

१४४९

स्त्रीति नामापि मधुरं कं न कुर्यात्स्मरातुरम् ।
किमुतौदार्यचातुर्यप्रसादमधुरं वचः ॥

१४५०

अमृतस्येव कुण्डानि सुखानामिव राशयः ।
रतेरिव निधानानि योषितः केन निर्मिताः ॥

१४५१

स्त्रीत्येव गलितं धैर्यं सुरूपेति किमुच्यते ।
कष्टं सहृदया सा चेत्सस्पृहेत्यतिदुःसहम् ॥

भर्तृसारस्वतस्य.

१४५२

किं नु लीना विलीना किं सुप्ता किं नु मृता नु किम् ।
परिष्वक्तैव कुरुते सा मे शङ्काशतं प्रिया ।

१४५३

अकृत्रिमप्रेमरसा विलासालसगामिनी ।
असारे दग्धसंसारे सारं सारङ्गलोचना ॥

१४५४

अभ्यासः कर्मणां सत्यमुत्पादयति कौशलम् ।
विधिना तावदभ्यस्तं यावत्सृष्टा मृगेक्षणा ॥

केषामपि.

१४५५

अस्याः कान्तस्य रूपस्य सर्वौपम्यातिशायिनः ।
एकैव गच्छेत्सादृश्यं स्वच्छाया दर्पणाश्रिता ॥

मणिभद्रस्य.

१४५६

मारयन्त्या जनं त्वस्या निरागसमवज्ञया ।
मातङ्गानां गतिर्यादृक्तादृगासीदसंशयम् ॥

शकवृद्धेः.

१४५७

धाता यदि न चक्षुष्मान्केनेयं निर्मितेदृशी ।
अथ चेद्दृष्टिरस्त्यस्य को हेतुरपरिग्रहे ॥

कस्यापि.

१४५८

अमृतरससारभूतः सकलकलो मकरकेतुसर्वस्वम् ।
अखिलजननयनसुखकृत्कथमिन्दुर्वासरेऽभ्युदितः ॥

शशिवर्धनस्य.

१४५९

निस्सङ्गमङ्गैर्मदनानलोत्थं
संतापहालाहलपाण्डुगौरैः ।
बद्धापि संदश्य तनोति जीव-
मजातपूर्वेयमहो भुजंगी ॥

गोविन्दस्वामिनः.

१४६०

अस्याः सर्गविधौ प्रजापतिरहो चन्द्रो न संभाव्यते
नो देवः कुसुमायुधो न च मधूर्दूरे विरिञ्चिः प्रभुः ।
एतन्मे मतमुत्थितेयममृतात्काचित्स्वयं सिन्धुना
या मन्थाचललोडितेन हरये दत्त्वा श्रियं रक्षिता ॥

१४६१

भास्वद्बिम्बाधरा कृष्णकेशी सितकरानना ।
हरिमध्या शिवाकारा सर्वदेवमयीव सा ॥

कह्लणस्य.

१४६२

जनमजितमपीच्छता विजेतुं
निशितदशार्धशरं धनुर्विमुच्य ।
अतिरभसतयोद्यता स्मरेण
ध्रुवमसियष्टिरिहाङ्गनाभिधाना ॥

मेण्ठकस्य.

१४६३

किं कौमुदीः शशिकलाः सकला विचूर्ण्य
संयोज्य चामृतरसेन पुनः प्रयत्नात् ।
कामस्य घोरहरहुंकृतिदग्धमूर्तेः
संजीवनौषधिरियं विहिता विधात्रा ॥

भट्टोद्भटस्य.

१४६४

एकान्तसुन्दरविधानजडः क्व धाता
सर्वाङ्गकान्तिचतुरं क्व नु रूपमस्याः ।
मन्ये महेश्वरभयान्मकरध्वजेन
प्राणार्थिना युवतिरूपमिदं गृहीतम् ॥

कस्यापि.

१४६५

किं सुन्दरैरिदमतोथ बहूनि तानि
वेधाः करोति बत नैव विवेचयामः ।
लावण्यमत्र किमु मूर्तमिदं नु तद्वा
निर्माणशिष्टममृतं वपुषः किमस्याः ॥

कलशस्य.

१४६६

अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं
रतिरपि रतिः कामः कामो मधूनि मधून्यपि ।
इति न भजते वस्तु प्रायः परस्परसंकरं
तदियमबला लक्ष्मीं धत्ते कुतः सकलात्मिकाम् ॥

रा० श्रीविजयपालस्य

१४६७

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं स विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोतिगमिदं रूपं पुराणो मुनिः ॥

कालिदासस्य.

१४६८

लक्ष्मीः स्याद्यदि तादृशी मधुरिपुर्मूर्ध्ना वहेन्नो रमां
गौरी वा सकलं हरेत्पशुपतेर्नार्धं शशाङ्काङ्कितम् ।
सीता वा नलकूबरान्न गणयेद्भीतिं स रक्षःपतिः
पश्येत्तां कमलासनौ यदि भवेन्न ब्रह्मचारी पुनः ॥

१४६९

निर्मातुं कुलोप्यदृष्टविषये रूपे न जातु क्षमो
दृष्ट्वा वस्तु करोति तत्प्रतिकृतिं संदर्शनानुक्रमात् ।
तां सृष्ट्वाप्यसमानरूपचरितां नान्या कृता तादृशी
धात्रा यत्सुकरं तदेव न कृतं यद्दूष्करं तत्कृतम् ॥

१४७०

पीनेन स्तनमण्डलेन गुरुणा सैका नितम्बेन च
द्वाभ्यां मन्दगतिः कृता यदि जनास्तन्वी न तत्कौतुकम् ।
एतत्पश्यत चित्रमत्र सहसा यद्बालयाप्येकया
द्रष्टारः सकला निरुद्धगतयो निःसङ्गगात्राः कृताः ॥

केषामपि.

१४७१

किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा मञ्जरी
लीलाप्रोच्छलितस्य किं लहरिका लावण्यवारां निधेः ।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविस्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥

बन्धोः.

१४७२

लावण्यद्रविणव्ययो न गणितः क्लेशो महान्स्वीकृतः
स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्तानलो दीपितः ।
एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता
कोर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥

धर्मकीर्तेः.

१४७३

असामान्योल्लेखं विरसहतदेवाकिनमलं
विधिं वन्दे निन्दाम्युत बत न जाने किमुचितम् ।
अनर्घं निर्माणं ललिततनु यस्येह भवती
न यः कृत्वापि त्वां परिहरति सर्गव्यसनिताम् ॥

सूक्तिकलशस्य.

१४७४

येनेयं ग्लपिताखिलान्यललनासौन्दर्यरम्याकृतिः
शिल्पोत्कर्षवशाद्विशालनयना निष्पादिता वेधसा ।
वक्त्राम्भोजविलोकनोत्थमदनव्याधिः स मन्ये मृतो
येनास्याः सदृशी न काचिदपरा स्रष्टुं पुनः पारिता ॥

कस्यापि.

१४७५

इन्दोः संक्षयरक्षिणाक्षतसुधा किं वेधसा निर्मिता
किं धैर्यापहरा हरस्य विहिता कामेन कान्ता तनुः ।
किं तारुण्यवसन्तकान्तिललिता शृङ्गारसिक्ता लता
किं लावण्यतरङ्गिणी पुनरियं जन्मान्तराप्ता रतिः ॥

---

## अथ स्त्रीप्रशंसा

१४७६

जये धरित्र्याः पुरमेव सारं
पुरे गृहं सद्मनि चैकदेशः ।
तत्रापि शय्या शयने वरस्त्री
रत्नोज्ज्वला राज्यसुखस्य सारम् ॥

१४७७

क्रतुं धनानां फलमग्र्यमाहुः
फलं क्रतूनामविवादि पुण्यम् ।
पुण्यस्य पूर्णं फलमिन्द्रलोको
द्विरष्टवर्षाः स्त्रिय एव नाकः ॥

१४७८

इमे पद्मे नाम्भः पुलिनतटमेतन्न तटिनी
खमेतन्न व्याप्तिः स्तबकयुगमेतन्न लतिका ।
प्रवालोऽयं नाब्धिः शिशिरकिरणोऽयं न रजनी
घनोऽयं न प्रावृट्छिव शिव विधेः शिल्परचना ॥

सार्वभौमस्य.

१४७९

तमस्तोमः पूर्वं तदनु सकलः शीतकिरण-
स्ततः कोकद्वन्द्वं तदपि न वियुक्तं प्रतिनिशम् ।
अनम्भस्यावर्तः कनककदलीकाण्डयुगलं
सदावाची पद्मे शिव शिव विधेः शिल्परचना ॥

कस्यापि.

---

## अथ स्त्रीरूपवर्णम्

तत्रादौ

### केशाः

१४८०

अस्या मनोहराकारकबरीभारतर्जिताः ।
लज्जयेव वने वासं चक्रुश्चमरबर्हिणः ॥

वररुचेः.

१४८१

स्नेहं परित्यज्य निपीय धूमं
कान्ताकचा मोक्षपथं प्रपन्नाः ।
नितम्बसङ्गात्पुनरेव बद्धा
अहो दुरन्ता विषयेषु सक्तिः ॥

१४८२

किंजल्केन व्यपनुदति नो यस्तृषं पद्मखण्ड-
स्त्वत्कान्त्यासौ भवति विफलश्रीरमुं मा मिमीलः ।
एवं वक्तुं मधुकरभरः प्रार्थनापूर्वमस्या-
श्चन्द्रभ्रान्त्या मुखमुपगतो न त्वयं केशपाशः ॥

१४८३

अस्मद्वैरी शशभृदमुना जीयते ह्यन्धकारः
सारङ्गाक्ष्या मुखमनुगतः केशपाशच्छलेन ।
तं संश्रुत्य प्रगलितमहाः शीतरश्मिस्तदैव
प्राप्तः सेवाघटनविधये मालतीदामभङ्ग्या ॥

केषामपि.

१४८४

विकचकचपताकः किंचिदाकुञ्चितोऽयं
कुचकलशनिवेशी शोभते श्यामलाक्ष्याः ।
मधुरसपरिपोषादीषदुफुल्लकोषे
कमल इव निलीनः पेटकः षट्पदानाम् ।

पुण्यस्य.

१४८५

चिकुरप्रकरा जयन्ति ते
विदुषी मूर्धनि सा बिभर्ति यान् ।
पशुनाप्यपुरस्कृतेन त-
त्तुलनामिच्छति चामरेण कः ॥

१४८६

अस्याः कचानां शिखिनश्च किं नु
विधिं कलापौ विमतेरगाताम् ।
तेनायमेभिः किमपूजि पुष्पै-
रभर्त्सि दत्त्वा स किमर्धचन्द्रम् ॥

एतौ श्रीहर्षस्य.

---

## अथ ललाटम्

१४८७

अस्या ललाटे लिखिता सखीभि-
र्विभाव्यते चन्दनपत्रलेखा ।
आपाण्डुरक्षामकपोलभित्ते-
रनङ्गबाणव्रणपट्टिकेव ॥

१४८८

भाले तिलकलेखेयं बाले भल्लीव राजते ।
भ्रूलताचापमाकृष्य न जाने कं हनिष्यसि ॥

१४८९

ललाटतटमष्टमीशशधरोपमं ते प्रिये
शितीकरणपट्टतां मदनमार्गणानां गतम् ।
फलाग्रकषणोद्भवो यदयमत्र कस्तूरिका-
विशेषकमिषास्स्फुरत्यतिमनोरमः कालिमा ॥

---

## अथ भ्रुवौ

१४९०

असितात्मा समुत्पन्नः समाविष्कृतचापलः ।
निसर्गकुटिलस्तस्या भ्रूविक्षेपः खलायते ॥

ऊर्जितस्य.

१४९१

तस्याः शलाकाञ्जननिर्मितेव
कान्तिर्भ्रुवोरानतलेखयोर्या ।
तां वीक्ष्य लीलाचतुरामनङ्गः
स्वचापसौन्दर्यमदं मुमोच ॥

कालिदासस्य.

---

## अथ चक्षुषी

१४९२

मुखपद्मे कथं तस्या जातमिन्दीवरद्वयम् ।
अथवा साधुनाशाय भवत्युत्पातलक्षणम् ॥

१४९३

यद्यसौ मृगशावाक्षी पुण्डरीकेक्षणा कथम् ।
विरोधिसंगमो नूनं साधुनाशाय कल्पते ॥

१४९४

न केवलं तवैवेते नेत्रे कर्णान्तसर्पिणी ।
अतिदीर्घतया कस्य न कर्णोपान्तमागते ॥

१४९५

कुसुमे कुसुमोत्पत्तिः श्रूयते न च दृश्यते ।
बाले तव मुखाम्भोजे दृष्टमिन्दीवरद्वयम् ॥

१४९६

अतः परमगम्योऽयं पन्था विश्रम्यतामिति ।
प्रत्यक्षियुगलं तस्याः कर्णौ वक्तुमिवागतौ ॥

केषामपि.

१४९७

अन्तर्मलीमसे वक्रे चले कर्णान्तसर्पिणि ।
अस्या नेत्रयुगे दृष्टे दुर्जने च कुतः सुखम् ॥

१४९८

निमेषेण घ्नता लोकं कृष्णेन स्निग्धचारुणा ।
कर्णान्तं गच्छता तस्या लोचनेनार्जुनायितम् ॥

भट्टवृद्धेः.

१४९९

प्रवातनीलोत्पलनिर्विशेष-
मधीरविप्रेक्षितमायताक्ष्याः ।
तया गृहीतं नु मृगाङ्गनाभ्य-
स्ततो गृहीतं नु मृगाङ्गनाभिः ॥

कालिदासस्य.

१५००

त्वदृशोर्जनयन्ति सान्त्वनां
खुरकण्डूयनकैतवान्मृगाः ।
जितयोरुदयत्प्रमीलयो-
स्तदखर्वेक्षणशोभया भयात् ॥

श्रीहर्षस्य.

## अथ कर्णौ

१५०१

यत्पूर्वं पवनाग्निशस्त्रसलिलैश्चीर्णं तपो दुश्चरं
तस्यैतत्फलमीदृशं परिणतं यज्जातरूपं वपुः ।
मुग्धापाण्डुकपोलचुम्बनसुखं सङ्गश्च रत्नोत्तमैः
प्राप्तं कुण्डल वाञ्छसे किमपरं यन्मूढ दोलायसे ॥

कस्यापि.

---

## अथ नासा

१५०२

नासादसीयां तिलपुष्पतूणं
जगत्त्रये व्यस्तशरत्रयस्य ।
श्वासानिलामोदभरानुमेयां
दधद्द्विबाणीं कुसुमायुधस्य ॥

श्रीहर्षस्य.

१५०३

अस्याः कुशेशयदृशः शशिशुभ्रशुभ्रं
नासाग्रवर्ति नवमौक्तिकमाचकास्ति ।
कैलासमानससरोवरराजहंस्या
निःक्षिप्तमण्डमिव जाग्रति पुण्डरीके ॥

१५०४

मुक्ताफलं शशिसमस्य मुखस्य तस्या
हेमोर्मिकान्तगतमञ्चति नासिकान्ते ।
नीहारबिन्दुरिव केसरचक्रमध्ये
पद्मस्य तुङ्गतरकोषजुषो नलिन्याः ॥

पं० जोनकस्य.

१५०५

अन्योन्यलावण्यविलोकनान्तं
नेत्रद्वयं स्यात्सततं किलास्याः ।
इत्येव नासा विहिता विधात्रा
मध्ये तयोर्दर्शनविघ्नकर्त्री ॥

१५०६

अस्या मुखं हिमरुचिर्ननु यद्विधात्रा
संपूर्य सर्वमवशेषतयात्र मुक्तः ।
आश्यानतामुपगतोऽस्य रुचा चकास्ति
नासाग्रमौक्तिकमिषादमृतस्य बिन्दुः ॥

एतौ प० श्रीबकस्य.

---

## अथाधरवर्णनम्

१५०७

तवैष विद्रुमच्छायो मरुमार्ग इवाधरः ।
करोति कस्य नो मुग्धे पिपासाकुलितं मनः ।

१५०८

अल्पेनापि सुरक्तेन साधनेन प्रयोजनम् ।
ओष्ठद्वयसहायेन कान्तास्येन जगज्जितम् ॥

१५०९

सर्वस्यैव हि रत्नस्य व्रणेऽर्घः परिहीयते ।
दयिताधररत्नं तु व्रणितं यात्यनर्घताम् ।

केषामपि.

१५१०

द्विजसंगतिमासाद्य सर्वो रागाद्विमुच्यते ।
रक्तस्तथापि तन्वङ्ग्या बिम्बोष्ठः केन हेतुना ॥

लक्ष्मणस्य.

१५११

रसवदमृतं कः संदेहो मधून्यपि नान्यथा
मधुरमथ किं चूतस्यापि प्रसन्नरसं फलम् ।

सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्ञनो
वदत यदिहास्त्यन्यत्स्वादु प्रियादशनच्छदात् ॥

कस्यापि.

१५१२

अस्माकमस्मान्मदनापमृत्यो-
स्त्राणाय पीयूषरसोऽपि नासौ ।
सुधारसादप्यधिकं प्रयच्छ
प्रसीद वैदर्भि निजाधरं नः ॥

श्रीहर्षस्य.

---

## अथ मुखम्

१५१३

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम् ।
धाता निजासनाम्भोजनिमीलनदुःस्थितः ॥

श्रीहर्षदेवस्य.

१५१४

अस्या मुखेन लोकानां हृतपङ्कजकान्तिना ।
निशासु नाशिता निद्रा कुमुदानामिवेन्दुना ॥

शकवृद्धेः.

१५१५

प्रियानेत्रमुखच्छायाहृतलावण्यशोभयोः ।
समानदुःखयोरैक्यं युक्तं यन्मृगचन्द्रयोः ॥

कस्यापि.

१५१६

कमलमनम्भसि कमले कुवलये तानि च कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥

शंकरगणस्य.

१५१७

तस्या मुखस्यातिमनोहरस्य
कर्तुं न शक्तः सदृशं प्रियायाः ।

अद्यापि शीतद्युतिरात्मबिम्बं
निर्माय निर्माय पुनर्भिनत्ति ॥

श्रीहर्षस्य.

१५१८

प्रसन्नसंपादितचारुकान्ति-
र्जितोऽपि कान्तामुखशोभयायम् ।
धृष्टः शशाङ्कः पुनरभ्युदेति
लज्जा कुतोऽन्तर्मलिनाशयानाम् ॥

१५१९

भयमुज्झ जहासि किं स्वशोभां
दयितावक्त्रमिदं न पद्म चन्द्रः ।
अयि नालिक किं दिवापि भाति
स्वयमप्यस्य किमस्ति वा कलङ्कः ॥

कयोरपि.

१५२०

चित्रं यदेव गुणवृन्दविमर्ददक्षं
पुंसः सखे निखिलदोषवितानधाम ।
मौग्ध्यं तदेव दयितावदने नितान्तं
जातं विभूषणमनेकगुणातिशायि ॥

गोविन्दराजस्य.

१५२१

यदधरगतमादधाति तृष्णां
दिशति न यच्चषकोत्पलस्य निद्राम् ।
किमपि तदमृतं स कोऽपि चन्द्रो
वदनमयः श्रियमातनोति तन्व्याः ॥

रत्नाकरस्य,

१५२२

सुविहितमभिधानं वेधसा साधु यत्ना-
न्मधुलिहि हतबुद्धौ भृङ्ग इत्येतदेकम् ।

स्फुरदधरकटाक्षे क्षिप्रसौभाग्यदायि-
न्यलकरुचिनि वक्त्रे पङ्कजं शङ्कते यः ॥

गोविन्दराजस्य.

१५२३

कोषः स्फीततरः स्थितानि परितः पत्राणि दुर्गं जलं
मैत्रं मण्डलमुज्ज्वलं चिरमधो नीतास्तथा कण्टकाः ।
इत्याकृष्टशिलीमुखेन रचनां कृत्वा तदप्यद्भुतं
यत्पद्मेन जिगीषुणापि न जितं मुग्धे त्वदीयं मुखम् ॥

विज्जाकायाः.

१५२४

श्रीमन्मानसवासि वा हरशिरः शृङ्गाग्रसंसाङ्गि वा
त्वं नारायणनाभिशायि भव वा स्थानान्तरस्थायि वा ।
नायास्येव हि नालिकाम्बुरुह हे पादोपसेवां विना
भानोर्भाभरभर्त्सितेन्दुवदनावक्त्रोपमापात्रताम् ॥

उपाध्यायधनवर्मणः.

१५२५

वक्त्रं जेष्यामि चन्द्रः प्रतिदिवसमसौ कान्तिमभ्येति गुर्वीं
नेत्रच्छायां हरिष्याम्यहमिति विकसत्युत्पलं दीर्घिकायाम् ।
कुर्वाणे ते तथापि श्रियमधिकतरां वीक्ष्य लोलेक्षणायां
वैलक्ष्यात्क्षीण एको विशति तदपरं मत्सरे नास्ति भद्रम् ॥

१५२६

हृतसारमिवेन्दुमण्डलं
दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्यते
धृतगम्भीरखनीखनीलिम ॥

श्रीहर्षस्य.

## अथ कण्ठः

१५२७

कण्ठस्य नाकरोत्कान्तिं मुक्ताभरणता तथा ।
तस्याः स्वभावरम्यस्य मुक्ताभरणता यथा ॥

वृद्धेः.

१५२८

कण्ठस्य तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य ।
अन्योन्यशोभाजननाद्बभूव
साधारणो भूषणभूष्यभावः ॥

कालिदासस्य.

---

## अथ बाहू

१५२९

दयिताबाहुपाशस्य कुतोऽयमपरो विधिः ।
जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥

कलशकस्य.

१५३०

शब्दवद्भिरलंकारैरुपेतमतिकोमलम् ।
सुवृत्तं काव्यवद्रेजे तद्बाहुलतिकाद्वयम् ॥

१५३१

सुदीर्घा रागशालिन्यो बहुपर्वमनोरमाः ।
तस्या विरेजुरङ्गुल्यः कामिनां सत्कथा इव ॥

शकवृद्धेः.

१५३२

करे विभाति तन्वङ्ग्या रणद्वलयसंहतिः ।
मनःकुरङ्गबन्धाय पाशालीव मनोभुवः ॥

---

## अथ स्तनौ

१५३३

यन्न माति तदङ्गेषु लावण्यमतिसंभृतम् ।
पिण्डीभूतमुरोदेशे तत्पयोधरतां गतम् ॥

१५३४

तस्या विनापि हारेण निसर्गादेव हारिणौ ।
जनयामासतुः कस्य विस्मयं न पयोधरौ ॥

१५३५

यत्पयोधरभारेषु मौक्तिकैर्निहितं पदम् ।
तत्प्रच्छादितरन्ध्राणां गुणानामेव चेष्टितम् ॥

१५३६

किं चित्रमुन्नतश्रीकौ यत्प्रियायाः पयोधरौ ।
तस्या हृदयलाभेन जायते कस्य नोन्नतिः ॥

केषामपि.

१५३७

किं चित्रं यदि तन्वङ्ग्याः स्तनाभ्यां निर्जितं जगत् ।
एको जयत उद्वृत्तः किं पुनर्द्वौ सुसंहतौ ॥

भट्टप्रभाकरस्य.

१५३८

उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥

शकवृद्धेः.

१५३९

धृतघनरुचिरद्युतिना विलसद्धारेण बहलपुलकेन ।
दलयति कं नाभिमुखं बाला कुचमण्डलाग्रेण ॥

विजयवर्मणः.

१५४०

तन्व्याः समुत्तुङ्गकुचाग्रलग्ना
मुक्तावली बन्धमुपैति यत्र ।

तत्रातिरागोल्बणबन्धभाजां
लाभो न किं जीवितमात्रमेव ॥

भट्टप्रभाकरस्य.

१५४१

जयन्ति कान्तास्तनमण्डलेषु
विटार्पितान्यार्द्रनखक्षतानि ।
लावण्यसंभारनिधानकोषे
मुद्राक्षराणीव मनोभवस्य ॥

कस्यापि.

१५४२

अन्योन्यमुत्पीडयदुत्पलाक्ष्याः
स्तनद्वयं चारु तथा विवृद्धम् ।
मध्ये तथा श्याममुखस्य तस्य
मृणालसूत्रान्तरमप्यलभ्यम् ॥

१५४३

दिनेषु गच्छत्सु मधूकपाण्डुरं
तदीयमाश्याममुखं स्तनद्वयम् ।
समुद्गयोर्वारणदन्तकोषयो-
र्बभार कान्तिं गवलापिधानयोः ॥

एतौ कालिदासस्य.

१५४४

यद्गीयते जगति शस्त्रहता व्रजन्ति
नूनं सुरालयमिति स्फुटमेतदद्य ।
सूच्यग्रमात्रपरिखण्डितविग्रहेण
प्राप्तं यतः स्तनतटं खलु कञ्चुकेन ॥

१५४५

आनीलचूचुकशिलीमुखमुन्नतैक-
रोमावलीविपुलनालमिदं प्रियायाः ।
प्रोत्तुङ्गपीवरपयोधरपद्मयुग्मं
नाभेरधः कथयतीव महानिधानम् ॥

१५४६

पुष्पेषोरभिषेकहेमकलशौ हारप्रभावाहिनी-
चक्राह्वौ नवयौवनद्विपपतेः कुम्भौ रतेः कन्दुकौ ।
कोषौ बाहुमृणालिकाकमलयोर्लीलालतासत्फले
पूर्णौ रत्नसमुद्गकौ वहति सा लावण्यकुम्भौ स्तनौ ॥

केषामपि.

१५४७

नूनं प्रेयःपरिष्वङ्गगाढपीडनमन्युना ।
जातं कुरङ्गशावाक्ष्याः श्यामवक्त्रं कुचद्वयम् ॥

---

## अथ मध्यभागः

१५४८

तत् त्रिविष्टपमाख्यातं तन्वङ्ग्या यद्वलित्रयम् ।
येनानिमिषदृष्टित्वं नृणामभ्युपजायते ॥

विशाखदेवस्य.

१५४९

अय्ययि साहसकारिणि
किं तव चङ्क्रमणेन ।
टसदिति भङ्गमवाप्स्यसि
कुचयुगभारभरेण ॥

विकटनितम्बायाः.

१५५०

गुरुः प्रकृत्यैव नितम्बभारः
स्तनद्वयं वृद्धिमुपैति चास्याः ।
त्रुटयामि मध्येन तनीयसेति
काञ्चीरवैः फूत्कृतमायताक्ष्याः ॥

जयमाधवस्य.

१५५१

अहो प्रमादी भगवान्प्रजापतिः
कृशातिमध्या घटिता मृगेक्षणा ।

यदि प्रमादादनिलेन भज्यते
कथं पुनः शक्ष्यति कर्तुमीदृशम् ॥

१५५२

इंहो नितम्ब कुचभार विधाय किं मां
मध्यस्थमभ्यधिकमुन्नमतां भवन्तौ ।
इत्थं क्रुधेव करभोरु तवोदरेण
भ्रूभङ्ग एष रचितस्त्रिवलिच्छलेन ॥

कयोरपि॰

१५५३

काञ्चीगुणैर्विरचिता जघनेषु लक्ष्मी-
र्लब्धा स्थितिः स्तनतटेषु च रम्यहारैः ।
नो भूषिता वयमितीव नितम्बिनीनां
कार्श्यं निरर्गलमधार्यत मध्यभागैः ॥

रत्नाकरस्य॰

---

## अथ रोमराजिः

१५५४

आभाति रोमराजिश्चलदलिकुलकोमला विशालाक्ष्याः ।
नाभीविवरान्तर्गतमदनानलधूमलेखेव ॥

कस्यापि॰

१५५५

नाभीह्रदे यद्विधिना न्यधायि
सौन्दर्यसारं हरिणेक्षणायाः ।
घ्रातुं तदेव भ्रमरावलीयं
प्राप्ता नु मन्ये नवरोमराजिः ॥

जयमाधवस्य॰

१५५६

अलमलमतिवृद्ध्या स्थीयतां तस्य पश्य-
स्यकरुण करभोरोर्भज्यते मध्यमेतत् ।

इति गुरुजघनाज्ञाचोदिता रोमराजिः
स्तनयुगमसिताक्ष्या वक्तुमारोहतीव ॥

कस्यापि.

१५५७

तन्वङ्ग्या गजकुम्भपीनकठिनोत्तुङ्गौ वहन्त्याः स्तनौ
मध्यः क्षामतरोऽपि यन्न झगिति प्राप्नोति भङ्गं द्विधा ।
तन्मन्ये निपुणेन रोमलतिकोद्भेदापदेशादसौ
निःस्पन्दास्फुटलोहशृङ्खलिकया संदानितो वेधसा ॥

श्रीमम्मटस्य.

१५५८

अमुष्मिल्लाँवण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥

रामस्य.

---

## अथ जघनमण्डलम्

१५५९

तस्याः पद्मपलाशाक्ष्याः स्वपन्त्या जघनं घनम् ।
दृष्ट्वं सखीभिर्याभिस्ताः पुंभावं मनसा ययुः ॥

वाल्मीकेः.

१५६०

स कथं न स्पृहणीयो विषयरतैस्तन्नितम्बविन्यासः ।
शान्तात्मनापि विहितं विश्वसृजा गौरवं यत्र ॥

दामोदरगुप्तस्य.

१५६१

नारीनितम्बफलके प्रतिबध्यमाना
हंसीव हेमरशना मधुरं ररास ।

तन्मोचनार्थमिव नूपुरराजहंसा-
श्चक्रन्दुरार्तमुखरं चरणावलग्नाः ॥

माघस्य.

१५६२

तैस्तैर्गुणैः किल कलास्वपि तासु तासु
तन्व्यास्तथा बत गतो गुरुतां नितम्बः ।
उत्सेधवान्विधुरखण्डनमण्डितोऽपि
शिष्यो यथास्य मदनश्च मदश्च जातः ॥

भट्टवाहदेवस्य.

१५६३

वपुरनुपमं नाभेरूर्ध्वं विधाय मृगीदृशो
ललितललितैरङ्गन्यासैः पुरा रभसादिव ।
तदनु सहसा खिन्नेनेव प्रजापतिना भृशं
पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली ॥

अर्गटस्य.

---

## अथोरू

१५६४

अत्यन्तपरिणाहित्वादतीवश्लक्ष्णतावशात् ।
न कांचिदुपमां रोढुमूरू शक्नोति सुभ्रुवः ॥

१५६५

नासंहतेन शक्यः पृथुजघनाभोग एष उद्वोढुम् ।
इति मत्वेव मृगाक्ष्याः संहतिमूरुद्वयं भेजे ॥

कस्यापि.

१५६६

नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात्कदलीविशेषाः ।
लब्ध्वापि लोके परिणाहि रूपं
जातास्तदूर्वोरुपमानबाह्याः ॥

कालिदासस्य.

---

## अथ जङ्घे

१५६७

वृत्तानुपूर्वे च न चातिदीर्घे
जङ्घे शुभे सृष्टवतस्तदीये ।
शेषाङ्गनिर्माणविधौ विधातु-
र्लावण्य उत्पाद्य इवास यत्नः ।।

अस्यैव.

१५६८

जङ्घे तदीये संतापं यज्जनस्यानुरागिणः ।
जनयांचक्रतुस्तीव्रं तत्र हेतुर्विलोमता ।।

शकवृद्धेः.

१५६९

लीलागतिर्यत्र निसर्गसिद्धा
मत्तो न दन्ती मुषितो न हंसः ।
इतीव जङ्घायुगलं तदीयं
चक्रे तुलाकोट्यधिरोहणानि ।।

---

## अथ पादौ

१५७०

अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं कियत् ।
इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ।।

१५७१

त्वद्वक्त्रं नेत्रपद्मप्रकटितमसकृत्स्पर्धितं यन्मयैत-
ज्जातं तस्मात्क्षयित्वं ग्रहणमलिनता जाड्यमन्तः कलङ्कः ।
तत्सर्वं क्षम्यतां मे पुनरपि न करोम्येवमुक्त्वापि तस्या
गाढं लग्नः शशाङ्कश्चरणनखमणिच्छद्मना पादपद्मे ।।

१५७२

वक्त्रेन्दुना नयनलक्ष्मभृतायताक्ष्या-
श्चारुस्फुरद्दशनदीधितिमण्डलेन ।
अत्युन्नमद्घनपयोधररुद्धभासा
पादारविन्दयुगलस्य हृता न लक्ष्मीः ॥

---

## अथ मानः

१५७३

स्फुरसि बाहुलते किमनर्थकं
त्वमपि लोचन वाम भव स्थिरम् ।
तमहमागतमप्यपराधिनं
न परिरब्धुमलं न च वीक्षितुम् ॥

कस्यापि.

१५७४

स्फुटतु हृदयं कामं कामः करोतु तनुं तनुं
न खलु चपलप्रेम्णा कार्यं पुनर्दयितेन मे ।
इति सरभसं मानाटोपादुदीर्य वचस्तया
रमणपदवी सारङ्गाक्ष्या सशङ्कितमीक्षिता ॥

अर्भकस्य.

१५७५

चलतु तरला धृष्टा दृष्टिः खला सखि मेखला
स्खलतु कुचयोरुत्कम्पान्मे विदीर्यतु कञ्चुकम् ।
तदपि न मया संभाव्योऽसौ पुनर्दयितः शठः
स्फुटति हृदयं मानेनान्तर्न मे यदि तत्क्षणात् ॥

अमरुकस्य.

१५७६

न्यस्ता दृष्टिः स्तिमितनयना तन्मखे बाष्पगर्भा
दृष्ट्वा मुग्धस्थितमपि कृतं कोपसंपर्कशंसि ।

यामीत्युक्तं भृशमपटुतामात्मनः ख्यापयन्त्या
मानस्यान्तार्विरचितपदस्येयमारम्भलीला ॥

भट्टयशसः.

१५७७

तदेवाजिह्माक्षं मुखमविशदास्ता गिर इमाः
स एवाङ्गाक्षेपो मयि सरसमाश्लिष्यति तनुम् ।
यदुक्तं प्रत्युक्तं तदपटु शिरः कम्पनपरं
प्रिया मानेनाह्वो पुनरपि कृता मे नववधूः ॥

कस्यापि.

१५७८

भ्रूभेदो गुणितश्चिरं नयनयोरभ्यस्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः ।
धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथंचिन्मया
बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थिता ॥

अमरुकस्य.

१५७९

भ्रूभेदो रचितस्तदीक्षणपरे निस्तर्जिते लोचने
गात्रं प्रावृतमंशुकेन सकलं वृत्तिर्गिरां संयता ।
चेतः केवलमाकुलं भ्रमति मे तत्केन वा दृश्यते
गत्वा सत्वरमानय प्रियतमं मानः कृतोऽयं मया ।

कस्यापि.

१५८०

भ्रूभेदे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥

भदन्तारोग्यस्य.

१५८१

तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता चान्यत-
स्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया ।

हस्ताभ्यां विनिवारितः सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके संधयः ॥

१५८२

प्राणेशे सहसा चिरादुपगते रुद्धे मया लोचने
प्रोक्ते वागपि तत्प्रियार्पणपरा रुद्धा बलादाकुला ।
मामुल्लङ्घ्य हठेन बाहुलतया प्रोद्भिन्नरोमाञ्चया
मातः किं करवाण्यहं यदनयाभ्यासात्समालिङ्गितः ॥

कयोरपि.

१५८३

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥

पुलिनस्य.

१५८४

अङ्गानामतितानवं कुत इदं कस्मादकस्मादये
मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति ।
तन्व्या सर्वमिदं स्वभावत इति व्याहृत्य पक्ष्मान्तर-
व्यापी बाष्पभरस्तया वलितया निःश्वस्य मुक्तोऽन्यतः ॥

१५८५

नीत्वोत्सङ्गमुदस्य लम्बमलकं तन्वङ्गि किं त्वं कृशे-
त्यावेगादकृतागसीव दयिते धौर्त्यान्मुहुः पृच्छति ।
नोक्तं किंचन मुग्धया वदनकं त्वासज्य वक्षःस्थले
तस्यांसस्थललम्बिबाहुलतया निःशब्दकं रुद्यते ॥

कयोरपि.

१५८६

प्राणेशप्रथमापराधकरणे सख्या निदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति गलल्लोलोदकैरश्रुभिः ॥

लीलाचन्द्रस्य.

१५८७

भ्रूभेदो न कृतः कथा न शमिता नोपेक्षितः संभ्रमो
नोक्तं किंचिदसंमतं पुलकिता नालम्बिता वामता ।
अङ्कारोपितया तया दयितया गाढं परिष्वक्तया
लोलैरश्रुभिरीक्षणान्तरगतैर्मन्युः समावेदितः ॥

धर्मकीर्तेः.

१५८८

पश्यन्ती निजमेव पत्युरधरे दन्तक्षतं दूयते
साशङ्का स्वयमध्यमार्गनिहितान्दृष्ट्वा नखान्खिद्यते ।
मुग्धा सर्वविवेकहारिणि पदे मानस्य तस्मिन्स्थिता
येनात्मैव वृथाविकल्पविधुरो नीतः सपत्नीभुवम् ॥

अद्भुतफुल्लस्य.

१५८९

पादे मूर्धनि ताम्रतामुपगते कर्णोत्पले चूर्णिते
छिन्ने हारलतागुणे करतलेऽप्याघातजातव्रणे ।
अप्राप्तप्रियताडनव्यतिकरा हन्तुं पुनश्चेतसा
वाञ्छन्ती मुहुरेव काचिदबला पर्याकुलं रोदिति ॥

कस्यापि.

१५९०

आशङ्क्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादरा-
द्व्याजेनागतमावृणोति हसितं न स्पष्टमुद्वीक्षते ।
सख्यालापवती प्रकोपपिशुनं पत्या सहाभाषते
तन्व्यास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः ॥

भीमस्य.

१५९१

ईर्ष्याप्रस्फुरिताधरौष्ठरुचकं वक्त्रं न मे दर्शितं
साविक्षेपपदा मनागपि गिरो न श्राविता मुग्धया ।
मद्दोषैः सरसैः प्रतापितमनोवृत्त्यापि कोपोऽनया
काञ्च्या गाढतरावबद्धवसनग्रन्थ्या समावेदितः ॥

नारायणस्य.

१५९२

काले नीलबलाहके सतडिति प्रीतिप्रदे बर्हिणा-
माश्चर्यं कथयामि वः शृणुत भो यद्वृत्तमस्मिन्गृहे ।
सौभाग्यव्ययशङ्कयैकभवने कान्ताप्रियाभ्यामहो
मानिभ्यां बत रात्रिमेव सकलां चीर्णं प्रवासिव्रतम् ।।

कस्यापि.

---

## अथानुनयः

१५९३

अयि हस्तगतैः प्राणैरमीभिः कन्दुकैरिव ।
अपर्यन्तरसं मुग्धे कियत्क्रीडितुमिच्छसि ।।

शशिवर्धनस्य

१५९४

मुखं ते पादपतिते किंकरे किं करे स्थितम् ।
अयि कामातुरे कोपं कोपने कोपनेष्यति ।।

१५९५

अनवरतनयनविगलितजललवपरिमुषितपत्रलेखान्तम् ।
करतलनिषण्णमबले वदनमिदं कं न तापयति ।।

कयोरपि.

१५९६

असमग्रविलोकितेन किं ते
दयितं पश्य वरोरु निर्विशङ्कम् ।
नहि जातु कुशाग्रपीतमम्भः
सुचिरेणापि करोत्यपेततृष्णम् ।।

तृष्णिगुप्तस्य.

१५९७

मुखपङ्कजरङ्गेऽस्मिन्भ्रूलता नर्तकी तव ।
लीलानृत्तं करोतीति रम्यं रूपकरूपकम् ।।

१५९८

वीक्षितेन शफरीचटुलेन
प्रापितः खलु दशामहमन्त्याम् ।
किं स्मितेन वद कौमुदिभासा
पिष्टपेषणमिदं तव तन्वि ॥

विद्यापतेः.

१५९९

यदि वयमपराधिनस्तदानीं
नयनजलैरलिनीलकज्जलाङ्कैः ।
अयि किमियमकाण्ड एव नीता
सशशशशाङ्कदशां कपोलपाली ॥

गोविन्दराजस्य.

१६००

सुतनु जहिहि मानं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥

कस्यापि.

१६०१

परुषवचनं कोपाताम्रे दृशौ वलितं मुखं
वपुरपि मुधा धत्से चण्डि प्रसाधनवर्जितम् ।
इदमतितरामात्मायासप्रदं तव केवलं
मम पुनरतः पूर्णो हर्षो यदि स्फुरति स्फुटम् ॥

भदन्ततथागतेन्द्रसिंहस्य.

१६०२

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरपि भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥

श्रीहर्षदेवस्य.

१६०३

दृशा सार्धं दन्तच्छदपरिचयाद्वक्त्रमरुणं
कचभ्रूकौटिल्यान्मतिरपि न मुञ्चत्यवनतिम् ।
अहो दीर्घः कोपो मम नयनयोगात्किमपरं
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ।

कस्यापि०

१६०४

नीलाम्भोजं स्वनयनरुचा वक्त्रकान्त्येन्दुबिम्बं
केशैर्भृङ्गान्मधुरवचनैः कोकिलानां रुतानि ।
स्पर्धायोगात्परिभवपदं प्रापय त्वं निकामं
बाधा मुग्धे न पुनरुचितास्मासु ते संश्रितेषु ॥

१६०५

पादासक्ते सुचिरमिह ते वामता केव मुग्धे
नर्मासक्ते प्रणयिनि जने कोऽपराधोपरोधः ।
इत्थं तस्याः परिजनकथाकोमले कोपवेगे
बाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रवृत्तम् ॥

कयोरपि.

१६०६

अवश्यं कोपाग्निस्तव सुतनु निर्वास्यति चिरा-
त्स्वशोभामारूढं मुखमपि च ते हास्यति शुचम् ।
भवद्गोष्ठीशून्या मम तु दिवसा यान्ति य इमे
न तेषामावृत्तिः पुनरपि मनो दूयत इति ॥

भट्टकर्णाटस्य०

१६०७

असद्वृत्तो नायं न च खलु गुणैरेष रहितः
प्रियो मुक्ताहारस्तव चरणमूले निपतितः ।
गृहाणेमं मुग्धे व्रजतु निजकण्ठप्रणयिता-
मुपायो नास्त्यन्यस्तव हृदयसंतापशमने ॥

अमरुकस्य.

१६०८

परिम्लाने माने मुखशशिनि तस्याः करधृते
मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे ।
तया पक्ष्मान्तान्तःश्लथपुटनिरुद्धेन सहसा
प्रसादो बाष्पेण स्तनतटविशीर्णेन कथितः ॥

१६०९

कोपापाटललोललोचनयुगा व्यावर्तितभ्रूलता
श्वासाताम्रमुखी वृथा करणकच्छेदे कृथा मा श्रमम् ।
अच्छाच्छैर्नयनोदबिन्दुविसरैरासक्तमुक्ताफलं
कुर्वाणा कबरीकलापमखिलं चण्डि क्रुधा शोभसे ॥

कयोरपि.

१६१०

इन्दीवरेण नयनं मुखमम्बुजेन
कुन्देन दन्तमधरं नवपल्लवेन ।
अङ्गानि चम्पकदलैश्च विधाय वेधाः
कान्ते कथं रचितवानुपलेन चेतः ॥

१६११

क्षीणः क्षीणोऽपि शशी भूयो भूयोऽपि वर्धते सत्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥

कस्यापि.

१६१२

गतप्राया रात्रिः कृशतनु शशी सीदत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव ।
प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥

बाणभट्टस्य.

१६१३

स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि
द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन्प्रिये ।

तद्युक्तं विपरीतकारिणि तव श्रीखण्डचर्चा विषं
शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥

जयदेवस्य.

---

## अथोक्तिप्रत्युक्ती

१६१४

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान्सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥

भट्टकुमारस्य.

१६१५

स्फुटो वाक्ये रोषः स्फुरति परितोषो नयनयो-
र्विलग्ने भ्रूलेखे विलसति कपोलस्थलमिदम् ।
मुखं तिर्यक्प्रीतिं गमयति हि रोमाञ्चनिचयः
प्रिये दुःसंवादा कृतककुपितस्य स्थितिरियम् ॥

१६१६

माननिधानधर त्वं गच्छ शिवाः सन्तु तेऽद्य पन्थानः ।
अमुना बद्धाञ्जलिना हृदयमशेषं निपीतं मे ॥

कस्यापि.

१६१७

भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः ।
तव यदि तथारूढं प्रेम प्रपन्नमिमां दशां
प्रकृतितरले का नः पीडा गते हतजीविते ॥

भदन्तधर्मकीर्तेः.

१६१८

वर्षति परं न मेघः क्षणदापि मृगाक्षि विप्रयोगं ते ।
प्रहरति न पञ्चबाणः केवलमबले निमेषोऽपि ॥

कस्यापि.

१६१९

कठिनहृदये मुञ्च क्रोधं सुखप्रतिघातकं
लिखति दिवसं यातं यातं यमः किल मानिनि
वयसि तरुणे नैतद्युक्तं चले च समागमे
भवति कलहो यावत्तावद्वरं सुभगे रतम् ॥

भासस्य.

१६२०

कठिनहृदये मुञ्च भ्रान्तिं व्यलीककथाश्रितां
पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम् ।
किमिदमथवा सत्यं मुग्धे त्वयाद्य विनिश्चितं
हृदयनिहितं तन्मे कृत्वा प्रिये सुखमास्यताम् ॥

१६२१

प्रातः प्रातरिहागतेन जनिता निर्निद्रता चक्षुषो-
र्मन्दाया मम गौरवापनयनादुत्पादितं लाघवम् ।
किं तद्यन्न कृतं त्वया मरणभीस्त्यक्ता मया गम्यतां
दुःखं तिष्ठसि यच्च पथ्यमधुना तन्निर्गतः श्रोष्यसि ॥

१६२२

तथाभूदस्माकं प्रथममविभिन्ना तनुरियं
ततो नु त्वं प्रेयानहमपि हताशा प्रियतमा ।
इदानीं त्वं नाथो वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥

१६२३

वरं भ्रूभङ्गास्ते प्रकटितगुरुक्रोधविभवा
वरं सोपालम्भाः प्रणयविमुखा गद्गदगिरः ।
वरं मानाटोपात्प्रसभरचितोऽनादरविधि-
र्न रूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥

१६२४

अविशदचलं नेत्रप्रान्तावलोकनमस्फुटं
चकितचकिता वाचः स्पर्शः क्वचिज्जनसंकुले ।

इति तव मया प्रेमारम्भे य एव निरीक्षिताः
कठिनमनसो दृष्टा भावास्त एव विरज्यतः ॥

केषामपि.

१६२५

यदि विनिहिता शून्या दृष्टिः किमु स्थिरकौतुका
यदि विरचितो मौने यत्नः किमु स्फुरितोऽधरः ।
यदि नियमितं ध्याने चेतः कथं पुलकोद्गमः
कृतमभिनयैर्दृष्टो मानः प्रसीद विमुच्यताम् ॥

अमरुकस्य.

१६२६

यद्गम्यं गुरुगौरवस्य सुहृदो यस्मिँल्लभन्तेऽन्तरं
यद्दाक्षिण्यवशाद्भयाच्च सहसा नर्मोपचाराद्यदि ।
यल्लज्जां निरुणद्धि यत्र शपथैरुत्पाद्यते प्रत्यय-
स्तत्किं प्रेम स उच्यते परिचयस्तत्रापि कोपोऽस्ति किम् ॥

१६२७

कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरलममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥

केयोरपि.

१६२८

कृतककृतकैर्मायासध्यैस्त्वयास्म्यतिवञ्चिता
निभृतनिभृतैः कार्यालापैर्मयाप्युपलक्षितम् ।
भवतु विदितं नेष्टाहं ते वृथा परिखिद्यसे
ह्यहमसहना त्वं निःस्नेहः समेन समं गतम् ॥

भासस्य.

१६२९

प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।

निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥

चन्द्रकस्य.

१६३०

कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते पतसि न च मे मन्युमोक्षः खलायाः ॥

१६३१

एवं यथाह भवती मम सर्वदोषाः
कः स्वामिना कुवलयाक्षि सहानुबन्धः ।
एषोऽञ्जलिर्विरचितः कुरु निग्रहं मे
दासेऽपराधवति कोऽवसरः क्षमायाः ॥

१६३२

त्वं तावद्बहुवल्लभो ननु युवा कान्तः सुखी निर्घृणो
नो जानासि परव्यथां शठमते नैवासि दुःखी यतः ।
किं त्वन्यान्परिपृच्छ मन्मथशरैः पीडामसह्यामिमां
त्राता नो भव येन सज्जनजनैः कापालिको नोच्यसे ॥

एते केषामपि.

१६३३

विरहविषमो वामः कामः करोतु तनुं तनुं
दिवसगणनादक्षश्चासौ व्यपेतघृणो यमः ।
त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे
किसलयमृदुर्जीवेदेवं कथं प्रमदाजनः ॥

शीलाभट्टारिकायाः.

१६३४

कामव्याधशराहतिर्न गणिता संजीवनी त्वं स्मृता
नो दग्धा विरहानलेन झटिति त्वत्संगमाशामृतैः ।
नीतोऽयं दिवसो विचित्रलिखितैः संकल्परूपैर्मया
किं वान्यद्धृदये स्थितासि ननु मे तत्र स्वयं साक्षिणी ॥

शूरवर्मणः.

१६३५

मुक्तो मानपरिग्रहः सह सखीसार्थेन तन्मन्त्रिणा
शक्ता त्वच्चरणप्रसादरहिता नाहं क्षणं प्राणितुम् ।
पश्य त्वं कृशकं शरीरकमिदं यां यामवस्थामगा-
देषाहं तव पादयोर्निपतिता नाथ प्रसीदाधुना ॥

१६३६

मामालोकय नीलनीरजदलप्रस्पर्धिना चक्षुषा
तत्प्रोन्नामय सुभ्रु वक्त्रशशिनं ज्योत्स्नारसस्यन्दिनम् ।
हारस्त्वं मम कण्ठदेशनिहितं बाहुद्वयं नीयतां
त्वत्प्राप्तौ विरहस्य यातु कुपितेवेयं वियोगव्यथा ॥

कयोरपि.

१६३७

स्ववपुषि नखलक्ष्म स्वेन कृत्वा भवत्या
कृतमिति चतुराणां दर्शयिष्ये सखीनाम् ।
इति रहसि मया ते भीषितायाः स्मरामि
स्मरपरिमलमुद्राभङ्गसर्वंसहायाः ॥

मुरारेः.

१६३८

स्त्रीपुंसौ प्रविभज्य जेतुमखिलावालोचितौचित्ययो-
र्नम्रां वेद्मि रतिप्रसूनशरयोश्चापद्वयीं त्वद्भ्रुवौ ।
त्वन्नासाछलनिह्नुतां द्विनलिकीं नालीकमुक्त्येषिणो-
स्त्वन्निःश्वासततीमधुश्वसनजं वायव्यमस्त्रं तयोः ॥

१६३९

खण्डक्षोदमृदिस्थले मधुपयः कादम्बिनीतर्पणा-
त्कृष्टे रोहति दोहदेन पयसां पिण्डेन चेत्पुण्ड्रकः ।
स द्राक्षाद्रवसेचनैर्यदि फलं धत्ते तदा त्वद्गिरा-
मुद्देशाय ततोऽभ्युदेति मधुराधारस्तमप्रत्ययः ॥

१६४०

उन्मीलद्गुडपाकतन्तुलतया रज्ज्वा भ्रमीर्जय-
न्दानान्तःश्रुतशर्कराचलमथः स्वेनामृतान्धाः स्मरः ।
नव्यामिक्षुरसोदधेर्यदि सुधामुत्थापयेत्सा भव-
जिह्वायाः कृतिमाह्वयेत परमां मत्कर्णयोः पारणम् ॥

१६४१

स ग्राम्यः स विदग्धसंसदि सदा गच्छत्यपाङ्क्तेयतां
तं च स्प्रष्टुमपि स्मरस्य विशिखा मुग्धे विगानोन्मुखाः ।
यः किं मध्विति नाधरं तव कथं हेमेति न त्वद्वपुः
कीदृङ्नाम सुधेति पृच्छति न मे दत्ते गिरं चोत्तरम् ॥

एते श्रीहर्षस्य.

## अथ संभोगशृङ्गारः

## तत्रादौ वसन्तः

१६४२

यान्ति यच्छरणं नार्यः स्वयमेव प्रियं जनम् ।
तद्वसन्तमदान्धस्य परपुष्टस्य चेष्टितम् ॥

महामनुष्यस्य.

१६४३

कोकिलश्चूतशिखरे मञ्जरीरेणुपिञ्जरः ।
गदितैर्व्यक्ततामेति कुलीनश्चेष्टितैरिव ॥

कस्यापि.

१६४४

नेयं विरौति भृङ्गाली मदेन मधुरस्वरा ।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः ॥

भामहस्य.

१६४५

किंशुकव्यपदेशेन तरुमारुह्य सर्वतः ।
दग्धादग्धमरण्यान्यां पश्यतीव विभावसुः ॥

अस्यैव.

१६४६

जलान्तर्नलिनीनाला हर्षसंजातकण्टकाः ।
मधुरं कोकिलागीतरवं श्रोतुमिवोत्थिताः ॥

१६४७

परिचुम्बति संश्लिष्य भ्रमरश्चूतमञ्जरीम् ।
नवसंगमसंहृष्टः कामी प्रणयिनीमिव ॥

१६४८

वने प्रियमपश्यन्ती चिरमन्विष्य कोकिला ।
विरहार्ता प्रविष्टा नु रक्ताशोकं चितामिव ॥

केषामपि.

१६४९

पूरा नदीनां पुष्पाणि वृक्षाणां शशिनः कलाः ।
क्षीणानि पुनरायान्ति यौवनानि न देहिनाम् ॥

१६५०

उन्मुक्तमानकलहा रमध्वं दयितान्विताः ।
इतीव मधुरालापाः कोकिला जगदुर्जनान् ॥

सोमस्य.

१६५१

प्रत्यग्रतिलका सद्यो मधुलक्ष्म्यभिसारिका ।
जातपुष्पशरा चक्रे पदमुद्यानभूमिषु ॥

वररुचेः.

१६५२

वापीतरङ्गानिलशीतलेषु
दुर्गेष्विवोद्यानतलेषु लीनम् ।
लब्धप्रतापार्कसहायशक्त्या
शनैर्विजिग्ये शिशिरं वसन्तः ॥

१६५३

मधुप्रसङ्गसंवृद्धरुचिर्द्विज इवांशुमान् ।
दक्षिणाशां परित्यज्य तापमाप पुनः शनैः ॥

अयं सिद्धार्थस्य.

१६५४

भ्रान्त्वा विवस्वानथ दक्षिणाशा–
मालम्ब्य सर्वत्र करप्रसारी ।
ऋत्विक्ततो निःस्व इव प्रतस्थे
वसूपलब्ध्यै धनदस्य वासम् ॥

कुमारदासस्य.

१६५५

कर्णिकारलताः फुल्लकुसुमाकुलषट्पदाः ।
सकज्जलशिखा रेजुर्दीपमाला इवोज्ज्वलाः ॥

इन्द्रदत्तस्य.

१६५६

चिरं शीतजलावासलक्ष्यसंकोचकण्टकाः ।
निषेवितुमिवोत्तस्थुरातपं कमलाकराः ॥

ईश्वरकृष्णस्य.

१६५७

एकत्र नास्य रतिरित्यवधूयमानः
कोपादिव श्वसनकम्पविघूर्णितायाः ।
रक्तच्छदं मधुसुगन्धि सरोरुहिण्या
भृङ्गश्चुचुम्ब कमलाननमादरेण ॥

आर्यभट्टस्य.

१६५८

नम्रानना नवोद्भूतरजसा स्तबकस्तनी ।
मालती यौवनवती कन्येवोच्छ्वासिनी बभौ ॥

व्यासदासस्य.

१६५९

इन्दिन्दिरैर्निर्भरगर्भमीष-
दुन्मेषवच्चम्पकपुष्पमासीत् ।
हिरण्मयं शासनलेखहेतोः
सज्जं मषीभाण्डमिव स्मरस्य ॥

१६६०

विवृण्वता सौरभरोरदोषं
बन्दिव्रतं वर्णगुणैः स्पृशन्त्याः ।
विकस्वरे कस्य न कर्णिकारे
घ्राणेन दृष्टेर्ववृधे विवादः ॥

एतौ कर्णिकारमङ्खस्य.

१६६१

पलाशरक्तार्द्रनखे वसन्त-
कण्ठीरवे मानगजोऽङ्गनाभ्यः ।
भीतो ययौ साञ्जनबाष्पपङ्क्ति-
च्छलाद्विमुक्तायसशृङ्खलालिः ॥

१६६२

दिग्दक्षिणार्कं न शशाक हातुं
तत्संगमात्सोऽपि सदाल्पतापः ।
परस्परं किं न तयोस्तदानीं
न वेद्मि कः पैशुनमाचचार ॥

१६६३

ये गात्रे ययुरध्वगोत्पलदृशामङ्गारवर्षप्रथां
ये संभोगरसालसालसवधूनेत्राञ्चलैरञ्चिताः ।
श्रीखण्डाद्रिगुहागृहान्तरभुवः शृङ्गारिषु प्रोञ्छल-
च्छापानुग्रहशक्तयो ववृधिरे तेऽहंयवो वायवः ॥

एते मङ्खकस्य.

१६६४

ज्वलितं कुसुमप्रभया पथिकाङ्गनया विलोक्य सहकारम् ।
दहनभयादिव सिक्तं नयनोज्झितवारिणा हृदयम् ॥

दिविरयशोवर्धनस्य.

१६६५

अभिनवपल्लवरशना शिशिरतरतुषारजलमङ्गलस्नाता ।
पुष्पवती चूतलता प्रियेव ददृशे फलाभिमुखी ॥

कस्यापि.

१६६६

सहकारकुसुमकेसरनिकरभरामोदमूर्छितदिगन्ते ।
मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ॥

कपिलरुद्रकस्य.

१६६७

मलयानिलललनोल्वणमदकलकलकण्ठकलकललामः ।
मधुरमधुविधुरमधुपो मधुरयमधुना धिनोति धराम् ॥

रुद्रटस्य.

१६६८

सितचन्दनधवलकुचा प्रहृष्टनवकर्णिकारचितशोभा ।
हेलोल्लासितमदना कान्तेव वनस्थली भाति ॥

भट्टबीजकस्य.

१६६९

वक्रेण शिरसि पतता नित्यं रुधिरारुणेन दुर्वाचः ।
मत्तद्विप इव पथिकः किंशुककुसुमाङ्कुशेन धृतः ॥

१६७०

चेतांसि चपलपक्षैः शिलीमुखैः परिपतद्भिरतिमात्रम् ।
पथिकानां भिन्नानि प्रकटितघनरागरक्तानि ॥

भट्टवृद्धेः.

१६७१

सममेवाकम्प्यन्ते रसवन्ति प्रकटबहलरागाणि ।
नवकिसलयानि मरुता मानवतीनां च हृदयानि ॥

कस्यापि.

१६७२

विधूतभृङ्गावलिकेशपाशा
विलोलपुष्पप्रकरोत्तरीया ।
आलोलिताम्भोजविलोचनश्री-
र्विभाति मत्तेव वसन्तलक्ष्मीः ॥

१६७३

बालेन्दुवक्त्राण्यविकासभावा-
द्बभुः पलाशान्यतिलोहितानि ।

सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥

१६७४

आमूलतो विद्रुमरागताम्राः
सपल्लवं पुष्पचयं दधानाः ।
कुर्वन्त्यशोका हृदयं सशोकं
निरीक्ष्यमाणा गतवल्लभानाम् ॥

कालिदासस्य.

१६७५

पिककूजितमत्यन्तं मधुरध्वनितापदम् ।
करोत्युल्लङ्घिताज्ञानां मधुरध्वनि तापदम् ॥

१६७६

कमलिनीमलिनी दयितं विना
न सहते सह तेन निषेविताम् ।
तमधुना मधुना निहितं हृदि
स्मरति सा रतिसारमहर्निशम् ॥

रुद्रस्य.

१६७७

असौ मरुच्चुम्बितचारुकेसरः
प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो
वसन्तकालो हनुमानिवागतः ॥

भट्टबीजकस्य.

१६७८

आदीप्तवह्निसदृशैरपयातपत्रैः
सर्वत्र किंशुकवनैः कुसुमावनम्रैः ।
सद्यो वसन्तसमयेन समागतेयं
रक्तांशुका नववधूरिव भाति भूमिः ॥

कालिदासस्य.

१६७९

दलानि वासः परिहृत्य पाटला
प्रकाशते पुष्पवती त्वचात्मनः ।
तथापि भृङ्गो न जहाति तां प्रियां
क्व रागिणामालि विवेकसंपदः ॥

१६८०

उद्दामदाक्षिणमरुद्भरचालिताभिः
शाखाभिराकुलतरं रुतवारणाय ।
मा मेति कोकिलकुलं वदतीव वृक्षः
स्त्रैणं वियोगविधुरं कृपया विलोक्य ॥

श्रुतधरस्य.

१६८१

यत्तज्जलैरहरहः स्वकरप्रयुक्तैः
संवर्धितोसि सहकार रसोद्यमेन ।
तस्याधुना न सदृशं क्रियते वियोगे
यन्मञ्जरीर्वहसि मन्मथचापमौर्वीः ॥

कस्यापि.

१६८२

किं द्वारि दैवहतिके सहकारकेण
संवर्धितेन विषवृक्षक एष पापः ।
यस्मिन्मनागपि विकासविकारभाजि
घोरा भवन्ति मदनज्वरसंनिपाताः ॥

विकटनितम्बायाः.

१६८३

मञ्जर्यो न विलोकिताः कुसुमिताश्चूतस्य बाष्पान्धया
नाघ्राताः सखि संततश्वसितया वातास्तदामोदिनः ।
भृङ्गाणामलकावृतश्रवणया नोद्गीतमाकर्णितं
क्षेमेणाद्य विलङ्घितो धृतिहरो दिष्ट्या मधुर्बालया ॥

श्रीविभाकरवर्मणः.

१६८४

किं कण्ठे क्रियतामुतानिमिषया दृष्टया चिरं वीक्ष्यतां
किं शीतं समये तथा मधुलसत्सौगन्ध्यमापायिताम् ।
एतत्स्पर्शसुखामृतेन सुतरामात्मानमाश्वास्यता-
मित्थं मे सितवल्ल्याभिनवया वध्वेव चेतो हृतम् ॥

अमृतवर्धनस्य.

१६८५

संभारो भवता यदर्थमियता क्लेशेन संवर्धित-
स्ते यान्ति प्रियविप्रयोगविधुराः प्राणा ममैतेऽधुना ।
पुष्यत्पादपकुञ्जगुञ्जदलयस्त्वङ्गद्विहंगा अमी
स्वस्थाः सन्तु वसन्त ते रतिपतेरग्रेसरा वासराः ॥

कलशकशाशिवर्धनयोः.

१६८६

कूजत्कोकिलकेलिकल्पितकलक्काणक्कथन्मानसे
प्रोद्यद्भृङ्गपुरंध्रिमन्द्ररणितस्फारीभवन्मन्मथे ।
स्फूर्जत्पुष्पपरागधूलिधवलव्यालोलमत्तानिले
कालेऽस्मिन् रहिता त्वया वद कथं प्राणेश्वर प्राणिमि ॥

१६८७

अध्वन्यस्य वधूर्वियोगविधुरा भर्तुः स्मरन्ती यदि
प्राणानुज्झति कस्य तत्खलु महत्संजायते पातकम् ।
यावन्नो कृतमध्वगेन हृदये तावत्तरोर्मूर्धनि
प्रोद्घुष्टं परपुष्टया तव तवेत्युच्चैर्वचोऽनेकशः ॥

कस्यापि.

१६८८

वसन्तप्रारम्भे चिरविरहखिन्ना सहचरी
यदि प्राणान्मुञ्चेद्वद तदघभागी भवति कः ।
वयो वा स्नेहो वा कुसुमविशिखो वेति विमृशं-
स्तुहीति प्रव्यक्तं पिकनिकरझांकारमशृणोत् ॥

श्रीराजानकलौलकस्य.

१६८९

भोः पान्थाः स्वगृहान्न गच्छत मधौ सेवाक्षणो मुच्यतां
मानं मानिनि मुञ्च वल्लभजने कोपानुबन्धेन किम् ।
आयातः कुसुमाकरः क्षपयति प्राणान्वियोगातुरे-
ष्वित्येवं परपुष्टनादपटहो वक्तीव कामाज्ञया ॥

१६९०

एतस्मिन्दक्षिणाशानिलचलिततलतालीनमत्तालिमाला-
पक्षक्षोभावधूतच्युतबहलरजोह्लादिहृद्ये वसन्ते ।
प्रेमस्वेदार्द्रबाहुश्लथवलयरणत्प्रौढसीमन्तिनीनां
मन्दः कण्ठग्रहोऽपि क्लपयति हृदयं किं पुनर्विप्रयोगः ॥

कयोरपि.

१६९१

मौर्व्यः किं मदनस्य संततमिषुव्यापारमभ्यस्यतः
प्रत्यक्षा बत मूर्छनाः किमु मधोः सख्युर्यशो गायतः ।
विस्रस्ता रशनाः स्वयं वनभुवां किं देवतानामिमाः
शिञ्जानाः श्रुतिपेशलाः किमथवा पुष्पंधयश्रेणयः ॥

१६९२

प्रेयांसं प्रतिलब्धुमात्ततपसः स्यादक्षमाला रते-
र्मूर्तत्वं मृतजीवनी किमु गता तन्मन्त्रवर्णावलिः ।
रत्नस्रग्भगवत्प्रसाधनविधौ किं वा तयोपाहृता
किं वैषा प्रतिकाननं मधुलिहां पङ्क्तिः परिप्रेङ्खति ॥

---

## अथ ग्रीष्मः

१६९३

निदाघतीव्रसंतापशून्यरथ्यान्तरस्थयोः ।
अन्योन्यालापसुखिनोर्यूनोश्चन्द्रायते रविः ॥

कस्यापि.

१६९४

एष सूर्यांशुसंतप्तो मृगः कुतरुमाश्रितः ।
साधुर्भाग्यपरिक्षीणो नीचं प्राप्येव सीदति ॥

१६९५

न प्रस्रवन्ति गिरयो घोरघर्माभिघर्षिताः ।
वृद्धप्रचुरनारीणां जघनानीव सांप्रतम् ॥

१६९६

फलितोदुम्बरान्तःस्था कलशब्दापि कोकिला ।
न भात्यर्थपरेव स्त्री निषण्णा स्थविरोरसि ॥

१६९७

कोटरान्तःप्रविष्टेन पावकेनेह पादपः ।
कृत्वा साधुरिवाकार्यमन्तर्दाहेन दह्यते ॥

एते महामनुष्यस्य.

१६९८

परपुरुषादिव सवितुः संप्रति भीताः कराग्रसंस्पर्शात् ।
कुलवध्व इव सलज्जाः प्रविशन्ति गृहोदरं छायाः ॥

रामिलकस्य.

१६९९

दुःसहसंतापभयात्संप्रति मध्यस्थिते दिवसनाथे ।
छायामिव वाञ्छन्ती छायापि गता तरुतलानि ॥

श्रीमदवन्तिवर्मणः

१७००

प्रीतिगतार्थिजनानां विच्छिन्नाशं समूहमवलोक्य ।
स्फुटितमपयसस्तापाद्धृदयमिव तलं तडागस्य ॥

१७०१

अहमिव शून्यमरण्यं वयमिव तनुतां गतानि सलिलानि ।
अस्माकमिवोच्छ्वासा दिवसा दीर्घाश्च तप्ताश्च ॥

कयोरपि.

१७०२

अभिजातजनव्यथावहा
बहलोष्मप्रसरा विदाहिनः ।
प्रखला इव दृष्टिमागता
भुवि तापाय निदाघवासराः ॥

अमृतवर्धनस्य.

१७०३

रवेर्मयूखैरभितापितो भृशं
विदह्यमानः पथि तप्तपांसुभिः ।
अवाक्फणो जिह्मगतिः श्वसन्मुहुः
फणी मयूरस्य तले निषीदति ॥

१७०४

रविप्रभाभिन्नशिरोमणिप्रभो
विलोलजिह्वाद्वयलीढमारुतः ।
विषाग्निसूर्यातपतापितः फणी
न हन्ति मण्डूककुलं तृषातुरः ॥

कयोरपि.

१७०५

अमी व्यर्थारम्भा दुरधिगमभूभृत्परिसरे
विषक्ता लक्ष्यन्ते वयमिव हताशा जलधराः ।
ममेवान्तश्चेष्टाविफलविपुलाकारविभवाः
स्वभूमौ यान्तीमाः परिणतिमसंख्याश्च सरितः ॥

ज[illegible]वर्धनस्य.

१७०६

मध्याह्नार्कक्वथितविरसं पल्वले चाम्बु पीत्वा
दावव्याप्तं वनमशरणं सर्वतः संनिरीक्ष्य ।
संतापेन प्रतिभयवता संनिरुद्धः समन्ता-
दात्मच्छायां विशति महिषो मण्डलीभूतदेहः ॥

मातृषेणस्य.

१७०७

विश्लेषो जनितः प्रियैरपि जनैरुज्जृम्भितं नालिकै-
र्मित्रेणापि खरायितं तरलया दीर्घायितं तृष्णया ।
गुर्वी वल्लभता जडैरधिगता दोषाकरः सेव्यते
हा कालः कलिरागतो नहि नहि प्राप्तः स घर्मागमः ॥

रतिमित्रस्य.

१७०८

सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि ।
शुष्यत्स्रोतसि भूरितप्तरजसि ज्वालायमानार्णसि
ग्रीष्मे मासि ततार्कतेजसि कथं पान्थ व्रजञ्जीवसि ॥

१७०९

दूरादेव कृतोऽञ्जलिर्न तु पुनः पानीयपानार्थिना
रोमाञ्चोऽपि निरन्तरं प्रकटितः प्रीत्या न शैत्यादपाम् ।
रूपालोकनविस्मितेन चलितो मूर्धा न शान्त्या तृषा-
मक्षुण्णो विधिरध्वगेन घटितो वीक्ष्य प्रपापालिकाम् ॥

१७१०

स्वेदाम्भःकणिकाचितेन वपुषा शीतानिलस्पर्शनं
तर्षोत्कर्षजुषा मुखेन शिशिरस्वच्छाम्बुपानादरः ।
दूराध्वक्लमनिःसहैरवयवैश्छायासु विश्रान्तयः
कश्मीरान्परितो निदाघसमये धन्यः परिभ्राम्यति ॥

एते भट्टबाणस्य.

१७११

अङ्गुल्यग्रनिरोधतस्तनुतरां धारामियं तन्वती
कर्कर्या न परं पयो निपुणिका दातुं प्रपापालिका ।
विश्लिष्टाङ्गुलिना करेण दशनापीडं शनैः पान्थ हे
निःस्पन्दोर्ध्वविलोचनं त्वमपि ही जानासि पातुं पयः ॥

कस्यापि.

१७१२

गन्तुं सत्वरमीहसे यदि गृहं व्यालोलवेणीलतां
द्रष्टुं वा स्वकुटुम्बिनीमनुदिनं कान्तां समुत्कण्ठसे ।
तत्तृष्यन्नपि मुग्धमन्थरवलन्नेत्रान्तरुद्धाध्वगा-
मेतां दूरत एव हे परिहर भ्रातः प्रपापालिकाम् ॥

१७१३

वाताकीर्णविशीर्णवैरणतृणश्रेणीझणत्कारिणि
ग्रीष्मे सोष्मणि चण्डसूर्यकिरणप्रक्वाथ्यमानार्णसि ।
चित्तारोपितकामिनीमुखशशिज्योत्स्नाहृतक्लान्तयो
मध्याह्नेऽपि मुदैव यान्ति पथिकाः स्वं देशमुत्कण्ठिताः ॥

१७१४

तदा त्वस्नातानां दरदलितमल्लीकुसुमिनः
कचान्बिभ्राणानां मलयजरसार्द्रार्द्रवपुषाम् ।
निदाघार्कप्लोषग्लपितमहिमानं मृगदृशां
परिष्वङ्गोऽनङ्गं पुनरपि शनैरङ्कुरयति ॥

एते कषामपि.

१७१५

ग्रीष्मोष्मप्लोषशुष्यत्पयसि बकभयोद्भ्रान्तपाठीनभाजि
प्रायः पङ्कैकभावं गतवति सरसि स्वल्पतोये लुठित्वा ।
कृत्वा कृत्वा जलार्द्रीकृतमुपरि जरत्कर्पटाग्रं प्रपायां
तोयं लब्ध्वापि पान्थः पथि चलति इहा हेतिकुर्वन्पिपासुः ॥

भट्टबाणस्य.

१७१६

बाले मालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानां
किं त्वं पक्ष्मान्तवान्तैर्मलिनयसि मुधा वक्त्रमश्रुप्रवाहैः ।
एषा प्रोद्वृत्तमत्तद्विपकटकषणक्षुण्णविन्ध्योपलाभा
दावाग्नेः संप्रवृत्ता मलिनयति दिशां मण्डलं धूमलेखा ॥

धाराकदम्बस्य.

१७१७

कानि स्थानानि दग्धान्यतिशयगहनाः सन्ति के वा प्रदेशा
किं वा शेषं वनस्य स्थितमिति पवनासङ्गविस्पष्टतेजाः ।
चण्डज्वालावलीढस्फुटिततरुलताग्रन्थिमुक्ताट्टहासो
दावाग्निः शुष्कवृक्षे शिखरिणि गहनेऽधिष्ठितः पश्यतीव ॥

भीमस्य.

१७१८

---

## अथ वर्षाः

अतसीपुष्पसंकाशं खं वीक्ष्य जलदागमे ।
ये वियोगेन जीवन्ति न तेषां विद्यते भयम् ॥

विषमादित्यस्य.

१७१९

इन्द्रगोपैर्बभौ भूमिर्निचितेव प्रवासिनाम् ।
अनङ्गबाणैर्हृद्भेदस्रुतलोहितबिन्दुभिः ॥

१७२०

सान्द्रनीहारसंवीततोयगर्भगुरूदरा ।
संततस्तनिताभ्राली निषसादाद्रिसानुषु ।

वररुचेः.

१७२१

स्फुरन्तः पिङ्गलाभासो धरण्यामिन्द्रगोपकाः ।
सरक्तवान्ताः पान्थस्त्रीजीवा इव चकासति ॥

१७२२

भ्रष्टैर्मेघशुकाघातदलितादर्कदाडिमात् ।
फलैरिव मही पिङ्गैः पूरिता हरिगोपकैः ॥

उञ्छवृत्तेः.

१७२३

अकालजलदच्छन्नमालोक्य रविमण्डलम् ।
चक्रवाकयुगं रौति रजनीभयशङ्कया ॥

१७२४
गर्ज वा वर्ष वा मेघ मुञ्च वाशनितोमरान् ।
गणयन्ति न शीतोष्णं वल्लभाभिमुखा नराः ॥

१७२५
हसतीव बलाकाभिर्नृत्यतीव तडिद्भुजैः ।
रोदितीवाम्बुधाराभिरुन्मत्तकमिवाम्बरम् ॥

एते केषामपि.

१७२६
वनिताचित्तचपला तडिदम्भोदकुक्षिषु ।
न तिष्ठति चिरं लक्ष्मीरपात्राङ्कमिवागता ॥

१७२७
कलुषं मधुरं चाम्भः सर्वं सर्वत्र सांप्रतम् ।
अनार्जवजनस्येव कृतकव्याहृतं वचः ॥

एतौ महामनुष्यस्य.

१७२८
सेन्द्रचापैः श्रिता मेघैर्निपतन्निर्झरा नगाः ।
वर्णकम्बलसंवीता बभुर्मत्तद्विपा इव ॥

विशाखदेवस्य.

१७२९
अदृष्टपूर्वमस्माभिर्यदेतदृश्यतेऽधुना ।
विषं विषधरैः पीतं मूर्छिताः पथिकाङ्गनाः ॥

कस्यापि.

१७३०
भृशं शुशुभिरे शुभ्रैर्दिशः कुटजपादपैः ।
मेघरुद्धवियन्मार्गावतीर्णैरिव तारकैः ॥

भदन्तक्षेमवृद्धेः

१७३१
अब्देभकुम्भे निर्भिन्ने विद्युत्खड्गलताहते ।
स्वच्छमुक्ताफलस्थूला निपेतुस्तोयबिन्दवः ॥

१७३२

वातैरभ्युदितासारशीताक्रान्त इव क्षणात् ।
ज्वलन्कामानलः पान्थप्रियाहृदयमाविशत् ॥

शरदेवस्य.

१७३३

व्योम्नि नीलाम्बुदच्छन्ने गुरुवृष्टिभयादिव ।
जग्राह ग्रीष्मसंतापो हृदयानि वियोगिनाम् ॥

वररुचेः.

१७३४

अस्थिरमनेकरागं गुणरहितं नित्यवक्रदुष्प्रापम् ।
प्रावृषि सुरेन्द्रचापं विभाव्यते युवतिचित्तमिव ॥

१७३५

उपलक्ष्य वर्णसंकरमपगतगुणयोगमुज्झितस्थैर्यम् ।
पथिकाः समुद्विजन्ते कुदेशमिव वीक्ष्य शक्रधनुः ॥

१७३६

अविरलधारानिकरं जलदैर्जलमुत्सृजद्भिरतिमात्रम् ।
मानिवधूहृदयेभ्यः कालुष्यमशेषतो मृष्टम् ॥

१७३७

दयितभुजगेन संप्रति नृत्यच्चलचारुचन्द्रकिरणेन ।
वल्लभगृहेन कामः प्रदीपितो नीलकण्ठेन ।

१७३८

अपगतरजोविकारा घनपटलाक्रान्ततारकालोका ।
लम्बपयोधरमाला प्रावृडियं वृद्धवनितेव ॥

एते वृद्धः.

१७३९

धूमानलपवनविषैः पयोधरः सत्यमेव घटितोऽयम् ।
अन्धयति दहति चलयति निहन्ति कथमन्यथा विरहे ।

भट्टमाहुण्डकस्य.

१७४०

आलोहितमाकलयन्कन्दरुमुत्कम्पितं मधुकरेण ।
संस्मरति पथिषु पथिको दयिताङ्गुलितर्जनाललितम् ॥

वररुचेः.

१७४१
नन्दयति कस्य न मनश्चपलैर्घनधूलिधूसरच्छायैः ।
आक्रम्य पुत्रकैरिव मलिनीकृतमम्बरं जलदैः ॥
बीजकस्य.

१७४२
चरितैः कौलेयैरिव जलदैरसितैर्दिशश्चिता वीक्ष्य ।
हंसाः सिता इव गुणाः क्वापि गता लोकमुत्सृज्य ॥
कस्यापि.

१७४३
आलोकयति पयोधरमुपमन्दिरमभिनवाम्बुभरनीलम् ।
दयितारचितचितानलधूमोद्गमशङ्कया पथिकः ॥
अमरुकस्य.

१७४४
उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः ।
क्षितिरपि कन्दलधवला दृष्टिं पथिकः क्व पातयतु ॥
भर्तृहरेः.

१७४५
उपरि पयोधरमाला दूरे दयिता किमेतदापतितम् ।
हिमवति दिव्यौषधयः क्रोधाविष्टः फणी शिरसि ॥

१७४६
प्रियसखि कः खलु कालः प्रवासिनामतिशयेन कष्टतरः ।
इति वदति पथिकजाया बकेन च प्रावृडित्युक्तम् ॥

१७४७
अन्यस्मिन्नपि काले दयिताविरहः करोति संतापम् ।
किं पुनरविरलजलधरगुरुतररसितेषु दिवसेषु ॥
केषामपि.

१७४८
किं गतेन यदि सा न जीवति
प्राणिति प्रियतमा तथापि किम् ।
इत्युदीक्ष्य नवमेघमालिकां
न प्रयाति पथिकः स्वमन्दिरम् ॥
रतिमित्रस्य.

१७४९

हतमित्रबला विशुद्धयो
जगतः पङ्कविधानहेतवः ।
अवलम्बितनीचवृत्तयः
समतामापुरसद्भिरम्बुदाः ॥

नारायणस्वामिनः.

१७५०

मलीमसत्वादभिभूय मित्रं
समागता नीचगतिः पयोदैः ।
समीरणोद्भूतरजोनिभेन
नभो जगाहेऽम्बुभियेव भूमिः ॥

आर्यदेवस्य.

१७५१

विमलमम्बु निपीय नदीशतैः
सलिलभारनिरन्तरितोदरः ।
क्लममिवानुभवन्नतिपानजं
गिरितटे निषसाद पयोधरः ॥

१७५२

भुवनदृष्टिनिरोधकरं कृतं
रविकरानुपरुध्य मया तमः ।
विलसितेन निहन्ति मुहुर्मुहु-
स्तडिदितीव ररास रुषा घनः ॥

१७५३

दिवि निवेशितताम्रविलोचना
नवघनानिलकम्पितकुन्तलाः ।
विससृजुः सह वारिदशीकरै-
र्नयनवारि चिरं पथिकाङ्गनाः ॥

१७५४
नवविबोधमनोहरकेतकी-
कुसुमगर्भगतः सह कान्तया ।
अविदितानिलवृष्टिभयागमः
सुखमशेत चिराय शिलीमुखः ॥

१७५५
विषमवृष्टिहतेऽपि दवानले
भ्रमरधूलिभृतोऽपि वनावलीः ।
समभिवीक्ष्य कृशानुसमप्रभा
न मुमुचुर्भयमेव मृगाङ्गनाः ॥

एते कुमारदत्तस्य.

१७५६
गुणमयोऽपि सदोष इव क्वचि-
द्भवति यत्कमलाकरसारसाः ।
समुदयेऽम्बुमुचाममवञ्जग-
त्क्रमनुदामपि —ममनोभ्रमः ॥

श्रीशिवस्वामिनः.

१७५७
शिशिरसीकरवाहिनि मारुते
चरति शीतभयादिव सत्वरः ।
मनसिजः प्रविवेश वियोगिनी-
हृदयमाहितशोकहुताशनम् ॥

कुमारदासस्य.

१७५८
अथ मनसिजदिग्जयाभिशंसी
जलधरदुन्दुभिराततान शब्दम् ।
तदनु तदनुजीविभिः कदम्बैः
कवचितमुन्मदषट्पदच्छलेन ॥

जयमाधवस्य.

१७५९

पयोनिधेर्वाडववह्निमिश्रं
यत्पीतमम्भो बहु घस्मरेण ।
— — — — — — — — —
— — — — — — — — —

१७६०

मलिनहुतभुग्धूमश्यामैर्दिशो मलिना घनै-
रविरलतृणश्यामा भूमिर्नवोद्गतकन्दला ।
सुरतसुभगो नूनं कालः स एष समागतो
मरणशरणा यस्मिन्नेते भवन्ति वियोगिनः ॥

चीआकस्य.

१७६१

रसति तरुणीकेशश्यामे पयोभृति निर्भरं
स्फुरति चपले वारं वारं क्षणद्युतितेजसि ।
उपगुरुजनं मन्ये दैन्यात्पराङ्खसुप्तया
सु
निभृतनिभृतं मन्दोच्छ्वासं तया बत रुद्यते ॥

जीवनागस्य.

१७६२

विरमत घनाः किं वो वृष्ट्या मुधैव विसृष्टया
व्रजत ककुभं कामप्यन्यां मनोरुचितामितः ।
न तदिह वनं नासौ मार्गो न तच्च शिलातलं
विरहगलितैस्तन्व्या नो यद्धृतं नयनाम्बुभिः ॥

१७६३

शिखिकुलगलप्राप्तच्छायैः पयोदवितानकै-
रभिनवततं दृष्ट्वा व्योम प्रमुग्धदृशा चिरम् ।
प्रथमविरहे सारङ्गाक्ष्या क्षणं तदनुष्ठितं
जगति पथिकैर्दत्तो येन प्रवासजलाञ्जलिः ॥

१७६४

कुटजकटवो वाता घ्राताः श्रुतं घनगर्जितं
निशि निशि मुधा शून्ये तल्पे कृतः शयनश्रमः ।
अवधिगणनालेखापूर्णाः कृता गृहभित्तयो
न खलु कठिनाः प्राणा याता न च त्वमिहागतः ॥

केषामपि.

१७६५

क्षपाः क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति समालोकनपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीह जलदाः ॥

पाणिनेः.

१७६६

दिशां हाराकाराः शमितशमभाराः शमवतां
हृताध्वव्यापाराः कृतमदविकाराश्च शिखिनाम् ।
असूचीसंचारास्तुहिनकणसारा विरहिणी-
मनःकीर्णाङ्गाराः किरति जलधारा जलधरः ॥

कस्यापि.

१७६७

बर्ही रौति बका रटन्ति तडितः शाम्यन्ति न व्याकुला
विक्रोशन्ति घना घना च विलपत्युच्चैर्बलाकावलिः ।
आत्मानं मरुतः क्षिपन्ति सलिलासाराः पतन्त्यग्रतो
मुक्त्वा प्रावृषि साहसैकरसिके याति प्रियामध्वगे ॥

कस्यापि.

१७६८

देशैरन्तरिता स्रवैश्च सरितामुर्वीधरैः काननै-
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणाग्ररुद्धवसुधः कृत्वाश्रुपूर्णां दृशं
तामाशां पथिकस्तथापि किमपि ध्यायन्मुहुर्वीक्षते ॥

नरसिंहस्य.

१७६९

किंचिन्मुद्रितपांसवः शिखिकुलैरुत्पक्ष्ममालोकिता
जीर्णावासरुदद्दरिद्रगृहिणीश्वासानिलैर्जर्जराः ।
एते ते निपतन्ति नूतनघनात्प्रावृड्भरारम्भिणो
विच्छायीकृतविप्रयुक्तवनितावक्त्रेन्दवो बिन्दवः ॥

कस्यापि.

१७७०

छिद्यन्तां वनराजयः कुसुमिता निर्वास्यतां सर्पभु-
ङ्नीपोद्दामकदम्बरेण सुरभिः संग्रथ्यतां मारुतः ।
हा कष्टं धिगहो न कश्चिदपि मे मूकीकरोत्यम्बुदा-
नित्येवं पथिकाङ्गनाप्रलपितं श्रुत्वेव खं रोदिति ॥

नड्डुवकस्य.

१७७१

ग्रामेऽस्मिन्पथिकाय पान्थ वसतिर्नैवाधुना दीयते
रात्रावत्र विहारमण्डपतले पान्थः प्रसुप्तो युवा ।
तेनोद्गीय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं
येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥

कस्यापि.

१७७२

श्रुत्वा बालमृगीविलोलनयना शब्दं घनानां पुरा
भीत्या वक्षसि संस्थितापि निविडं भूयः समालिङ्गति ।
या वक्त्रादपहृत्य रोपितवती कण्ठे ममैवाननं
सा द्रक्ष्यत्यधुना कथं नु विरहे बाला पयोदावलीम् ॥

दुर्गसेनस्य.

१७७३

नृत्यच्चन्द्रकिणि क्वणन्मधुलिहि श्यामायमानाक्षितौ
धीरध्वानपयोमुचि प्रविलसत्सौदामिनीदामनि ।
धाराम्भःकणशीतवाहिमरुति प्राणान्पयोदागमे
हा हा हास्यति मुग्धिका नववधूरित्यध्वगः क्रन्दति ॥

देवटस्य.

१७७४

रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा
पान्थेनात्मवियोगदुःखपिशुनं गीतं तथोत्कण्ठया ।
आस्तां जीवितहारिणः प्रवसनालापस्य संकीर्तनं
मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा ॥

अगटस्य.

१७७५

हंसानां गतयो हृता यदि तया कूजन्त्वमी सोत्सुका-
स्तत्केशैर्हृतबर्हकान्तय इमे नृत्यन्तु वा बर्हिणः ।
लावण्यं हृतमस्य दग्धशशिनस्तापं करोत्वेष मे
यूयं गर्जथ यन्निरागसि मयीत्येतन्न युक्तं घनाः ॥

कस्यापि.

१७७६

आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि-
स्त्वद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः ।
अन्तर्मे दयितामुखं तव शशी वृत्तिः समाप्यावयो-
स्तत्किं मामनिशं सखे जलधर त्वं दग्धुमेवोद्यतः ॥

आनन्दवर्धनस्य.

१७७७

मेघैर्व्योम नवाम्बुभिर्वसुमती विद्युल्लताभिर्दिशो
धाराभिर्गगनं वनानि कुटजैः पूरैर्वृता निम्नगाः ।
एकां घातयितुं वियोगविधुरां दीनां वराकीं स्त्रियं
प्रावृट्काल हताश वर्णय कृतं मिथ्या किमाडम्बरम् ॥

चीआकस्य.

१७७८

सोत्साहा नववारिभारगुरवो मुञ्चन्तु नादं घना
वाता वान्तु कदम्बरेणुशबला नृत्यन्तु सर्पद्विषः ।
मग्नां कान्तवियोगदुःखजलधौ मां वीक्ष्य दीनाननां
विद्युत्किं स्फुरसि त्वमप्यकरुणे स्त्रीत्वेऽपि तुल्ये सति ॥

१७७९

निर्नाश्याम्बरसीम्नि सूर्यशशभृत्ताराः पदप्राप्तये
मेघो घोररवः पदाधिगमने दानप्रवृत्तस्ततः ।
पश्चात्तापवशादिवाशु तनुते सूर्यं तडिद्रोचिषा
चन्द्रं बालबलाकया करकया ताराः समं सर्वतः ॥

पण्डितपाजकस्य.

१७८०

आकाशकुण्डे सतडिद्धुताशे
करोति होमं झषकेतुदेवः ।
उच्चाटनायेव वियोगिनीनां
यद्गर्जितं सैष हि मन्त्रपाठः ॥

श्रीराजानकशुगस्य.

१७८१

अदभ्रमभ्रोपलकुट्टिमेषु य-
च्छितीक्रियन्ते मदनेन मार्गणाः ।
तडिल्लतास्तन्निकषोत्थपावक-
स्फुलिङ्गभङ्गीललितानि बिभ्रति ॥

१७८२

अनङ्गशस्त्राणि नताङ्गि तीक्ष्णतां
नयत्ययस्कार इवाम्बुदागमः ।
मलीमसाङ्गाररुचां पयोमुचां
तथास्ति मध्ये ज्वलितस्तडिच्छिखी ॥

१७८३

वान्तूच्चैर्मरुतः स्फुरन्तु तडितो गर्जन्तु धाराधरा
मेघालोकनहर्षुलाः कलरवान्मुञ्चन्तु सर्पारयः ।
सद्यः प्रोषितजीवितेशविरहे या निस्त्रपा प्राणिता
युक्तं सा यदि जायते हतमतिः सर्वापदामास्पदम् ॥

१७८४

आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते
शीतोत्कम्पनिमित्तमायतदृशा गाढं समालिङ्ग्यते ।
जालैः शीकरशीतलाश्च मरुतो रत्यन्तखेदच्छिदो
धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासंगमे ॥

१७८५

नीलाम्भोजतमालकज्जलजलश्रीकण्ठकण्ठद्युते
भ्रातर्मेघ महेन्द्रचापरुचिरं व्यासज्य कण्ठे गुणम् ।
स्वैरं गर्ज मुहूर्तकं कुरु दयां सा बाष्पपूर्णेक्षणा
बाला बालमृणालकोमलतनुस्तन्वी न सोढुं क्षमा ॥

१७८६

दग्धा पूर्वमहं वसन्तसमये चूताङ्कुरैः कोकिलैः
पाप प्रावृषि गर्जितैः किमपरं कर्तव्यमन्यत्त्वया ।
दीना कान्तवियोगदुःखविधुरा क्षामा तनुर्वर्तते
क्षारं प्रक्षिपसि क्षते जलधर प्राणावशेषस्थितेः ॥

एते केषामपि.

१७८७

भ्रातः पान्थ प्रसीद प्रतिविरम समुत्सृज्य बालामकाण्डे
गन्तुं बाष्पाम्बुपूरप्लुतनयनमुखीं प्रेयसीं ते न युक्तम् ।
वृत्तं ग्रामेतिकष्टं यदिह गृहपतेः प्रोषितस्य प्रियाया
मुक्ताक्रन्दांस्त्वमेतान्सलिलवितरणे निर्गतान्पश्य बन्धून् ॥

मद्रकस्य.

१७८८

भद्रात्र ग्रामके त्वं वससि परिचयस्तेऽस्ति जानासि वार्ता-
मस्मिन्नध्वन्यजाया जलधररसितोत्का न काचिद्विपन्ना ।
इत्थं पान्थः प्रवासावधिदिनविगमापायशङ्की प्रियायाः
पृच्छन्वृत्तान्तमारात्स्थितनिजभवनोऽप्याकुलो न प्रयाति ॥

भीमस्य.

१७८९

मेघाटोपैः स्तनितसुभगं वीक्ष्य खं हस्तिदन्तैः
कृत्वा पल्लीं शशिकरनिभैश्चामरैश्छादयित्वा ।
कर्पूरैस्तां मृगमदरसैर्भूमिमालिप्य शेते
सैंहे चर्मण्युरसि दयिताबाहुपाशः पुलिन्दः ॥

१७९०

रटतु जलधरः पतन्तु धाराः
स्फुरतु तडिन्मरुतोऽपि वान्तु शीताः ।
इयमुरसि महौषधीव कान्ता
सकलभयप्रतिघातिनी स्थिता मे ॥

कयोरपि.

---

## अथ शरत्.

१७९१

बभूव गाढसंतापा मृणालवलयोज्ज्वला ।
उत्केव चन्दनापाण्डुघनस्तनवती शरत् ॥

भट्टबाणस्य.

१७९२

दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः ।
नवसंगमसव्रीडा जघनानीव योषितः ॥

वाल्मीकेः.

१७९३

वान्ति कह्लारसुभगाः सप्तच्छदसुगन्धयः ।
वाता नवरतग्लानवधूगमनमन्थराः ॥

१७९४

वान्ति रात्रौ रतिक्लान्तकामिनीसुहृदोनिलाः ।
ललनालोलधम्मिल्लमल्लिकामोदवासिताः ॥

कयोरपि.

१७९५

शरद्युत्पन्नसंदेहाः सरसो गगनस्य च ।
चातकाः सलिले पेतुश्चक्रवाका नभो ययुः ॥

१७९६

पणवनितयेव शरदा संप्रत्युपजनिततीव्रसंतापः ।
क्षपयित्वा घनसंपदमम्बरशेषः कृतः सविता ॥

एतौ शकवृद्धेः.

१७९७

काशाः क्षीरनिकाशा दधिशरवर्णानि सप्तपर्णानि ।
नवनीतनिभश्चन्द्रः शरदि च तक्रप्रभा ज्योत्स्ना ॥

गण्डगोपालस्य.

१७९८

विजितमपि पक्ष्मलाक्ष्या बिम्बाधरशोभया वराकमिदम् ।
विकसति बन्धूकमहो रागवतः कीदृशी लज्जा ॥

लोहितकस्य.

१७९९

भ्रश्यद्घनान्धकारेऽथ प्राप्ते वर्षानिशाक्षये ।
शरत्प्रभातवेलेव प्रकाशमनयद्दिशः ॥

१८००

रिक्ता विपाण्डुरात्मानो निःशब्दाः प्राप्तलाघवाः ।
त्वत्सपत्ना इव घना न्यस्तचापा दिशो ययुः ॥

और्वस्य.

१८०१

खमिव जलं जलमिव खं हंसश्चन्द्र इव हंस इव चन्द्रः ।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥

१८०२

असारो निर्गुणो वक्रश्चित्ररूपतयान्वितः ।
अवाप न चिराद्ध्वंसं शक्रचापः खलो यथा ॥

अवन्तिवर्मणः.

१८०३

सितद्विजालीरम्याणि न जहुः कस्य वा मनः ।
मुखानि चन्द्रकान्तानि निशानां योषितामिव ॥

शकवर्मणः.

१८०४

प्रसादयन्त्या शरदा चन्द्रमन्तर्मलीमसम् ।
तीव्रतापः कृतो भास्वान्नुषेवालोहितद्युतिः ॥

१८०५

कलमं फलभारातिगुरुमूर्धतया शनैः ।
विननामान्तिकोद्भूतं समाघ्रातुमिवोत्पलम् ॥

वररुचेः.

१८०६

मयैवाजन्मसंवृद्धः संपन्नः क्व नु यास्यति ।
शालेर्वियोगभीत्येव क्षेत्राम्भः कृशतां ययौ ॥

१८०७

मन्युनेव कृशां ग्रीष्मे वर्षासु रुदितामिव ।
शरत्प्रसादमनयच्छशाङ्कस्य निशाङ्गनाम् ॥

१८०८

उपकारिणि विक्षीणे शनैः केदारवारिणि ।
सानुक्रोशतया शालिरभूत्पाण्डुरवाङ्मुखः ॥

वररुचेः.

१८०९

लवणाम्बुनिधेरम्भः कृत्स्नमुद्गीर्य तोयदाः ।
दधुर्धवलतां भूयः पीतदुग्धार्णवा इव ॥

१८१०

नीलोत्पलवने रेजुः पादाः श्यामायिता रवेः ।
घनबन्धनमुक्तस्य श्यामिकामलिना इव ॥

बाणस्य.

१८११

वनानि तोयानि च नेत्रकल्पैः
पुष्पैः सरोजैश्च विलीनभृङ्गैः ।

निरस्य पुष्पेषु रुचिं समग्रां
पद्मा विरेजुः श्रमणा यथैव ॥

शकवृद्धेः.

१८१८

अथ प्रसन्नेन्दुमुखी सिताम्बरा
समाययावुत्पलपत्रलोचना ।
सपङ्कजश्रीरिव गां निषेवितुं
सहंसवालव्यजना शरद्वधूः ॥

महामनुष्यस्य.

१८१९

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ॥

भट्टेः.

१८२०

अक्ष्णोर्विपक्ष इति सानुशयं लुलाव
नीलोत्पलं यदबला कलमस्य गोप्त्री ।
भूयस्तदेव शिरसावहदुन्नतानां
वैरं विरोधिषु दृढं न पराजितेषु ॥

भट्टाचार्यस्य.

१८२१

तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः
शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः ।
तोयं प्रसीदति मुनेरिव चित्तमन्तः
कामी दरिद्र इव शोषमुपैति पङ्कः ॥

भासस्य.

१८२२

नीतोऽस्मि येन महतीं सलिलेन वृद्धिं
संयोजितश्च सततं गुरुणा फलेन ।

तच्छोष्यते दिनकृतेत्यतिचिन्तयेव
शोकानतं कलमशालिवनं विपाण्डु ॥

अर्जुनदेवस्य.

१८२३

क्वचित्सस्यैराढ्या क्वचन विकचैर्नीरजवनैः
क्वचित्स्वच्छैस्तोयैः क्वचिदपि रुतैः सारसकृतैः ।
क्वचिद्व्योमाभोगैः सुभगशशभृद्बिम्बधवलै-
रहो चेतः पुंसां हरति बहुरूपा शरदियम् ॥

१८२४

अर्धं सुप्तो निशायां सरभससुरतायाससन्नश्लथाङ्गः
प्रोद्भूतासह्यतृष्णो मधुमदविरतौ हर्म्यपृष्ठे विबुद्धः ।
संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं कर्करीतो
ज्योत्स्नाभिन्नाच्छधारं न पिबति सलिलं शारदं मन्दभाग्यः॥

कयोरपि.

१८२५

पूर्वं वारिधरप्रसङ्गसमयेनापूरितैः कुक्षिभि-
र्या गर्भिण्य इवातिभारगुरवो निःसेव्यतामागताः ।
एताः संप्रति ता विभान्त्यकलुषाः क्षामाभिरामाङ्गिकाः
कूजत्सारसपोतपीतपयसो नद्यः प्रसूता इव ॥

श्रीभोगिवर्मणः

१८२६

भोक्तुं भङ्क्त्वा न भुङ्क्ते कुटिलबिसलताकोटिमिन्दोर्वितर्का-
त्ताराकाराँस्तृषार्तो न पिबति पयसः स्थूलबिन्दून्दलस्थान् ।
छायां सध्वान्तसंध्येत्यलिकुलशबलां वेत्ति चाम्भोरुहाणां
कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥

श्रीशिवस्वामिनः.

---

## अथ हेमन्तः

१८२७

शरत्कालातपक्रान्तकान्तावक्त्रेन्दुवल्लभः ।
प्राप्तः सपदि हेमन्तः सामन्तः स्मरभूपतेः ॥

१८२८

अलभन्त नभःक्षेत्रे तारास्तरलकान्तयः
त्विषं तुषारबीजानां नूतनाङ्कुरशालिनाम् ॥

१८२९

साशङ्केनेव कंदर्पदर्पोष्मपरिचिन्तनात् ।
शीतेन मदिराक्षीणां स्पृश्यते न कुचस्थली ॥

१८३०

मद्वैरिणः कठोरांशोरियं प्रणयभूरिति ।
रोषादिव तुषारेण निरदह्यत पद्मिनी ॥

१८३१

समक्षमपि सूर्यस्य पर्यभूयत पद्मिनी ।
तेजस्विनोऽपि कुर्वन्ति किं कालवशमागताः ॥

एते बिल्हणस्य

१८३२

हिमधवलदन्तकेशी मन्दद्युतितारका बृहत्तिमिरा ।
द्विगुणीभूता रजनी वृद्धेव शनैः शनैर्याति ॥

१८३३

नग्नाः सदा शीतसहा जटाधरा
विमुच्य पर्णानि फलानि सांप्रतम् ।
सुखप्रदं माधवमाप्तुमुत्सुका-
स्तपः प्रवृत्ताः किमु सन्ति पादपाः ॥

१८३४

कम्पप्रदोऽसौ शिशिरर्तुचौरो
मुष्णाति वृक्षान्हरते किमस्मान् ।

इतीव भीत्या परिपाण्डुराणि
जातानि शुष्काणि तृणानि भूमौ ॥

१८३५

हरति किमपां भस्मासारं शरद्धसितात्मनां
परिपवनतां नीतैर्मेघैः पुनात्युत चन्द्रिकाम् ।
वमति सुमनःसंदर्भं किं निगीर्णमशेषतः
किरति परितः किं हेमन्तस्तुषारकणोत्करम् ॥

प॰ श्रीबकस्य.

१८३६

हे हेमन्त स्मरिष्यामि याते त्वयि गुणद्वयम् ।
अयत्नशीतलं वारि निशाश्च सुरतक्षमाः ॥

१८३७

गम्भीरस्यापि सतः संप्रति गुरुशोकपीडितस्येव ।
कूपस्य निशापगमे बाष्पेण निरुध्यते कण्ठः ॥

एतौ बाणकवेः.

१८३८

आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि ।
गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥

भल्लोः.

१८३९

प्रालेयलेशशिशिरानिलसंप्रयोगः
प्रोत्फुल्लकुन्दमकरन्दहृतालिवृन्दः ।
कालोऽयमापतति कुङ्कुमपङ्कपिङ्ग-
प्रोत्तुङ्गपीवरपयोधरभारभाजाम् ॥

डोहरस्य.

१८४०

लघुनि तृणकुटीरे क्षेत्रकोणे यवानां
नवयवसपलालस्रस्तरे सोपधाने ।
परिहरति सुगुप्तं हालिकद्वन्द्वमारा-
त्कुचकलशमहोष्माबद्धरेखस्तुषारः ॥

कमलायुधस्य.

१८४१

शुकहरितयवानां सीम्नि नीहारभासः
सपदि विगतनिद्राः क्रौञ्चकान्ताः क्षपान्ते ।
विदधति कमनीयं क्काणमुद्यत्ककारं
सरलितगलनालीजर्जरस्फाररेफम् ॥

१८४२

हे पान्थ प्रियविप्रयोगहुतभुग्ज्वालानभिज्ञोऽसि किं
किं वा नास्ति तव प्रिया गतघृणः किं वासि हीनो धिया ।
येनास्मिन्नवकुङ्कुमारुणरुचिव्यासङ्गघर्मोचिते
कुन्दानन्दितमत्तषट्पदकुले काले गृहान्निर्गतः ॥

१८४३

प्रोद्यत्प्रौढप्रियङ्गुद्युतिभृति विदलत्कुन्दमाद्यद्विरेफे
काले प्रालेयवातप्रचलविकसितोद्दाममन्दारदाम्नि ।
येषां नो कण्ठलग्ना क्षणमपि तुहिनक्षोददक्षा मृगाक्षी
तेषामायामियामा यमसदनसमा यामिनी याति नूनम् ॥

केषामपि.

१८४४

छित्त्वा हारलताः किरन्ति गलितव्याकीर्णमुक्ताफलाः
शुष्कं मर्मरयन्ति चन्दनरजो वक्षःस्थलायासकम् ।
शीतं शारदतापतान्तिशमनं यद्यत्समाजह्रिरे
हेमन्ते तदिदं त्यजन्ति तुहिनव्याजेन दिव्याङ्गनाः ॥

१८४५

शोभां दिक्तरुणीर्नयन्ति विलसन्मुक्ताकलापोज्ज्वलां
क्षौणीमण्डलमावहन्ति निपतत्पुष्पोपकाराञ्चितम् ।
स्वच्छैः प्रोर्णुवते नितान्तधवलैर्वासोभिरुर्वीभृतः
किं हेमन्तमहोचितं हिममुचः कुर्वन्ति नैतेऽम्बुदाः ॥

१८४६
प्रयाणव्यापारं तुहिनपतनेनान्तरयति
प्रथिम्ना श्यामानां विपुलयति संभोगसमयम् ।
समाश्लेषं शीतैर्गमयति मरुद्भिर्निबिडतां
हितं हेमन्तोऽयं किमपि तरुणानां प्रकुरुते ॥

एते श्रीभर्तृसारस्वतस्य.

## अथ शिशिरः

१८४७
अव्युत्पन्नविलासानां नारीणामिव सांप्रतम् ।
सीत्काराचार्यतां कर्तुमयं प्राप्तो हिमागमः ॥

१८४८
कारणोत्पन्नकोपापि सांप्रतं जलदागमे ।
निशि शीतापदेशेन गाढमालिङ्गति प्रियम् ॥

एतौ महामनुष्यस्य.

१८४९
प्रावारैरङ्गारैर्गर्भगृहैस्स्तनतटैश्च दयितानाम् ।
संतर्जितं समन्तान्निपतति शीतं दरिद्रेषु ॥

१८५०
संकोचितकरयुगलः प्रगलितदन्तासिकोद्धूषितकायः ।
नद्यवतरणविषण्णो लिखित इवावस्थितः पथिकः ॥

कयोरपि.

१८५१
अंशुकमिव शीतभयात्संस्त्यानत्वच्छलेन हिमधवलम् ।
अम्भोभिरपि गृहीतं पश्यत शिशिरस्य माहात्म्यम् ॥

अमृतवर्धनस्य.

१८५२
करचरणनासमादौ कर्णौ गृह्णाति रक्ततां गमयन् ।
शीतं गुरुकृतपीडं पश्चादङ्गानि कूर्म इव ।

बीजकस्य.

१८५३

द्वारं गृहस्य पिहितं शयनस्य पार्श्वे
वह्निर्ज्वलत्युपरि तूलपटो गरीयान् ।
अङ्केऽनुकूलमनुरागवशात्कलत्र-
मित्थं करोति किमसौ स्वपतस्तुषारः ॥

बाणस्य.

१८५४

केशानाकुलयन्दृशौ मुकुलयन्वासो बलादाक्षिप-
न्नातन्वन्पुलकोद्गमं प्रकटयन्नावेगकम्पं गतेः ।
वारं वारमुदारसीत्कृतरवैर्दन्तच्छदं पीडय-
न्प्रायः शैशिर एष संप्रति मरुत्कान्तासु कान्तायते ॥

१८५५

चुम्बन्तो गण्डभित्तीरलकवति मुखे सीत्कृतान्यादधाना
वक्षःसूत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ।
ऊरूनाकम्पयन्तः पृथुजघनतटात्स्रंसयन्तोंऽशुकानि
व्यक्तं कान्ताजनानां विटचरितभृतः शैशिरा वान्ति वाताः॥

कस्यापि.

१८५६

इन्दुं तण्डुलखण्डमण्डलरुचिं नित्योदितं जातुचि-
द्दर्शे मेघवरट्टघट्टनगलद्देहं विधत्ते विधिः ।
नूनं लोकहितेच्छया किरति यत्संतर्पणं सर्वतः
शुभ्रादभ्रविशिष्टपिष्टरुचिरं भूमौ तुषारं दिवः ॥

प॰ पाजकस्य.

१८५७

पुण्याग्नौ पूर्णवाञ्छः प्रथममगणितप्लोषदोषः प्रदोषे
पान्थः सुप्त्वा यथेच्छं तरलतनुतृणे धामनि ग्रामदेव्याः ।
उत्कम्पी कर्पटार्धे जरति परिजडे दभ्रनिश्छिद्रनिद्रे
वाते वाति प्रकामं हिमकणनिहतः कोणतः कोणमेति ॥

## अथ कुसुमोच्चयः

१८५८

प्रयच्छतोच्चैः कुसुमानि मानिनी
विपक्षगोत्रं दयितेन लम्भिता ।
न किंचिदूचे चरणेन केवलं
लिलेख बाष्पाकुललोचना भुवम् ॥

१८५९

निपीयमानस्तबका शिलीमुखै-
रशोकयष्टिश्चलबालपल्लवा ।
विडम्बयन्ती ददृशे वधूजनै-
रमन्ददष्टौष्ठकरावधूननम् ॥

१८६०

करौ धुनाना नवपल्लवाकृती
वृथा कृथा मानिनि मा परिश्रमम् ।
उपेयुषी कल्पलताभिशङ्कया
कथं न्वितस्त्रस्यति षट्पदावलिः ॥

१८६१

व्यपोहितुं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मना:
प्रियं जघानोन्नतपीवरस्तनी ॥

एते भारवेः

१८६२

मुहुरुपहसितामिवालिनादै-
र्वितरसि नः कलिकां किमर्थमेताम् ।
वसतिमभिगतेन धाम्नि तस्याः
शठ कलिरेव महाँस्त्वयाद्य दत्तः ॥

१८६३

अवचितकुसुमा विहाय वल्ली-
र्युवतिषु कोमलमालभारिणीषु ।
पदमुपदधिरे कुलान्यलीनां
न परिचयो मलिनात्मनां प्रधानम् ॥

१८६४

विनयति सुदृशो दृशः परागं
प्रणयिनि कौसुममानानानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णो-
र्द्वयमपि रोषरजोभिरापुपूरे ॥

एते माघस्य.

१८६५

उच्चित्य प्रथममवस्थितं मृगाक्षी
पुष्पौघं श्रितविटपं ग्रहीतुकामा ।
आरोढुं चरणमदादशोकयष्टे-
रामूलं पुनरपि तेन पुष्पितासौ ॥

१८६६

अत्रास्मिन्सुरतलतागृहेऽस्ति रम्यं
मालत्याः कुसुममनुच्चितं परेण ।
इत्युक्त्वा मृदु करपल्लवे गृहीत्वा
मुग्धाक्षीं रहसि निनाय कोऽपि धूर्तः ॥

एतौ जयमाधवस्य.

१८६७

प्रोत्फुल्लचारुकुसुमस्तबकौघनम्रा
येयं धृता रुचिरचूतलता मृगाक्ष्या ।
शङ्केऽनया विरहिणीवधदुर्मदस्य
कामस्य पूरितमिदं प्रतिपुष्पचापम् ॥

एतत्पुत्रलोठकस्य.

१८६८
असंख्यपुष्पोऽपि मनोभवस्य
पञ्चैव बाणार्थमयं ददाति ।
एवं कदर्यत्वमिवावधार्य
सर्वस्वमग्राहि मधोर्वधूभिः ॥

१८६९
स्वेदाम्भसा पुष्परजोभरैश्च
सर्वत्र पङ्के विहिते वधूनाम् ।
चक्रे निवासं कठिनोन्नतेषु
स्त्रीणां मनोभूः कुचमण्डलेषु ॥

---

## अथ जलकेलिः

१८७०
उन्मृष्टपत्रा लुलितालकान्ताः
कण्ठेषु लग्ना जघनं स्पृशन्तः ।
कुचस्थलीष्वाहतिमादधाना
गता वधूनां प्रियतां जलौघाः ॥

१८७१
चकाशिरे कण्टकिभिः पलाशै-
र्नितम्बसङ्गोल्लसितोरुकम्पैः ।
कान्तापरिष्वङ्गविरूढसान्द्र-
रोमाञ्चपुञ्जैरिव पद्मखण्डाः ॥

१८७२
हृतोऽङ्गरागास्तिलकं विमृष्टं
लब्धान्तरैरेभिरितीव मत्वा ।
सुसंहतेनेति तदा जलाना-
मदायि मध्यं न कुचद्वयेन ॥

एते जयवर्धनस्य.

१८७३

सन्दष्टवस्त्रेष्वबलानितम्बे-
ष्विन्दुप्रकाशान्तरितोडुकल्पाः ।
अमी जलापूरितसूत्रमार्गा
मौनं भजन्ते रशनाकलापाः ॥

१८७४

आसां जलास्फालनतत्पराणां
मुक्ताफलस्पर्धिषु शीकरेषु ।
पयोधरोत्सर्पिषु शीर्यमाणः
संलक्ष्यते न च्छिदुरोऽपि हारः ॥

एतौ कालिदासस्य.

१८७५

मुग्धाङ्गना कापि सरोजपत्रं
विलोलिताम्भःकणिकं निरीक्ष्य ।
प्रसारयामास जवेन पाणिं
ससंभ्रमं मौक्तिकशङ्कयेव ॥

वल्लभदेवस्य.

१८७६

सततमातपवातनिषेविणः
परिणतं सरसस्तपसः फलम् ।
यदबलाजन एव भुजैरसा-
वुर इवास्य पयः परिषस्वजे ॥

शङ्कुकस्य.

१८७७

प्रियकरप्रहिताम्बुकणच्छटा-
च्छुरणमीलितलोचनयाप्यहो ।
हृदि कयाचिदसह्यमनोभव-
ज्वलनतापरुजा जगृहेतराम् ॥

१८७८

करौ धुनाना नवपल्लवाकृती
पयस्यगाधे किल जातसंभ्रमा ।
सखीष्वनिर्वाच्यमधाष्टर्यदूषितं
प्रियाङ्कसंश्लेषमवाप मानिनी ॥

१८७९

प्रियेण संग्रथ्य विपक्षसंनिधा-
वुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥

१८८०

तिरोहितान्तानि नितान्तमाकुलै-
रपां विगाहादलकैः प्रसारिभिः ।
ययुर्वधूनां वदनानि तुल्यतां
द्विरेफवृन्दान्तरितैः सरोरुहैः ॥

एते भारवेः.

१८८१

संक्षोभं पयसि मुहुर्महेभकुम्भ-
श्रीभाजा स्तनयुगलेन नीयमाने ।
विश्लेषं युगमगमद्रथाङ्गनाम्नो-
रुद्वृत्तः क इव सुखावहः परेषाम् ॥

१८८२

आनन्दं दधति मुखे करोदकेन
श्यामाया दयिततमेन सिच्यमाने ।
ईर्ष्यन्त्या वदनमसिक्तमप्यनल्प-
स्वेदाम्भःस्नपितमजायतेतरस्याः ॥

१८८३

कान्तानां कुवलयमप्यपास्तमक्ष्णोः
शोभाभिर्न मुखरुचाहमेकमेव ।
संहर्षादलिविरुतैरितीव गायँ-
ल्लोलोर्मौ पयसि महोत्पलं ननर्त ॥

एते माघस्य.

१८८४

लब्धं सरोभिः फलमम्बुजानां
सङ्गेन कान्तामुखतस्कराणाम् ।
एषामकृष्यन्त वराङ्गनाभि-
र्विलोचनानीव यदुत्पलानि ॥

१८८५

किमप्यवज्ञातसरोरुहेभ्यः
सरस्तदासां पदपल्लवेभ्यः ।
परीक्षणायेव विसर्गकान्ते-
रलक्तकं वीचिभिराचकर्ष ॥

एतौ बिह्लणस्य.

---

## अथास्तमयः

१८८६

करसादोम्बरत्यागस्तेजोहानिः सरागता ।
वारुणीसङ्गजावस्था भानुनाप्यनुभूयते ॥

सुरभिचूलस्य.

१८८७

विलोक्य संगमे रागं पश्चिमाया विवस्वतः ।
कृतं कृष्णं मुखं प्राच्या नहि नार्यो विनेर्ष्यया ॥

पाणिनेः.

१८८८

दीप्तिमोषखिलेशेषु तापं विरहिणीषु च ।
निःक्षिप्येव जगामास्तं विस्रस्तकिरणो रविः ॥

क्षेमेन्द्रस्य.

१८८९

अविज्ञातविशेषस्य सर्वतेजोपहारिणः ।
स्वामिनो निर्विवेकस्य तमसश्च किमन्तरम् ॥

श्रीमदवन्तिवर्मणः.

१८९०

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥

विक्रमादित्यस्य.

१८९१

क्वचिन्मृगशिरःपूर्णं क्वचिदालम्बिकृत्तिकम् ।
क्वचिच्छ्रवणसंकीर्णं नभो व्याधगृहायते ॥

भास्करसेनस्य.

१८९२

सांध्यरागरुधिरारुणमारा-
न्निष्पपात रविमण्डलमब्धौ ।
क्रूरकालकरवालविलूनं
वासरस्य सहसैव शिरो नु ॥

उपमन्योः.

१८९३

रम्यतामुपगते नयनानां
लोहितायति सहस्रमरीचौ ।
आससाद विरहय्य धरित्रीं
चक्रवाकमिथुनान्यभितापः ॥

भारवेः.

१८९४

अंशुमानपि विपाकपिशङ्गं
रूपमाप परितो दिवसान्ते ।
कः परोऽत्र न विकारमुपेया-
द्वीम— — परिवेल्लितमूर्तिः ॥

१८९५

प्रोज्झ्यमित्रमपवर्जितदोषं
नाशयप्रकटनं मम युक्तम् ।
नूनमेवमवमृष्य तदानीं
मीलितं हृदयमम्बुरुहेण ॥

१८९६

मित्रमुज्झितवतातिनिराशं
स्वाशयाद्विदितवैभवहीनम् ।
ईदृशेन नभसा महतान्तः
शून्यता प्रकटितातिशयेन ॥

एते जयमाधवस्य.

१८९७

असौ हि संकेतसमुत्सुकाभि-
र्विलासिनीभिर्मदनातुराभिः ।
सरोषदृष्टः स्फुरिताधराभि-
र्द्रुतं रविर्भीत इवास्तमेति ॥

नरेन्द्रस्य.

१८९८

अथाससादास्तमनिन्द्यतेजा
जनस्य दूरोज्झितमृत्युभीतेः ।
उत्पत्तिमद्वस्तु विनाश्यवश्यं
यथाहमित्येवमिवोपदेष्टुम् ॥

१८९९

सरोरुहाक्षीणि निमीलयन्त्या
रवौ गते साधु कृतं नलिन्या।
अक्ष्णां हि दृष्ट्वापि जगत्समग्रं
फलं प्रियालोकनमात्रमेव ॥

एतौ पाणिनेः.

१९००

कृतोपकारं प्रियबन्धुमर्कं
मा द्राक्ष्म हीनांशुमधः पतन्तम्।
इतीव मत्वा नलिनीवधूभि-
र्निमीलितान्यम्बुरुहेक्षणानि ॥

१९०१

शुद्धमाविलमवस्थितं चलं
वक्रमार्जवगुणान्वितं च यत्।
सर्वमेव तमसा समीकृतं
धिङ्महत्त्वमसतां हृतान्तरम् ॥

कालिदासस्य.

१९०२

एके वारिनिधौ प्रवेशमपरे लोकान्तरालोकनं
केचित्पावकयोगितां निजगदुः क्षीणेऽह्नि चण्डार्चिषः।
मिथ्या चैतदसाक्षिकं प्रियसखि प्रत्यक्षतीव्रातपं
मन्येऽहं पुनरध्वनीनरमणीचेतोऽधिशेते रविः ॥

इन्दुलेखायाः.

१९०३

महद्भिरोघैस्तमसामभिद्रुतो
भयेऽप्यसंमूढमतिः क्रमन्क्षितौ।
प्रदीपवेषेण गृहे गृहे स्थितो
विखण्डय देहं बहुधेव भास्करः ॥

मेण्ठस्य.

१९०४
प्रकाश्य लोकान्भगवान्स्वतेजसा
प्रभादरिद्रः सवितापि जायते ।
अहो चला श्रीर्बलमापदामहो
स्पृशन्ति सर्वं हि दशा विपर्यये ॥

पाणिनेः.

१९०५
अयं हि तीव्रेण जगन्ति तेजसा
प्रताप्य भासां पतिरस्तमागतः ।
प्रतापमात्रोपनता विभूतय-
श्चिरं न तिष्ठन्ति परोपतापिनाम् ॥

शंकरगणस्य.

१९०६
समाहतं यस्य करैर्विसर्पिभि-
स्तमो दिगन्तेष्वपि नावतिष्ठते ।
स एव भास्वाँस्तमसाभिभूयते
स्पृशन्ति कं कालवशेन नापदः ॥

इहोरकस्य.

१९०७
परस्परं चञ्चुपुटद्वयार्पितां
बिभर्ति चक्राह्वयुगं मदालसम् ।
नितान्तसंघट्टनकीलकोपमां
वियोगभीत्येव मृणालनालिकाम् ॥

कस्यापि.

१९०८
यातोऽस्मि पद्मनयने समयो ममैष
सुप्ता मयैव भवती प्रतिबोधनीया ।
प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥

श्रीहर्षदेवस्य.

१९०९

अस्तावलम्बिरविबिम्बतयोदयाद्रि-
चूडोन्मिषत्सकलचन्द्रतया च सायम् ।
संध्याप्रनृत्तहरहस्तगृहीतकांस्य-
तालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥

१९१०

व्यक्तोपकारममुना स्थगितासु दिक्षु
प्रेयोगृहं सुखमलक्षितमेव यामः ।
धम्मिल्लबन्धरुचिरैरभिसारिकाभिः
प्रेम्णा तमश्चिरमितीव शिरोभिरूहे ॥

१९११

आबद्धपद्ममुकुलाञ्जलि याचितोऽसा-
वुत्सृज्य संप्रति गतः कथमंशुमाली ।
अन्तर्निरुद्धमधुपक्कणितैरितीव
स्वप्नायति स्म नलिनी निशि बद्धनिद्रा ॥

१९१२

अस्ताद्रिपार्श्वमुपजग्मुषि तिग्मभासि
जानीत शीतकिरणोऽभ्युदितो न वेति ।
चारा इवाथ रजनीतिमिरप्रयुक्ता-
श्चेरुश्चिरं चरणभूमिषु चञ्चरीकाः ॥

१९१३

निष्ठ्यूतकज्जलकरालशिखाशिखण्डै-
रुत्सङ्गवृत्तिमधिगम्य निकेतनानाम् ।
स्नेहानुबन्धिभिरदीपि दिनावसाने
संध्यार्भकैरिव सरागकरैः प्रदीपैः ॥

एते रत्नाकरस्य.

१९१४

आवेपते भ्रमति रोदिति मोहमेति
कान्तं विलोकयति कूजति दीनदीनम् ।
अस्तं हि भानुमति गच्छति चक्रवाकी
हा जीवितेऽपि मरणं प्रियविप्रयोगः ॥

१९१५

दूरागतं दयितमुत्सुकिता नितान्त-
मालिङ्गय यातु विरहस्य दुरन्तमन्तम् ।
इत्थं विचिन्त्य भुवनत्रितयैकबन्धु-
रस्तं जगाम भगवाननुकम्पयेव ॥

कयोरपि·

१९१६

एकेनाक्ष्णा परिणतरुषा पाटलेनास्तसंस्थं
पश्यत्यर्कं कुमुदविशदेनापरेण स्वकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी
द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥

चन्द्रकस्य·

१९१७

हुताशज्वालाभे स्थितवति रवावस्तशिखरे
पिपासुः किञ्जल्कं प्रविशति सरोजं मधुकरः ।
तदन्तः संरोधं गणयति न संध्यासमयजं
जनोऽर्थी नापायं विमृषति फलैकान्ततृषितः ॥

विष्णुशर्मणः·

१९१८

वेत्त्यङ्गारसमं विकासिकुसुमं पश्यत्यलातं बिसं
वह्निं चन्द्रमवेक्षते ग्रहगणं तद्विस्फुलिङ्गोपमम् ।
चक्राह्वो निशि शीतलेऽपि शयने तोयेन संदह्यते
प्रायेणेष्टवियोगतप्तमनसां वह्न्येकरूपं जगत् ॥

१९१९

चक्राह्वो विरही हतोऽपि हृदये बाणेन न त्यक्तवा-
न्प्राणान्प्राणसमासमागमसुखध्यानैकतानाश्चिरम् ।
स्वां छायामवलोक्य वारिणि गलद्रक्तामवेत्य प्रियां
भ्रातस्तद्व्रणवेदनापरिगतः कष्टं मृतः सांप्रतम् ॥

कस्यापि.

१९२०

दीनं रौति निरीक्ष्य तत्र सवितुर्बिम्बं समुत्को मुहु-
श्चञ्च्वा मार्ष्टि पुरः स्थितां सहचरीं दुःखेन मन्दोद्यमाम् ।
अस्तं यास्यति भास्करोऽयमुदयादित्याकुलश्चेतसा
चक्राह्वो न सुखं दिवापि लभते धिग्दुःखितान्कामिनः ॥

१९२१

पक्षावुत्क्षिपति क्षितौ निपतति क्रोडं नखैरुल्लिख-
त्युद्बाष्पेण च चक्षुषा सहचरीं ध्यायन्मुहुर्वीक्षते ।
चक्राह्वो दिवसावसानसमये तत्तत्करोत्युन्मना
येनालोहितमण्डलोऽपि कृपया नास्तं रविर्गच्छति ॥

प्रियाविरहस्य.

१९२२

प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभू-
न्न पतिष्यतः करसहस्रमपि ॥

१९२३

अनुरागवन्तमपि लोचनयो-
र्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं
वियदालयादपरदिग्गणिका ॥

१९२४

रुचिधाम्नि भर्तरि भृशं विमलाः
परलोकमभ्युपगते विविशुः ।
ज्वलनं त्विषः कथमिवेतरथा
सुलभोऽन्यजन्मनि स एव पतिः ॥

१९२५

अविभाव्यतारकमदृष्टहिम-
द्युतिबिम्बमस्तमितभानु नभः ।
विरतोरुतापमतमिस्रमभा
दपदोषतैव विगुणस्य गुणः ॥

१९२६

ददृशेऽपि भास्कररुचाह्नि न यः
स तमीं तमोभिरधिगम्य तताम् ।
द्युतिमग्रहीद्ग्रहगणो लघवः
प्रकटीभवन्ति मलिनाश्रयतः ॥

एते माघस्य.

१९२७

कालः किरातः स्फुटपद्मकस्य
वधं व्यधाद्यस्य दिनद्विपस्य ।
तस्यैव संध्या रुचिरास्रधारा
ताराश्च कुम्भस्थलमौक्तिकानि ॥

१९२८

एतद्भ्रुकचानुकारिकिरणं राजद्रुहोऽह्नः शिर-
श्छेदाभं वियतः प्रतीचि निपतत्यब्धौ रवेर्मण्डलम् ।
एषापि द्युरमा प्रियानुगमनं प्रोद्दामकाष्ठोत्थिते
संध्याग्नौ विनिधाय तारकमिषाज्जातास्थिशेषस्थितिः ॥

एतौ नैषधकर्तुः.

१९२९

भानुमानपरदिग्वनिताया-
श्चुम्बति स्म मुखमुद्गतरागः ।
पद्मिनी किमु करोतु वराकी
मीलिताम्बुरुहनेत्रपुटाभूत् ॥

विह्लणस्य

१९३०

किं नु कालगणनापतेर्मषी-
भाण्डमर्थमवपुर्हिरण्मयम् ।
तत्र यद्विपरिवर्तितानने
लिम्पति स्म धरणिं तमोमषी ॥

मङ्खकस्य

१९३१

आदाय दण्डं सकलासु दिक्षु
योऽयं परिभ्राम्यति भानुभिक्षुः ।
अब्धौ निमज्जन्निव तापसोऽयं
संध्याभ्रकाषायमधत्त सायम् ॥

१९३२

किं योगिनीयं रजनी रतीशं
याजीजिवत्पद्ममुमुहच्च ।
योगर्द्धिमस्या महतीमलग्न-
मिदं वदत्यम्बरचुम्बि कम्बु ॥

१९३३

प्रबोधकालप्रतिबोधितानि
ताराखपुष्पाणि निदर्शयन्ती ।
निशाह शून्याध्वनि योगिनीयं
मृषा जगद्दृष्टमपि स्फुटाभम् ॥

१९३४

रामालिरोमावलिदिग्विगाहि
ध्वान्तायते वाहनमन्तकस्य ।
यद्वीक्ष्य दूरादिव बिभ्यतः स्वा-
नश्वान्गृहीत्वापसृतो विवस्वान् ॥

एते नैषधकर्तुः.

१९३५

वासवस्तुरगरत्नममुष्मा-
त्प्राप दास्यति ममापि कदाचित् ।
आशयेति जलराशिमयासी-
द्भानुरश्वपरिवर्तधियेव ॥

---

## अथाभिसारिकाः

१९३६

हृदये दयितेन हृते वपुषि सवेपथुनि पथि निरालोके ।
अयि कथय कथमनङ्ग प्रियगृहमभिसारिकां नयसि ॥

१९३७

दुर्दिननिशीथतिमिरे निःसंचारासु नगरवीथीषु ।
पत्यौ विदेशयाते परं सुखं जघनचपलायाः ॥

१९३८

कान्तवेश्म बहु संदिशतीभि-
र्यातमेव रतये रमणीभिः ।
मन्मथेन परिलुप्तमतीनां
प्रायशः स्खलितमप्युपकारि ॥

भारवेः.

१९३९

नूपुरौ कथयतोऽभिसारणं
शिञ्जितेन पदवीमलक्तकः ।

संगमे रटति मेखला खला
सर्व एव रिपवो न मण्डनम् ।।

१९४०

उत्तिष्ठ दूति यामो यामो यातस्तथापि नायातः ।
यातः परमपि जीवति जीवितनाथो भवत्यस्याः ।।

कयोरपि.

१९४१

नयनोदरयोः कपोलभागे
द्युतिमद्रत्नगणेषु भूषणेषु ।
सलिलप्रतिबिम्बितेन्दुबिम्बा
शतचन्द्राभरणेव काचिदासीत् ।।

भूषणदेवस्य.

१९४२

मदेन रागेण किमिन्दुना वा
पुष्पेषुणा वा मधुना प्रयुक्ताः ।
निशागमे यत्प्रविहाय भीतिं
ययुः प्रियाणां भवनानि नार्यः ।।

शीलुकस्य.

१९४३

निरीक्ष्य विद्युन्नयनैः पयोदो
मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किं नु वान्त-
श्चन्द्रोऽयमित्यार्ततरं ररास ।।

पाणिनेः.

१९४४

संकेतधाम्नि प्रथमं प्रियेण
संभाविते सत्यभिसारिकायाः ।
अभूत्सुखं यत्किमपीति वाचा-
मगोचरं तत्स्वयमेव वाच्यम् ।।

प्रवरसेनस्य.

१९४५

कलावति क्षततमसि प्रभावति
स्फुटोदये जननयनाभिनन्दिनि ।
ददुर्दृशं शशिनि रुषाभिसारिकाः
कचिद्भवत्यतिसुभगोऽपि दुर्भगः ॥

गोविन्दस्वामिनः.

१९४६

क प्रस्थितासि करभोरु घने निशीथे
प्राणाधिको वसति यत्र निजः प्रियो मे ।
एकाकिनी वद कथं न बिभेषि बाले
शूरोऽस्ति पुङ्खितशरो मदनः सहायः ॥

अमरुकस्य.

१९४७

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा
यदि किमपरं त्रासोत्कम्पा दिशः समुदीक्षसे ॥

अर्गटस्य.

१९४८

मार्गे पङ्किनि तोयदान्धतमसे निःशब्दसंचारकं
गन्तव्या दयितस्य मेऽद्य वसतिर्मुग्धेति कृत्वा मतिम् ।
आ जानूद्धृतनूपुरा करतलेनाच्छाद्य नेत्रे भृशं
कृच्छ्राल्लब्धपदस्थितिः स्वभवने पन्थानमभ्यस्यति ॥

१९४९

यावन्मद्यमदप्रमादविवशः सुप्तो जनोऽन्तःपुरे
यावच्चैष न मुच्यते जलमुचा वैरीव तारापतिः ।
यावद् द्वारमिदं न रक्षकजनैरास्थीयते संप्रति
क्षिप्रं तावदसौ स्मरामयवतां वैद्यः समासाद्यताम् ॥

१९५०

वातोद्धूतमुखी प्रमृष्टतिलका सालक्तरक्तांशुका
मेघानां निनदेन भीतवदना गत्वा प्रियस्यालयम् ।
द्वारं नेच्छति लज्जया प्रलपितुं देहीति वर्षाहता
पादौ नूपुरकर्दमप्रतिहतौ संशब्दयन्ती स्थिता ॥

केषामपि.

१९५१

पङ्काक्ताजानुपादासिततरवसना वृष्टिसंमृष्टपत्त्रा
वातोद्धूतालकान्ता जलपतनगलत्क्लिन्नधम्मिल्लमाला ।
शीतप्रस्पन्दितौष्ठाक्षमकरचरणा वेपथुव्याप्तगात्री
नापुण्यैरेत्य तन्वी गुरुजनभवनान्नीयते वक्षसि द्राक् ॥

वय्यहास्यस्य.

१९५२

पुत्रमम्बुजमुखी शवभङ्ग्या
कृत्रिमं शिरसि कापि वहन्ती ।
कान्तवेश्मनि जगाम रुदन्ती
कं विडम्बयति नो कुसुमेषुः ॥

बिह्लणस्य.

१९५३

अस्थानगामिभिरलंकरणैरुपेता
भूयः पदस्खलननिह्नुतिरप्रसन्ना ।
वाणीव कापि कुकवेर्जनहस्यमाना
द्राङ्निर्गता निजगृहाद्वनिता मदान्धा ॥

उत्प्रेक्षावल्लभस्य.

१९५४

निशा वयस्या तिमिरं प्रदीपः
सोपानपाली भुजगेन्द्रभोगाः ।
प्रेमोन्मदानामभिसारिकाणां
स्मरोपदिष्टः पर एव पन्थाः ॥

वाहिनीपतेः.

## अथ चन्द्रोदयः

१९५५

प्रत्यग्रयौवनां श्यामामपेततिमिरांशुकाम् ।
विलोक्य जातहासोऽभून्मुदेव कुमुदाकरः ॥

वररुचेः.

१९५६

आश्वासयति काकोऽपि दुःखितां पथिकाङ्गनाम् ।
त्वं चन्द्रामृतजन्मापि दहसीति किमुच्यताम् ॥

१९५७

तन्वङ्ग्या मुखमुद्वीक्ष्य क्षणमेष निशाकरः ।
प्रद्वेषात्क्षयमायाति वृद्धिर्मत्सरिणां कुतः ॥

१९५८

कुमुदेष्वधिकं भान्ति पतिताश्चन्द्ररश्मयः ।
अतिप्रकृष्टशीलेषु कुलेष्विव समृद्धयः ॥

१९५९

बोधितुं हृदये सुप्तं सहायं रतिवल्लभम् ।
करस्पर्शं कुचे धत्ते चन्द्रश्चञ्चलचक्षुषाम् ॥

केषामपि.

१९६०

दूरमंशुप्रभाजालं प्रसारयति चन्द्रमाः ।
रात्रौ नववयाः कामी मनोरथमिवाधनः ॥

१९६१

शीतांशुकरसंस्पृष्टा निशासु कमलाकराः ।
संकुचन्त्यप्रियं दृष्ट्वा नयनानीव योषिताम् ॥

महामनुष्यस्य.

१९६२

उदयनगान्तरितमियं प्राची सूचयति दिङ्निशानाथम् ।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी ॥

श्रीहर्षदेवस्य.

१९६३
अङ्गुलीभिरिव केशसंचयं
संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं
चुम्बतीव रजनीमुखं शशी ॥

कालिदासस्य.

१९६४
निरर्थकं जन्म गतं नलिन्या
यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव
न येन दृष्टा नलिनी विबुद्धा ॥

विह्लणराजकन्ययोः.

१९६५
संविधातुमभिषेकमुदासे
मन्मथस्य लसदंशुजलौघः ।
यामिनीवनितया ततचिह्नः
सोत्पलो रजतकुम्भ इवेन्दुः ॥

भारवेः.

१९६६
एष तूङ्गमरवीचिडम्बरः
क्षोभमात्रमगमत्पयोनिधिः ।
विभ्रमैस्तदुदयक्रमोचितै-
रुल्ललास ललनासु मन्मथः ॥

भा० जयवर्धनस्य.

१९६७
प्रसन्नसंपादितचारुकान्ति-
र्जितोऽपि कान्तामुखशोभयायम् ।
धृष्टः शशाङ्कः पुनरभ्युदेति
लज्जा कुतोऽन्तर्मलिनाशयानाम् ॥

कस्यापि.

---

१९६८

शुद्धस्वभावान्यपि संहतानि
निनाय भेदं कुमुदानि चन्द्रः ।
अवाप्य वृद्धिं मलिनान्तरात्मा
जडो भवेत्कस्य गुणाय वक्रः ॥

१९६९

उपोढरागेण विलोलतारकं
तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया
पुरोऽपि रागाद्गलितं न लक्षितम् ॥

एतौ पाणिनेः.

१९७०

संप्राप्तुकामोदयमर्कभर्तु-
रम्भोजिनी भृङ्गकृताक्षमाला ।
साध्वी नवाम्भोजनिमीलिताक्षी
निमग्ननाला सलिलेऽतपस्यत् ॥

१९७१

उद्यञ्छशी तरुणभास्करकान्तिचौरः
स्पर्शेन शीतकरलालितया प्रदोषे ।
ज्ञातोर्धऽसुप्तनलिनीप्रियया सलज्जः
पाण्डुत्वमाप रभसादिव मन्मथार्तः ॥

एतौ प्रचण्डमाधवस्य.

१९७२

प्रथमं कलाभवदथार्धमथो
हिमदीधितिर्महदभूदुदितः ।
दधति ध्रुवं क्रमत एव न तु
द्युतिशालिनोऽपि सहसाभ्युदयम् ॥

१९७३

उदमाज्जि कैटभजितः शयना-
दपनिद्रपाण्डुरसरोजरुचा ।
प्रथमप्रबुद्धनगराजसुता-
वदनेन्दुनेव तुहिनद्युतिना ॥

१९७४

अथ लक्ष्मणानुगतकान्तवपु-
र्जलधिं व्यतीत्य शशिदाशरथिः ।
परिवारितः परित ऋक्षबलै-
स्तिमिरौघराक्षसकुलं बिभिदे ॥

१९७५

रजनीवशादुदयमाप शशी
सपदि व्यभूषयदसावपि ताम् ।
अविलम्बितक्रममहो महता-
मितरेतरोपकृतिमच्चरितम् ॥

१९७६

दिवसं भृशोष्णरुचिपादहतां
रुदतीमिवानवरतालिरुतैः ।
मुहुरामृशन्मृगधरोग्रकरै-
रुदशिश्वसत्कुमुदिनीवनिताम् ॥

एते माघस्य.

१९७७

धिक्तस्य मूर्खजरठस्य कवेः कवित्वं
यः स्त्रीमुखं च शशिनं च समीकरोति ।
भ्रूभङ्गविभ्रमकटाक्षनिरीक्षितानि
कोपप्रसादहसितानि कुतः शशाङ्के ॥

कस्यापि.

१९७८

यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा ।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥

१९७९

अमुष्मै चौराय प्रतिनियतमृत्युप्रतिभिये
प्रभुः प्रीतः पादादुपरि नवपादद्वयकृते ।
सुवर्णानां कोटीर्दश दशनकोटिक्षतगिरी-
न्करीन्द्रानप्यष्टौ मदमुदितगुञ्जन्मधुलिहः ॥

एतौ श्रीहर्षदेवचौरयोः.

१९८०

स्वैरं कैरवकोरकान्विदलयन्यूनां मनः खेलय-
न्नम्भोजानि निमीलयन्मृगदृशां मानं समुन्मूलयन् ।
कोकानाकुलयंस्तमः कवलयन्नम्भोधिमुद्वेलय-
ञ्ज्योत्स्नां कन्दलयन्दिशो धवलयन्निन्दुः समुज्जृम्भते ॥

१९८१

मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलो-
च्छलत्तरलतारकाप्रकरकीर्णमुक्तागणः ।
पुरंदरहरिद्दरीकुहरगर्भसुप्तोत्थित-
स्तुषारकरकेसरी गगनकाननं गाहते ॥

१९८२

अङ्कं केपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च संजगदिरे भूमेश्च बिम्बं परे ।
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तन्मन्ये रविभीतमन्धतमसं कुक्षिस्थमालक्ष्यते ॥

१९८३

ॐकारो मदनद्विजस्य गगनक्रोडस्य दंष्ट्राङ्कुर-
स्तारामौक्तिकशुक्तिरन्धतमसस्तम्बेरमस्याङ्कुशः ।
शृङ्गारार्गलकुञ्चिका विरहिणीप्राणच्छिदे कर्तरी
संध्यावारवधूनखक्षतिरसौ चान्द्री कला पातु वः ॥

१९८४

पश्य चन्द्रमुखि चन्द्रमण्डलं
व्योममार्गसरसीसरोरुहम् ।
यामिनीयुवतिकर्णकुण्डलं
मारमार्गणनिघर्षणोपलम् ॥

केषामपि.

१९८५

निर्मले सलिलकुण्डसुनीले
संचरन्सितरुचिः शनकैः खे ।
तत्र कालगणकेन नियुक्ता
रात्रिमानघटिकेव विभाति ॥

राजानकानन्दकस्य.

१९८६

आकाशवापीसितपुण्डरीकं
शाणोपलं मन्मथसायकानाम् ।
पश्योदितं शारदमुत्पलाक्षि
संध्याङ्गनाकन्दुकमिन्दुबिम्बम् ॥

१९८७

दृष्टे चन्द्रमसि प्रलूनतमसि व्योमाङ्गणस्थेयसि
स्फूर्जन्निर्मलतेजसि त्वयि गते दूरं निजप्रेयसि ।
श्वासः कैरवकोरकीयति मुखं तस्याः सरोजीयति
क्षीरोदीयति मन्मथो मृगदृशो दृक्चन्द्रकान्तीयति ॥

कयोरपि.

१९८८

एतत्प्रचण्डि समुदेत्यकलङ्कमूर्ति
कल्माषिताम्बरतलं ग्रहचक्रवालम् ।
सूर्येन्दुसंपुटसमुद्गकवाटकोष-
विश्लेषकीर्णनवरत्नकलापकान्ति ॥

१९८९

लावण्यकान्तिविसरामृतवाञ्छयेव
बिभ्रत्सुधानिकरनिर्भरतामपीन्दुः ।
छायाछलेन निपपात वधूकपोले
संतोषभाग्भवति को गुणवान्गुणेषु ॥

१९९०

कर्णेऽवतंसयितुमर्पयितुं शिखासु
मार्ष्टुं रतिश्रमजलं चषके निधातुम् ।
कण्ठे गुणं रचयितुं वलयान्विधातुं
स्त्रीणां मनोऽतिलुलुभे शशिनः करेषु ॥

भट्टहरिभूतर

१९९१

उत्कूजति भ्रमति रोदिति रारटीति
पद्मानि चोत्क्षिपति चञ्चुपुटेन दूरम् ।
तोये निमज्जति शशाङ्कमुदीक्षते च
कष्टं प्रियाविरहितो निशि चक्रवाकः ॥

१९९२

चिन्ताकुलः सहचरीविरहार्द्रशोकः
स्वच्छायया च दयितेतिकृतप्रलापः ॥
त्यक्तस्तयापि विरहाच्चपलोर्मिवेगा-
दालम्बनान्यपि विधिर्विधुरो निहन्ति ॥

कयोरपि.

१९९३

त्रिनयनजटावल्लीपुष्पं मनोभवकार्मुकं
प्रहकिसलयं संध्यानारीनितम्बनखक्षतम् ।
तिमिरभिदुरं व्योम्नः शृङ्गं निशावदनस्मितं
प्रतिपदि नवस्येन्दोर्बिम्बं सुखोदयमस्तु वः ॥

फल्गुहस्तिन्याः.

१९९४

कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥

भासस्य.

१९९५

छायामम्भसि विप्रयोगकृपणः स्वां मन्यमानः प्रियां
चक्राह्वो वदनाद्बिसाङ्कुरमभिप्रेर्याननेऽस्यास्ततः ।
दृष्ट्वाम्बुप्लुतमेतयेरितमिति प्रीतस्तमेवादश-
द्व्यामूढः परमार्थ एव सुतरां लोकः सुखी नेतरः ॥

प्रियमुख्यस्य.

१९९६

अत्यन्तोन्नतपूर्वपर्वतमहापीठे हरस्पर्धया
दूरोदञ्चितधूमसंनिभतमस्तारास्फुलिङ्गाकुलम् ।
नूनं पञ्चशरोऽकरोच्छशिमिषात्त्वं ज्वाललिङ्गं यतो
गर्वाच्छर्वपरान्दहेन्मुनिवरान्सर्वानखर्वांशुभिः ॥

शरीफस्य.

१९९७

इदं व्योमसरोमध्ये भाति चन्द्रसितोत्पलम् ।
मलिनोऽन्तर्गतो यत्र कलङ्को भ्रमरायते ॥

पं. श्रीवकस्य.

१९९८

ताराप्रसूननिचयेन निशा स्मरस्य
पूजां विधाय गगनाङ्गणपीठपृष्ठे ।
ज्योत्स्नाछलेन किरतीन्दुसमुद्गिकाया
निःशेषकामुकवशीकृतिचूर्णमुष्टीः ॥

१९९९

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।
परिप्रेङ्खत्तारापरिकरकपालाञ्चिततले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥

एते भर्तृसारस्वतस्य.

२०००

मन्येऽस्तं समये प्रविश्य सहसा वारां निधेरन्तरं
चन्द्रच्छद्मसमाश्रितः पुनरयं चण्डांशुरेवोद्गतः ।
येनौर्वानलसंगमाद्दशगुणीभूतप्रतापोद्गमो
मध्येऽङ्गारकलङ्कितो विरहिणां दग्धुं मनांस्युद्गतः ॥

२००१

सौधस्कन्धतलानि दीपपटलैः कम्पेन पाण्डुध्वजा
हंसाः पक्षविधूननेन मृदुना निद्रान्तनादेन च ।
लक्ष्यन्ते कुमुदानि षट्पदरुतैरुत्सर्पिगन्धेन च
क्षुभ्यत्क्षीरपयोधिपूरसदृशे जाते शशाङ्कोदये ॥

२००२

कैलासायितमद्रिभिर्विटपिभिः श्वेतातपत्रायितं
मृत्पङ्केन दधीयितं जलनिधेर्दुग्धायितं वारिभिः ।
मुक्ताहारलतायितं व्रततिभिः शङ्खायितं श्रीफलैः
श्वेतद्वीपजनायितं जनपदैर्जाते शशाङ्कोदये ॥

एतौ भट्टत्रिविक्रमस्य.

२००३

विश्लिष्टोऽन्विष्य सर्वाः कमलवनभुवश्चक्रवाको वराको
भ्रान्तो रक्तोत्पलिन्यां दवदहन इति त्यक्तदेहः पपात ।
यावत्तत्रैव शोकात्प्रथमनिपतितां प्रेक्षते चक्रवाकी-
मन्योन्यस्नेहवृद्धिं प्रकटयति विधिः प्रायशः पुण्यभाजाम् ॥

२००४

प्रथममरुणच्छायस्तावत्ततः कनकाकृतिः
प्रभवति ततो ध्वान्तक्षोदक्षमः क्षणदामुखे ।
तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥

कयोरपि.

२००५

लक्ष्मीक्रीडातडागो रतिधवलगृहं दर्पणो दिग्वधूनां
पुष्पं श्यामालताया स्त्रिभुवनविजये मन्मथस्यातपत्रम् ।
पिण्डीभूतं स्मरस्य स्मितममरसरित्पुण्डरीकं मृगाङ्को
ज्योत्स्नापीयूषवापी जयति सितवृषस्तारकागोकुलस्य ॥

कस्यापि.

२००६

अरोदि मधुपैर्भृशं कमलमालया मीलितं
व्यकम्पि जलवीचिभिर्विदलितं मुखं कैरवैः ।
विलोक्य रजनौ ह्रदे विरहिकोकशोकं घनं
परव्यसनकातराः किमिव कुर्वते साधवः ॥

पं० श्रीव्रकस्य.

---

## अथ पानकेलिः

२००७

बहुविकृतगाढरागं विलासवैदग्ध्यचेष्टिताचार्यः ।
जयति मधु प्रियवदने यौवनमिव जीवलोकेऽस्मिन् ॥

कस्यापि.

२००८

क्रान्तकान्तवदनप्रतिबिम्बे
भग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते
निर्ववार मधुनीन्द्रियवर्गः ॥

माघस्य.

२००९

मा गमन्मदविमूढधियो नः
प्रोज्झ्य रन्तुमिति शङ्कितनाथाः ।
योषितो न मदिरां भृशमीषुः
प्रेम पश्यति भयान्यपदेऽपि ॥

२०१०

अन्ययान्यवनितागतचित्तं
चित्तनाथमभिशङ्कितवत्या ।
पीतभूरिसुरयापि न मेदे
निर्वृतिर्हि मनसो मदहेतुः ॥

२०११

अप्रसन्नमपराद्धरि पत्यौ
कोपदीप्तमुररीकृतधैर्यम् ।
क्षालितं नु शमितं नु वधूनां
द्रावितं नु हृदयं मधुवारैः ॥

२०१२

प्राप्यते गुणवतापि गुणानां
व्यक्तमाश्रयवशेन विशेषः ।
तत्तथाहि दयिताननदत्तं
व्यानशे मधु रसातिशयेन ॥

२०१३

बिम्बितं भृतपरिस्रुति जान-
न्भाजने जलजमित्यबलायाः ।
घ्रातुमाक्षि मधुपः पतति स्म
भ्रान्तिभाजि भवति क विवेकः ॥

अस्यैव.

२०१४

सागसि प्रियतमे कृतकोपा
याङ्घ्रियुग्मपतितेऽपि न तुष्टा ।
सैव मद्यपरिलुप्तविवेका
तं तथैव परितोषयति स्म ॥

नग्नजितः.

२०१५

कामिनीवदननिर्जितकान्तिः
शोभितुं नहि शशाक शशाङ्कः ।
लज्जयेव विमलं वपुरासु
शीधुपूर्णचषकेषु ममज्ज ॥

भारवेः.

२०१६

मूर्तिमन्तमिव रागरसौघं
ते परस्परसमर्पितवक्त्राः ।
आननासवमिषेण तदानी-
मक्षिपन्त हृदयेषु युवानः ॥

२०१७

अर्धपीतमदिरा मणिपात्री
शोभतां कथमितीव तरुण्या ।
चुम्बितैरधिकपाटलभासा
पूरिताधरमयूखभरेण ॥

एतौ जयमाधवस्य.

२०१८

कान्ताननाधररसामृततृष्णयेव
बिम्बं पपात शशिनो मधुभाजने यत् ।
निःशेषिते मधुनि लज्जितचित्तवृत्ति
तत्तन्मुखावाजितकान्तितयेव नष्टम् ॥

विभाकरवर्मणः.

२०१९

मधुरद्विरेफरणिताभिमन्त्रितं
धृतमानखण्डननिरर्गलस्थिति ।
मदनस्य वारुणमिवास्त्रमाबभौ
हृदयं विशन्मधु विमुग्धचक्षुषाम् ॥

२०२०

संक्रान्तमाननमवेक्ष्य मृगायताक्ष्याः
पर्याचलन्नयनमासवपूरितायाम् ।
सेन्दीवरं कमलमित्यवमन्य दूरा-
द्भृङ्गो ममज्ज सहसैव यथार्थनामा ॥

प्रचण्डमाधवस्य.

२०२१

प्रत्यग्रदन्तपदलग्ननिशातमद्य-
संतापिताधरदला दयितस्य कान्ता ।
भ्रूक्षेपनेत्रवलनाकरकम्पमन्द-
सीत्कारविभ्रमसुखा सुतरां बभूव ॥

लाटकस्य.

२०२२

पीतस्तुषारकिरणो मधुनैव सार्ध-
मन्तः प्रविश्य चषकप्रतिबिम्बवर्ती ।
मानान्धकारमपि मानवतीजनस्य
नूनं बिभेद यदसौ प्रससाद सद्यः ॥

रत्नाकरस्य.

२०२३

नतशातकौम्भकलशीमुखाच्च्युतं
वलमानमग्रकरभाजि कुन्तले ।
सुतनोर्मुखामृतरुचेरुपेयुषो
व्यधित प्रदक्षिणमिवान्तिके मधु ॥

मङ्खकस्य.

---

## अथ परस्परचाटवः

तत्र

प्रियाविषये तावत्

२०२४

त्वां कृत्वोपरतो मन्ये रूपकर्ता स विश्वकृत् ।
नहि रूपोपमा त्वन्या तवास्ति शुभदर्शने ॥

भगवद्वाल्मीकिमुनेः

२०२५

मुग्धे धानुष्कता केयमपूर्वा तव दृश्यते ।
यया विध्यसि चेतांसि गुणैरेव न सायकैः ॥

२०२६

मुग्धे न पार्यसे दातुमदत्तं नोपतिष्ठति ।
अस्थास्नु यौवनमिदं कथमेतद्भविष्यति ॥

२०२७

प्रविशामि किमङ्गेषु भवतीं निगरामि किम् ।
चिरेण गतलब्धासि न जाने करवाणि किम् ॥

२०२८

उदयगिरिमूर्धगोऽयं त्वद्वदनापहृतकान्तिसर्वस्वः ।
फूत्कर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥

श्रीहर्षदेवस्य.

२०२९

अन्यतो नय मुहूर्तमाननं
चन्द्र एष सरले कलामयः ।
मा कदाचन कपोलयोर्मलं
संक्रमय्य समतां स नेष्यति ॥

मञ्जीरस्य.

२०३०

शिखरिणि क नु नाम कियच्चिरं
किमभिधानमसावकरोत्तपः ।
तरुणि येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः ॥

कस्यापि.

२०३१

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मि-
न्स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः ॥

जयवर्धनस्य.

२०३२

असुभिरशुभं त्यक्त्वा देहं निजं किल योगवि-
द्विशति विशदं ज्ञानालोकात्परस्य कलेवरम् ।
नयनविवरैः सूक्ष्मैः साक्षादहो तव नैपुणं
विशसि हृदयं द्रष्टुं स्पष्टं बहिश्च विचेष्टसे ॥

२०३३

विसृज दयिते हासज्योत्स्नां निमीलतु पङ्कजं
विकिर नयने भ्रष्टच्छायं भवत्वसितोत्पलम् ।
वद सुवदने लज्जामूका भवत्वपि कोकिला
परपरिभवो मानस्थाने न मानिनि सह्यते ॥

कयोरपि.

२०३४

खेदाय स्तनभार एष किमु ते मध्यस्य हारोऽपर-
स्ताम्यत्यूरुयुगं नितम्बभरतः काञ्च्यानया किं पुनः ।
शक्तिः पादयुगस्य नोरुयुगलं वोढुं कुतो नूपुरौ
स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय किं मण्डनम् ॥

२०३५

प्रसीद गतिरुज्झ्यतां व्रजतु राजहंसी सुखं
स्मितं च परिमुच्यतां स्फुरतु कुन्दपुष्पप्रभा ।
निमील्य विलोचने भवतु हारि कर्णोत्पलं
करस्थगितमाननं कुरु विभातु चन्द्रोदयः ॥

चन्द्रोदयस्य.

२०३६

माने मौनमयं त्रिपाण्डु विरहे रम्योक्ति नर्मण्यपि
कोपे सस्फुरिताधरं निधुवने तत्तद्विलासोद्भवम् ।
— — — — — — — — — — — — — —
तैस्तैः सुन्दरि चेष्टितैर्मुखमिदं कान्तिं न कां दास्यति ॥

भागवतवल्लटस्य.

२०३७

फुल्लेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्धयाधरे
पाण्योः पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः ।
लीयन्ते कबरीषु बान्धवजनप्रीतिप्रबद्धस्पृहा
दुर्वारा मधुपाः कियन्ति भवती स्थानानि रक्षिष्यति ॥

कस्यापि.

---

## अथ प्रियविषये

२०३८

न जाने संमुखायाते प्रियाणि वदति प्रिये ।
सर्वाण्यङ्गानि किं यान्तु नेत्रतामुत कर्णताम् ॥

कस्यापि.

२०३९

सत्यमाचक्ष्व किं नाथ तवैतद्भुवि चेष्टितम् ।
श्रुतः सुखकरो दृष्टो मनोमोहावहोऽसि यत् ॥

२०४०

शूरोऽसि नूनमुदितः पुरतो यदारा-
न्नारीजनस्य हृदयाम्बुरुहप्रबोधम् ।
धत्से निशाततरबाण उदग्रधन्वा
कामः पदातिरिति तावक एष हन्ति ॥

कय्यटस्य.

२०४१

खरघनमपि दृष्टं व्योम सोढाः समीराः
शिखिकुलकलवाचां श्रोत्रमासीन्निवासः ।
असुसम न मृताहं त्वद्वियोगेऽपि जाते
तव घनपरिरम्भप्रार्थनाशावशेन ॥

हरगणस्य.

---

## अथ सुरतारम्भः

२०४२

वल्लभागमनानन्दनिर्भरे हृदये सति ।
वद कुत्रावकाशोऽस्ति मानस्य मम सांप्रतम् ॥

२०४३

संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥

कयोरपि.

२०४४

अन्तःस्थसुरतारम्भाभिलाषमपि गोपयत् ।
अन्योन्यं मिथुनं वेत्ति नेत्रे दृष्ट्वैव चञ्चले ॥

कय्यटस्य.

२०४५

अनुदिनमभ्यासदृढैः सोढुं दीर्घोऽपि शक्यते विरहः ।
प्रत्यासन्नसमागममुहूर्तविघ्नोऽपि दुर्विषहः ॥

श्रीमयूरस्य.

२०४६

गुर्वन्तिके ह्रिया पूर्वं संज्ञयार्थावबोधनम् ।
करोति पत्युर्युवतिरथ शब्दानुशासनम् ॥

प० पाजकस्य.

२०४७

दूरादुत्कण्ठन्ते दयितजनसंनिधौ तु लज्जन्ते ।
त्रस्यन्ति कम्पमानाः शयनीये नवपरिणया वध्वः ॥

रुद्रटस्य.

२०४८

अक्षदेवनपणीकृतेऽधरे
कान्तयोर्जयपराजये सति ।
अत्र वक्तु यदि वेत्ति मन्मथः
कस्तयोर्जयति जीयतेऽथवा ॥

जयवर्धनस्य.

२०४९

प्रेयसि प्रणयलालनापरे
नीविबन्धमथ मोक्तुमिच्छति ।
निर्गते परिजने नतभ्रुवो
लज्जयेव निरगामि लज्जया ॥

वल्लटस्य.

२०५०

उत्पादयन्ती सुरतस्य विघ्नं
परस्परालापसुखं हरन्ती ।
संरागिणः कामिजनस्य गाढ-
मक्ष्णोर्ललम्बे सहसैव निद्रा ॥

२०५१

अनिरीक्षणमेव दृष्टिरार्द्रा
परिहासालपनानि मौनमेव ।
अवधीरणमेव चाभियोगो
विनिगूढोऽपि हि लक्ष्यतेऽनुरागः ॥

२०५२

अवचनं वचनं गुरुसंनिधा-
वनवलोकनमेव विलोकनम् ।
अवयवावरणं हि यदंशुक-
व्यतिकरेण तदङ्गसमर्पणम् ।

वामनस्वामिनः

२०५३

कंचित्क्षणं ननु सहस्व विमुञ्च वासो
जागर्त्ययं परिजनो धिगपत्रपोऽसि ।
एषोऽञ्जलिः शमय दीपमिति प्रियाया
वाचो रतादपि परां मुदमावहन्ति ॥

राजपुत्रपर्पटेः.

२०५४

उत्साहिता सकलशीधुमदेन वक्तु-
मर्धोदिते नववधूरवलम्बितह्रीः ।
आलीजनेष्वनुपसंहृतवाक्यशेषा
भर्तुश्चकार सविशेषकुतूहलित्वम् ।

रत्नाकरस्य.

२०५५

कलहकलया यत्संधृत्यै त्रपावनतानना
विहितपुलकोद्भेदं सुभ्रूश्चकर्ष न कञ्चुकम् ।
दयितमभितस्तामुत्कण्ठां विवव्रुरनन्तरं
झटिति सकलास्त्रुट्यत्प्रान्ताः स्तनांशुकसंधयः ॥

२०५६

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥

अमरुकस्य.

२०५७

स्मररसनदीपूरेणोढाः पुनर्गुरुसेतुभि-
र्यदभिविधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः ।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा
नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥

नरसिंहस्य.

२०५८

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषं न सान्द्रपयोधरा ।
वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां संकेतस्था तथापि हि कामिनी ॥

श्रीहर्षदेवस्य.

२०५९

मुहुरविशदा विस्रम्भार्द्रा मुहुः स्मृतमन्यवो
मुहुरसरलाः प्रेमप्रह्वा मुहुर्मुहुरस्थिराः ।
वितथशपथोपालम्भाङ्का मुहुर्मधुरा मुहुः
परिववृधिरे निष्पर्यन्ता मिथो मिथुनोक्तयः ॥

२०६०

प्रथमजनिते मन्यौ बाला विकारमजानती
कितवचरितेनारोप्याङ्कं विनम्रमुखैव सा ।
चिबुकमलकं चोन्नम्योच्चैरकृत्रिमविभ्रमा
नयनसलिलस्यन्दिन्योष्ठे रुदत्यपि चुम्बिता ॥

कयोरपि.

२०६१

हरति सुचिरं गाढाश्लेषे यदङ्कमाकुला
स्थगयति तथा यत्पाणिभ्यां मुखं परिचुम्बने ।
यदतिबहुशः पृष्टा किंचिद्वदत्यपरिस्फुटं
रमयतितरां तेनैवासौ मनोऽभिनवा वधूः ॥

रुद्रटस्य.

२०६२

समजनि न तत्प्रेम त्यक्तं यदीषदपीर्ष्यया
स्मरसुखसखी नासावीर्ष्या विना कलहेन या ।
न खलु कलहः सोऽन्योन्यं यः प्रसादनवर्जितः
प्रसदनविधिर्नासौ बाला न येन विलिल्यिरे ॥

शिवस्वामिनः.

२०६३

चिरविरहिणोरुत्कण्ठार्त्या श्लथीकृतगात्रयो-
र्नवमिव जगज्जातं भूयश्चिरादभिनन्दतोः ।
कथमपि दिने दीर्घे याते निशामधिरूढयोः
प्रसरति कथा यूनोर्बह्वी यथा न तथा रतिः ॥

कस्यापि.

२०६४

क्वचिदपरिस्फुटं क्वचिदलब्धविलासरसं
क्वचिदसमञ्जसोक्तिमधुरस्मितपल्लवितम् ।
रहसि मृगीदृशः सरसपेशलहावकथा-
ललितपदाक्षरं किमपि हारि समुल्लपितम् ॥

लुट्टकस्य.

२०६५

आनन्दोद्गतबाष्पपूरपिहितं चक्षुः क्षमं नेक्षितुं
बाहू सीदत एव कम्पविधुरौ शक्तौ न कण्ठग्रहे ।
वाणी साध्वसगद्गदाक्षरपदा संक्षोभलोलं मनो
यत्सत्यं प्रियसंगमोऽपि सुचिरादादौ वियोगायते ॥

श्रीडामरस्य.

२०६६

यत्नात्संगममिच्छतोः प्रतिदिनं दूतीकृताश्वासयो-
रन्योन्यं परिशुष्यतोर्नवरतप्राप्तिस्पृहां तन्वतोः ।
संकेतोन्मुखयोः कथं कथमपि प्राप्ते चिरात्संगमे
यत्सौख्यं नवरक्तयोस्तरुणयोस्तत्केन साम्यं व्रजेत् ॥

चूलितकस्य.

२०६७

लोलभ्रूलतया विपक्षदिगुपन्यासेवधूतं शिर-
स्तद्वृत्तान्तनिरीक्षणे कृतनमस्कारो विलक्षः स्थितः ।
कोपाताम्रकपोलकान्तिनि मुखे दृष्ट्या गतः पादयो-
रुत्सृष्टो गुरुसंनिधावपि विधिर्द्वाभ्यां न कालोचितः ॥

२०६८

अज्ञातागममीलिताक्षियुगलं किं त्वं मुधा तिष्ठसि
ज्ञातोऽसि प्रकटप्रकम्पपुलकैरङ्गैः स्फुटं मुग्धया ।
मुञ्चैनां जड किं न पश्यसि गलद्बाष्पाम्बुधौताननां
सख्यैवं गदिते विमुच्य रभसात्कण्ठेऽवलग्नो युवा ॥

कयोरपि.

२०६९

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलात् ।
तिर्यग्वर्तितकंधरः सपुलकः प्रेमोल्लसन्मानसः
सान्तर्हासलसत्कपोलफलको धूर्तोऽपरां चुम्बति ॥

अमरुकस्य.

२०७०

सा यावन्ति पदान्यलीकपिशुनैरालीजनैः शिक्षिता
तावन्त्येव कृतागसो द्रुततरं व्याहृत्य पत्युः पुरः ।
प्रारब्धा परतो यथा मनसिजस्येच्छा तथा वर्तितुं
प्रेम्णो मौग्ध्यविभूषणस्य सहजः कोऽप्येष रम्यः क्रमः ॥

२०७१

स्वेदाम्भःकणिकाचितेऽपि वदने जातेऽपि रोमोद्गमे
विस्रम्भेऽपि गुरौ पयोधरभरोत्कम्पे विवृद्धिं गते ।
दुर्वारस्मरनिर्भरेऽपि हृदये नैवाभियुक्तः प्रिय-
स्तन्वङ्ग्या हठकेशकर्षणघनाश्लेषामृते लुब्धया ॥

कयोरपि.

२०७२

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा वधूः ॥

श्रीहर्षदेवस्य.

२०७३

सा गोत्रस्खलनं निशम्य सहसा तत्पूर्वमुत्कम्पिनी
हे मातः कथितः प्रियाप्रियसखा प्रेमाशनिर्दारुणः ।
एतच्छाद्यमुत प्रकाश्यमपरेणाकर्णितं वा भवे-
दित्युद्दामविकल्पविघ्नितपतद्बाष्पोदकं रोदिति ॥

अर्भकस्य.

२०७४

धूर्तेन प्रथमं ह्रिया हृतमुखी बाला नवोढा पुरः
सख्याः सस्मितमुन्नमय्य वदनं कृच्छ्रात्क्षणं चुम्बिता ।
भूयस्तां रुषितामिव स्मरतृषा शुष्यन्मुखीं वक्त्यसौ
किं खिन्नास्यधरामृतं हृतमिति प्राणाधिके गृह्यताम् ॥

२०७५

आयाते दयिते मरुस्थलभुवामुद्वीक्ष्य दुर्लङ्घ्यतां
तन्वङ्ग्या परितोषबाष्पतरलामासज्य दृष्टिं मुखे ।
दत्त्वा पीलुशमीकरीरकवलं स्वेनाञ्चलेनादरा-
दुन्मृष्टं करभस्य केसरसटाभारावलग्नं रजः ॥

कयोरपि.

२०७६

आयाते दयिते मनोरथशतैर्नीते कथंचिद्दिने
वैदग्ध्यापगमाज्जडे परिजने दीर्घां कथां कुर्वति ।
दग्धास्मीत्यभिधाय सत्वरपदं व्याधूय चीनांशुकं
तन्वङ्ग्या रतिकालसेन मनसा नीतः प्रदीपः शमम् ॥

अद्भुतफुल्लस्य.

२०७७

आयातो दयितस्तवेति वचसा न श्रद्दधे भाषितं
चक्षुर्गोचरतां गतेऽपि सुमुखी भ्रान्तिं निजां मन्यते ।
कण्ठाश्लेषगतेऽपि शून्यहृदया स्वप्नान्तरं शङ्कते
वार्तां पृच्छति भर्तरि स्मितमुखी लज्जावती तुष्यति ॥

२०७८

सोत्कण्ठाकुलया दृशा समदनोज्जृम्भा विलासश्रिया
सव्रीडा वदनेन्दुना सपुलकोत्कम्पा स्तनाभ्यामसौ ।
साक्षेपा कृतकावलेपललितैर्लब्धे क्षणं वल्लभे
जाता प्रेममयीव संभृतरसस्पर्शानुबन्धे वधूः ॥

लुट्टकस्य.

२०७९

गच्छेत्युन्नतया भ्रुवैव गदितं मन्दं वलन्त्या तया
तेनाप्यञ्चितलोचनद्वयपुटेनाज्ञा गृहीता शनैः ।
संकेताय वलद्दृशा पिशुनिता ज्ञाता च दिक्प्रेयसा
गूढः संगमनिश्चयो गुरुपुरोऽप्येवं युवभ्यां कृतः ॥

अमरुकस्य.

२०८०

दूराज्जातविकल्पयोरभिमुखं विन्यस्यतोर्लोचने
लीलासत्वरवक्त्रयोश्च निकटे मन्दां गतिं कुर्वतोः ।
व्यावृत्तेक्षणवीक्षणालसपदं कृच्छ्रादतिक्रामतो-
रौत्सुक्यं नवरक्तयोर्द्विगुणयत्यायामिता वर्त्मनः ॥

शम्भुकस्य.

२०८१

काञ्च्या गाढतरावबद्धवसनप्रान्ता किमर्थं पुन-
र्मुग्धाक्षी स्वपितीति तत्परिजनं स्वैरं प्रिये पृच्छति ।
मातः स्वप्तुमपीह वारयति मामित्याहितक्रोधया
पर्यस्य स्वपनच्छलेन शयने दत्तोऽवकाशस्तया ॥

कस्यापि.

२०८२

गाढाश्लेषमपास्य केलिकलहे तिर्यक्स्थिता मानिनी
— — — — — — — — —
पश्चादुत्सुकया मनोरथविधिव्याजोल्लसच्चेतसा
रक्षन्त्या निजगौरवं चतुरया भूयः समालिङ्गितः ॥

भट्टवल्लट्टस्य.

२०८३

आगत्य प्रणिपातसान्त्वितसखीदत्तान्तरे सागसि
स्वैरं कुर्वति तल्पपार्श्वनिभृते धूर्तेऽङ्गसंवाहनम् ।
ज्ञात्वा स्पर्शवशात्तया किल सखीभ्रान्त्या स्वमङ्के शनैः
खिन्नासीत्यभिधाय मीलितदृशा सानन्दमारोपितः ॥

२०८४

चक्षुःप्रीत्या प्रसक्ते मनसि परिचये चिन्त्यमानाभ्युपाये
रागे याते गुरुत्वं प्रविकसति गिरां गोचरे दूतिकायाः ।
आस्तां दूरेण तावत्सरभसदयितालिङ्गनानन्दलाभ-
स्तद्गेहोपान्तरथ्याभ्रमणमपि परां निर्वृतिं संतनोति ॥

२०८५

पर्यावृत्तिश्लथाङ्गी प्रियशयनतटे मानिनी पृष्ठलग्ने
स्वैरं स्वैरं करेणानुसरति रमणे रोमवल्ल्यालवालम् ।
प्रेमस्वेदावगाढं विगलितरशना मन्युपूर्णा किलान्त-
र्दीर्घोच्छ्वासच्छलेन श्लथयति चतुरा बन्धमर्धोरुकस्य ॥

एते केषामपि.

---

## अथ सुरतकेलिः

२०८६

समादिष्टं शिष्टैरसममिह यन्निर्वृतिपदं
पुनर्दग्धोऽप्याशु प्रभवति यतो मन्मथतरुः ।
श्रुते यस्मिन्कामी भवति कृतकृत्यो रतिमुखे
स सीत्कारः पायादमृतविजयी सुन्दरदृशाम् ॥

सीत्काररत्नस्य.

२०८७

आस्तां दूरेण विश्लेषः प्रियामालिङ्गतो मम ।
स्वेदः किं न सरिन्नाथो रोमाञ्चः किं न पर्वतः ॥

२०८८

किं नु लीना विलीना नु सुप्ता किं नु मृता नु किम् ।
परिष्वक्तैव कुरुते सा मे शङ्काशतं प्रिया ॥

कस्यापि.

२०८९

इन्द्राय वीक्षमाणस्तन्मुखमास्वादयन्ननन्ताय ।
स्पृहयामि चाद्य दयितामालिङ्गन्कार्तवीर्याय ॥

कस्यापि.

२०९०

उन्नमय्य सकचग्रहमास्यं
चुम्बति प्रियतमे हठवृत्त्या ।
हुं ममेति वदनान्तरलीनं
जल्पितं जयति मानवतीनाम् ॥

विज्जाकायाः.

२०९१

वल्लभेन परिचुम्बिताधरा
खण्डिता यदि न खण्डिता ततः ।
श्लिष्यतापि कुचयोर्निरन्तरं
पीडिता यदि न पीडिता ततः ॥

कस्यापि.

२०९२
पाणिपल्लवविधूननमन्तः
सीत्कृतानि नयनार्धनिमेषाः ।
योषितां रहसि गद्गदवाचा-
मस्त्रतामुपययुर्मदनस्य ॥
मारवेः.

२०९३
पाणिपल्लवयुगेन मुग्धया
यन्मुख पिहितमंशुके हृते ।
वल्लभेन सुरतेन तद्धिया
शोकतां कथमियान्निशाकरः ॥
वल्लभदेवस्य.

२०९४
अम्बरं विनयतः प्रियपाणे-
र्योषितश्च करयोः कलहस्य ।
वारणामिव विधातुमभीक्ष्णं
कक्ष्यया च वलयैश्च शिशिञ्जे ॥
माघस्य.

२०९५
यद्दूरमुक्तविनयं यदनुष्ठितेच्छं
यन्निर्दयं यदसमाधि यदस्तलज्जम् ।
यद्रागनिघ्नहृदयं यदपोढधैर्यं
तत्तद्बभूव सुरतेषु गुणो न दोषः ॥
भट्टशरभूतस्य.

२०९६
स्वामिन्प्रभो प्रिय गृहाण परिष्वजस्व
किं किं शठेऽस्यकरुणः स्वसुखे स्थितोऽसि ।
हा दुःखयस्यलमलं विरमेति वाचः
स्त्रीणां भवन्ति सुरते प्रणयानुरूपाः ॥
भट्टकुमारस्य.

२०९७

दृशा सपदि मीलितं दशनरोचिषा निर्गतं
करेण परिवेषितं वलयकैरथाक्रन्दितम् ।
प्रियैः समदयोषितां ननु विखण्डयमानेऽधरे
परव्यसनकातराः किमिव कुर्वते साधवः ॥

कस्यापि.

२०९८

वदनशशिनः स्पर्शे शीतादिवागतवेपथुः
स्तनयुगलके भ्रान्त्वा तुङ्गे निलीन इव श्रमात् ।
ज्वलितमदनाङ्गारे तन्व्यास्तनो जघनस्थले
सपुलकजलः पत्युः पाणिर्विलीन इवाभवत् ॥

२०९९

किमु परिगता भर्त्रा तप्तद्विलोहवदेकता-
मुत रमयितुः स्यूताङ्गेऽङ्गं शितैः स्मरसायकैः ।
विलयनमथ प्राप्ता रागोष्मभिर्मुहुरित्यहो
पतति भुजयोरन्त — — — — न दीयते ॥

२१००

वदननिहिते ताम्बूलांशे श्रिते रतिबीजतां
कुवलयदृशः प्रत्याजज्ञे स रागतरुस्तदा ।
किसलयरुचो यस्य च्छायामुपाश्रितयोस्तयो-
र्विषमविषमः कार्त्स्न्येनास्तं गतो विरहक्लमः ॥

२१०१

व्यसनपचलं यत्राचार्यो व्रनं विषयार्द्रता
सुहृदविनयो दासः प्रेयान्प्रभुर्मकरध्वजः ।
गृहमशिथिलश्लेषा शय्या स्वरूपमभेदिता
रमणमिथुनान्यव्याद्धयेयां दशां त्रिजगाहिरे ॥

एते श्रीशिवस्वामिनः.

२१०२

रतिकृति गते मायानिद्रां प्रवर्तितचुम्बना
पुलकपयसा तत्त्वं मत्वा मुखादहृतानना ।
कृतकशयितो निग्राह्योऽसीत्युदीर्य कलं वधू-
र्व्रणितमधरं कृत्वा दन्तैरपूरयत स्पृहाम् ॥

२१०३

अनुनयगुरोर्गोष्ठीबन्धो मुखासवसंपदां
शपथविवरं विस्रब्धानां धियां प्रथमातिथिः ।
अविनयवचोवादस्थानं पुरन्ध्रिषु पप्रथे
मदविलसितस्यैकाचार्यश्चिर रतिविभ्रमः ॥

२१०४

पुरा निःस्पन्दानां तदनु लघुसंकोचनवतां
ततश्चादीर्घाणां क्षणमधिकतैक्ष्ण्यं गतवताम् ।
स्फुरन्नश्यत्तारं क्रमविषमलेखामुपगतं
मृगाक्षीणामक्ष्णां जयति सुरतारम्भलसितम् ॥

२१०५

करकिसलयं धुत्वा धुत्वा विमार्गति वाससी
क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति ।
स्थगयति मुहुः पत्युर्नेत्रे विहस्य समाकुला
सुरतविरतौ रम्या नारी पुनः पतिमाश्रिता ॥

एते केषामपि.

२१०६

सुरतविरतौ व्रीडावेशश्रमश्लथहस्तया
रहसि गलितं तन्व्या प्राप्तुं न पारितमंशुकम् ।
रतिरसजडैरङ्गैरङ्गं पिधातुमशक्तया
प्रियतमतनौ सर्वाङ्गीणं प्रविष्टमधृष्टया ॥

अमरुकस्य.

२१०७

नैषा वेगं मृदुतरतनुस्तावकीनं विसोढुं
शक्ता मैनां चपल सुभृशं खेदयेन्दीवराक्षीम् ।
रत्यभ्यासं विदधत इव प्राणनाथस्य गत्वा
कर्णोपान्ते निभृतनिभृतं नूपुरं शंसतीव ॥

मूर्खस्य.

२१०८

याते गोत्रविपर्यये श्रुतिपथं शय्यागतायाश्चिरं
निर्ध्यातं परिवर्तनं हृदि पुनः प्रारब्धमङ्गीकृतम् ।
भूयस्तत्प्रकृतं कृतं च वलितक्षिप्तैकदोर्लेखया
मानिन्या न तु पारितः स्तनभरो नेतुं प्रियस्योरसः ॥

अमरुकस्य.

२१०९

तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तस्याश्च तद्विस्मृतम् ॥

कस्यापि.

२११०

अद्य द्यूतजिताधरग्रहत्रिधावीशोऽसि तत्खण्डना-
दाधिक्ये वद को भवानिति मृषाकोपाञ्चितभ्रूलतम् ।
सद्यः स्विन्नकरात्तकुन्तलकरायत्तीकृतस्यास्य मे
मुग्धाक्षी प्रतिकृत्य तत्कृतवती द्यूतेपि यन्नार्जितम् ॥

गोपादित्यस्य.

२१११

दन्ताग्रग्रहणं करोति शनकैर्नैवाधरे खण्डनं
कण्ठे श्लिष्यति निर्भरग्रहविधिं कर्तुं पुनः शङ्कते ।
तिष्ठत्येव रतान्तरेष्वभिमुखी नैवाभियुङ्क्ते स्वयं
निष्प्रागल्भ्यतयैव वल्लभतरो यूनां नवोढाजनः ॥

श्रीडामरस्य.

२११२

एकस्मिञ्छयने पराङ्मुखतया वीतोत्तरं ताम्यतो-

रन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।

दम्पत्योः शनकैरपाङ्गवलनामिश्रीभवच्चक्षुषो-

र्भग्नो मानकलिः सहासरभसव्यावृत्तकौतूहलः ॥

२११३

शून्यं वासगृहं विलोक्य शयनादुत्थाय काचिच्छनै-

र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।

विश्रब्धं परिरभ्य जातपुलकामालोक्य गण्डस्थलीं

लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥

२११४

गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा

सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।

मा मा मानद मुञ्च मामलमिति क्षामाक्षरोल्लापिनी

सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥

२११५

अन्योन्यप्रकटानुरागरभसादुद्भूतरोमाञ्चयो-

रुत्कण्ठापरिखेददुःसहतया क्षामीभवद्गात्रयोः ।

नक्तं दैववशात्क्षणं गुरुजनात्स्वायत्ततां प्राप्तयो-

र्यातो दुर्लभसंगमोत्सवविधिर्यूनोर्जनाख्येयताम् ॥

२११६

निर्वृत्ते सुरतोत्सवे बहुविधे जातेऽधिकेऽङ्गक्लमे

तल्पे स्वेदजलार्द्रचन्दनमये किंचिद्गृहीतेऽम्बरे ।

सान्द्रस्नेहवशाद्विशेषविषयव्यासङ्गजिह्मात्मनो-

र्दम्पत्योः स्मरधस्मरातुरतया भूयोऽपि जाता स्पृहा ॥

एते केषांचित्.

२११७

पिधत्ते द्वाःपट्टैः सितकरमथोत्तंसकुसुमै-

र्निरस्तैर्दीपार्चिः शमयति च लज्जापरवशा ।

प्रियेण प्रत्यङ्गं प्रणिहितदृशा वाससि हृते
कथंकारं तारं परिहरति हारं नववधूः ॥

प० जगद्धरस्य.

२११८

कुचस्पर्शाद्धर्षं हरति तदिमं मुञ्च गलतो
वदत्येवं कान्ते रतिरसरते ह्रीनतमुखी ।
प्रियं द्रष्टुं सोत्का प्रतिमितमुखं नायकमणौ
कथं कारं तारं परिहरति हारं नववधूः ॥

प० श्रीचकस्य

---

## अथ विपरीतरतकेलिः

२११९

विपरीतरतायासजनिताः स्वेदबिन्दवः ।
पतन्तु तव गात्रेषु कामिनीवदनच्युताः ॥

कस्यापि.

२१२०

पततु तवोरसि सततं दयिताधम्मिल्लमल्लिकाप्रकरः ।
रतिरणरभसकचग्रहलुलितालकवल्लरीपतितः ॥

भट्टबाणस्य.

२१२१

रत्नोत्कटोतमाङ्गी श्यामाथ विकञ्चुका तरुणी ।
पततु तवोरसि दयिता क्षुरिका भुजगी च शत्रूणाम् ॥

नग्नाचार्यस्य.

२१२२

श्रूयते रशनारावो विरतो नूपुरध्वनिः ।
कस्यैषा कृतपुण्यस्य कामिनी पुरुषायते ॥

कस्यापि.

२१२३

वैपरीत्यमतिनिन्द्यमनिष्टं
यद्विशुद्धमतयः कथयन्ति ।

कामिनां निधुवनेषु तदेव
श्लाघ्यमित्यभिमतत्वमवाप ॥

सत्यदेवस्य.

२१२४

आहतं कुचतटेन तरुण्याः
साधु सोढममुनेति पपात ।
त्रुट्यतः प्रियतमोरसि हारा-
त्पुष्पवृष्टिरिव मौक्तिकवर्षः ॥

माघस्य.

२१२५

ऊरुमूलगतनेत्रयुगस्य
प्रेयसो रभसवेल्लितकेशी ।
चुम्बति स्म रतिकेलिविदग्धा
हावहारि वदनं दयितस्य ॥

जयमाधवस्य.

२१२६

नखदशननिपातजर्जराङ्गी
रतिकलहे परिपीडिता प्रहारैः ।
यदिह मरणमेव किं न याया-
द्यदि न पिबेदधरामृतं प्रियस्य ॥

क्षेमेन्द्रस्य.

२१२७

मुग्धे तवास्मि दयिता दयितो भव त्व-
मित्युक्तया नहि नहीति शिरो विधूय ।
स्वं स्वात्करान्मम करे वलयं क्षिपन्त्या
वाचं विनाभ्युपगमः कथितो मृगाक्ष्या ॥

२१२८

तन्नास्ति कारयति यन्न मनोभवस्य
सा शक्तिरप्रतिहता भुवने तथा हि ।

उद्धाव्य पीवरपयोधरमण्डलाग्रं
वल्गन्ति माधव उपर्यबला अपीह ॥

शशिवर्धनस्य.

२१२९

चिरारूढप्रेमप्रणयपरिहासेन हृतया
तदारब्धं तन्व्या न तु यदबलायाः समुचितम् ।
अनिर्व्यूढे तस्मिन्प्रकृतिसुकुमाराङ्गलतया
पुनर्लज्जालोलं मयि विनिहितं लोचनयुगम् ॥

२१३०

कथं न्वेषा तन्वी प्रकृतिसुकुमाराङ्गलतिका
प्रगल्भव्यापारं रतिकलहखेदं विषहते ।
नलिन्यास्तिग्मोऽपि प्रभवति सुखायैव सविता
प्रकृष्टे प्रेम्ण्येवं किमिव न सहन्ते युवतयः ॥

कस्यापि.

२१३१

क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।
बलीभङ्गाभोगेष्वलकपतिताकीर्णकुसुमः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥

२१३२

कार्या न प्रतिकूलता न च बहिर्गन्तव्यमस्माद्गृहा-
त्कोपश्च क्षणमात्रमाहितरुषा कार्यः प्रणामावधिः ।
इत्येवं प्रमदाव्रतं यदि भवान्गृह्णाति नात्यन्तिकं
तत्राहं दयितीभवामि शठ हे कोपानुबन्धेन किम् ॥

केषामपि.

२१३३

पश्याश्लेषविशीर्णचन्दनरजःपुञ्जप्रसङ्गादियं
शय्या संप्रति कोमलाङ्गि परुषेत्यारोप्य मां वक्षसि ।

गाढोष्ठग्रहपूर्वमाकुलतया पादाग्रसंदंशके-
नाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ॥

अमरुकस्य.

२१३४

शान्ते मन्मथसंगरे रणभुवां सत्कारमातन्वती
वासोदाज्जघनस्य पीनकुचयोर्हारं श्रुतौ कुण्डले ।
बिम्बोष्ठस्य च वीटिकां सुनयना पाण्यो रणत्कङ्कणे
पश्चाल्लम्बिनि केशपाशनिचये युक्तो हि बन्धः कृतः ॥

कस्यापि.

२१३५

उपरि निपतितानां स्रस्तधम्मिल्लकानां
मुकुलितनयनानां किंचिदुन्मीलितानाम् ।
सुरतसमरखेदस्विन्नगण्डस्थलाना-
मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥

कस्यापि.

२१३६

चलत्कुचं व्याकुलकेशपाशं
स्विद्यन्मुखं स्वीकृतमन्दहासम् ।
पुण्यातिरेकात्पुरुषा लभन्ते
पुंभावमम्भोरुहलोचनानाम् ॥

२१३७

आदौ मज्जनचीरहाररतिलकं नेत्राञ्जनं कुण्डले
नासामौक्तिककेशपाशरचना सत्कञ्चुकं नूपुरौ ।
सौगन्ध्यं करकङ्कणं चरणयो रागो रणन्मेखला
ताम्बूलं करदर्पण चतुरता शृङ्गारकाः षोडश ॥

२१३८

इक्षोर्विकारा मतयः कवीनां
गवां रसो बालकचेष्टितानि ।

ताम्बूलमग्र्यं युवतेः कटाक्षा
एतान्यहो शक्र न सन्ति नाके ॥
केषामपि.

---

## अथ सुरतनिवृत्तिः

२१३९

पीतौष्ठरागाणि हृताञ्जनानि
भास्वन्ति लोलैरलकैर्मुखानि ।
प्रातः कृतार्थानि यथा विरेजु-
स्तथा न पूर्वेद्युरलंकृतानि ॥
भर्तृस्वामिनः.

२१४०

मयाङ्कमानीय विमर्दविक्लवा
पटान्तलीलाव्यजनेन वीजिता ।
तयापि सानन्दजलार्द्रगण्डया
निरीक्ष्य तुष्टया पुनरस्मि चुम्बितः ॥

२१४१

सत्यं तथा न विदितः सुरतोपचारः
सज्जन्ति येन पुरुषा इह कामिनीनाम् ।
दत्तः करश्च दयितेन ममोपनाभि
सख्यै शपामि यदि किंचिदपि स्मरामि ॥

२१४२

धन्यासि या कथयसि प्रियसंगमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहितश्च करः प्रियेण
सख्यै शपामि यदि किंचिदपि स्मरामि ॥

२१४३

श्लिष्टः कण्ठे किमिति न मया मूढया प्राणनाथ-
श्चुम्बत्यस्मिन्वदनविकृतिः किं कृता किं न दृष्टः ।
नोक्तः कस्मादिति नववधूश्चेष्टितं चिन्तयन्ती
पश्चात्तापं वहति तरुणे प्रेम्णि जाता रसज्ञा ॥

२१४४

दूरारूढप्रणयमधुरप्रेमगर्भोक्तिभाजां
गाढाश्लेषव्यतिकरधृतैकात्म्यसंभावनानाम् ।
अव्युच्छिन्नाधरमधुरसासारके प्रार्थये त्वां
यूनां मा भूद्भगवति निशे संगमे ते प्रभातम् ॥

केषामपि.

२१४५

सख्यस्तानि वचांसि यानि बहुशोऽधीतानि युष्मन्मुखा-
द्वक्ष्येऽहं बहुशिक्षिता क्षणमिति ध्यात्वापि मौनं श्रिता ।
धूर्तेनैत्य च मण्डलीकृतकुचं गाढं परिष्वज्य मां
पीतान्येव सहाधरेण हसता वक्त्रस्थितान्येव मे ॥

अमरुकस्य.

२१४६

कान्ते सागसि शापितेऽपि हि सखीवेषं विधायागते
भ्रान्त्यालिङ्ग्य मया रहस्यमुदितं तत्संगमाकाङ्क्षया ।
मुग्धे दुष्करमेतदित्यतितरामुद्दामहासं बला-
दाकृष्य च्छलितास्मि तेन कितवेनेति प्रदोषागमे ॥

कस्यापि.

२१४७

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना-
द्वासः श्लथमेखलं करधृतं किंचिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं नु वा कथमिति स्वल्पापि मे न स्मृतिः ।

अमरुकस्य.

२१४८

तूष्णीमाःस्व हताशया सखि मया किं पृष्टया मा मुधा
मानं विस्मरणैकशीलहृदयां मां कारयेथाः पुनः ।
निर्लज्जेत्यपि नोदितोऽद्य स जनो यावत्समालिङ्गितः
पर्यालोचि न कीदृशी परिणतिः कोपस्य जाता मम ॥

२१४९

याता प्रातरयं चला च युवता मेघादयो दुःसहा
दृष्ट्वा प्रोषितभर्तृकामतितरां प्रोज्जृम्भते मन्मथः ।
सेवा हेतुरपि श्रियो न च तया हीनस्य किंचित्सुख-
मित्यालोच्य जहाति काचिदबला प्राणान्प्रियस्योरसि ॥

२१५०

कृत्वा विग्रहमश्रुपातकलुषं शय्यासनादुत्थिता
क्रोधाच्चापि विघट्य गर्भभवनद्वारं रुषा प्रस्थिता ।
दृष्ट्वा चन्द्रमसं प्रभाविरहितं प्रत्यूषवाताहता
हा रात्रिस्त्वरिता गतेति पतिता कान्ता प्रियस्योरसि ॥

एते केषामपि.

२१५१

जाने कोपतरङ्गिताङ्गलतिका तेनाहमालिङ्गिता
संस्पृष्टा कुचयोर्निरर्गलतया हारोऽपि पार्श्वे कृतः ।
एतावत्तु सखि स्मरामि यदतो वृत्तं परं तत्परं
धैर्यस्योद्दलनं शरीरशमनं ध्यात्वापि नो वेद्मि किम् ॥

२१५२

मूर्छाछादितमीक्षते न नयनं तापे तनुः पच्यते
कम्पः सूचयतीव जीवगमनं मोहे मनो मज्जति ।
प्राग्जन्मार्जितकर्मणा बलवता कालेन कामेन वा
को जानाति स केन मे धृतिहरः कण्ठे भुजंगोऽर्पितः ॥

एतौ क्षेमेन्द्रस्य.

---

२१५३

## अथ प्रभातवर्णनम्

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥

भगवद्वाल्मीकिमुने.

२१५४

निशाङ्गना पश्यतो मे कृता हृततमःपटा ।
पूष्णः करैरितीवेन्दुः प्रातर्विच्छायतामगात् ॥

पुण्यस्य.

२१५५

कुरुते यावदेवेन्दुर्दिनश्रीपरिचुम्बनम् ।
संप्राप्ते तत्पतौ तावत्पाण्डुच्छायस्तिरोदधे ॥

सुक्तिकोष्ठकस्य.

२१५६

व्योम्नः श्यामाविरहिणस्तारकाश्रुकणावली ।
बालमित्रकरोन्मृष्टा जगामादर्शनं शनैः ॥

क्षेमेन्द्रस्य.

२१५७

शिशिररुचिः सकलङ्को व्यर्थीभूतेषु पादपतनेषु ।
आलम्बतेऽम्बरान्ते यामिन्या यातुकामायाः ॥

२१५८

चन्दनं स्तनतटेऽधरबिम्बे
यावकं घनतरं च सपत्न्याः ।
प्रातरीक्ष्य कुपितापि मृगाक्षी
सागसि प्रियतमे परितुष्टा ॥

२१५९

इयं मयि प्रोषित एव संगता
हिमत्विषा भूक्तमण्डना सती ।

इतीर्ष्ययेव द्रुतमच्छिनद्रुषा
विचित्रताराभरणानि भास्करः ॥

केषामपि.

२१६०

विधाय संध्यां पुरतो विवस्वतः
सखीमिवेन्दूपपतिं मलीमसम् ।
द्रुतं नयन्त्या इव रात्रियोषितो
ररास रम्यं कलहंसनूपुरः ॥

हरिभट्टस्य.

२१६१

अभिनवं गलितांशुकदर्शितं
दधति यत्स्तनयोरुपरि स्थितम् ।
वसनमण्डलमण्डनमङ्गना-
स्तदधिकं प्रतिरक्षमनोज्वरम् ॥

भट्टकुमारस्य.

२१६२

किमपि कान्तभुजान्तरवर्तिनी
कृतवती यदियं कलभाषिणी ।
तदनुकृत्य गिरा गुरुसंनिधौ
ह्रियमनीयत शारिकया वधूः ॥

कस्यापि.

२१६३

उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ।

घण्टामाघस्य.

२१६४

प्रभातवाताहतिकम्पिताकृतिः
कुमुद्वतीरेणुपिशङ्गविग्रहम् ।

निरास भृङ्गं कुपितेव पद्मिनी
न मानिनी संसहतेऽन्यसंगमम् ॥

भट्टेः.

२१६५

किं भूषणेन रचितेन हिरण्मयेन
किं रोचनादिरचितेन विशेषकेण ।
आर्द्राणि कुङ्कुमरुचीनि विलासिनीना-
मङ्गेषु किं नखपदानि न मण्डनानि ॥

भट्टकुमारस्य.

२१६६

एतन्नरेन्द्रवृषभ क्षपया व्रजन्त्या
संरोपणार्थमिव गोपितमम्बुजेषु ।
उद्धाटयत्ययमशीतकरः करौघैः
पद्माकरात्तिमिरबीजमिवालिवृन्दम् ॥

जेन्दुकस्य

२१६७

स्तनपरिसरभागे दूरमावर्तमानाः
स्फुटतनिमनि मध्ये किंचिदेव स्खलन्तः ।
ववुरलघुनितम्बाभोगरुद्धा वधूनां
निधुवनरसखेदच्छेदिनः प्राह्णवाताः ॥

२१६८

दिशि दिशि मृगयन्ते वल्गुना वासमेते
मुहुरपगतनिद्राः सप्तयो हेषितेन ।
अयमपि च सरोषैः कामिभिः श्रूयमाणो
नदति मधुरतारं ताम्रचूडो विहंगः ॥

कयोरपि.

२१६९

जाताः पक्कपलाण्डुपाण्डुरमुखच्छायाकिरस्तारकाः
प्राचीमङ्कुरयन्ति किंचन रुचो राजीवजीवातवः ।

लूतातन्तुवितानवर्तुलमिदं बिम्बं दधच्चुम्बति
प्रातः प्रोषितरोचिरम्बरतलादस्ताचलं चन्द्रमाः ॥

मुरारेः.

२१७०

सपदि कुमुदिनीभिर्मीलितं हा क्षपापि
क्षयमगमदपेतास्तारकास्ताः समस्ताः ।
इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दु-
र्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥

२१७१

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि मुहुरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्प-
न्वद परिमलगन्धः केन शक्यो वरीतुम् ॥

२१७२

बहु जगद पुरस्तात्तस्य मत्ता किलाहं
चकर च किल चाटु प्रौढयोषिद्वदस्य ।
विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य
व्यपगतमदयाह्नि व्रीडितं मुग्धवध्वा ॥

२१७३

अविरतमभिरामा रागिणोः सर्वरात्रं
नवनिधुवनलीलाः कौतुकेनाभिवीक्ष्य ।
इदमुदवसितानामस्फुटालोकसंप-
न्नयनमिव सनिद्रं घूर्णते दैपमर्चिः ॥

२१७४

द्रुततरकरदक्षाः क्षिप्तवैशाखशैले
दधति दधनि धीरानारवान्वारिणीव ।
शशिनमिव सुरौघाः सारमुद्धर्तुमेते
कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति ॥

२१७५

अनुनयमगृहीत्वा व्याजसुप्ता पराची
रुतमथ कृकवाकोस्तारमाकर्ण्य काले ।
कथमपि परिवृत्ता निद्रयान्धा किल स्त्री
मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥

२१७६

परिशिथिलितकर्णग्रीवमामीलिताक्षः
क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव ।
रिरसयिषति भूयः शष्पमग्रे विकीर्णं
पटुतरचपलौष्ठप्रस्फुरत्प्रोथमश्वः ॥

२१७७

उदयमुदितदीप्तिर्याति यः संगतौ मे
पतति न वरमिन्दुः सोऽपरामेष गत्वा ।
स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति
स्फुरति रुचिरमेषा पूर्वकाष्ठाङ्गनायाः ॥

२१७८

दधदसकलमेकं खण्डितामानमद्भिः
श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः ।
कलरवगुपगीते षट्पदौघेन धत्तः
कुमुदकमलखण्डे तुल्यरूपामवस्थाम् ॥

२१७९

विकचकमलगन्धैरन्धयन्भृङ्गमालाः
सुरभितमकरन्दं मन्दमावाति वायुः ।
समदमदनमाद्यद्यौवनोद्दामरामा-
रमणरभसखेदस्वेदविच्छेददक्षः ॥

२१८०

नवकुमुदवनश्रीहासकेलिप्रसङ्गा-
दधिकरुचिरशेषामप्युषां जागरित्वा ।

अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः
शिशयिषुरिव पाण्डुम्लानमात्मानमिन्दुः ॥

२१८१

विगततिमिरपङ्कं पश्यति व्योम याव-
द्धुवति विरहखिन्नः पक्षती यावदेव ।
रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना
सरिदपरतटान्तादागता चक्रवाकी ॥

२१८२

तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥

२१८३

कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ
परिशिथिलितगात्रे गन्तुमापृच्छमाने ।
विगलितनवमुक्तास्थूलबाष्पाम्बुबिन्दु
स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥

२१८४

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-
र्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ॥

२१८५

विततपृथुवरत्रातुल्यरूपैर्मयूखैः
कलश इव महीयान्दिग्भिराकृष्यमाणः ।
कृतकलकलविङ्कालापकोलाहलाभि-
र्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥

२१८६

क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः
प्रणतिपरमवेक्ष्य प्रीतमह्नाय लोकम् ।
भुवनतलमशेषं प्रत्यवेक्षिष्यमाणः
क्षितिधरतटपीठादुत्थितः सप्तसप्तिः ॥

२१८७

उदयशिखरिशृङ्गप्राङ्गणेष्वेव रिङ्ख-
न्सकमलमुखहासं वीक्षितः पद्मिनीभिः ।
विततमृदुकराग्रः शब्दयन्त्या वयोभिः
परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥

२१८८

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयति दिननाथो याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥

२१८९

क्षणमतुहिनधाम्नि प्रोष्य भूयः पुरस्ता-
दुपगतवति पाणिग्राहवद्दिग्वधूनाम् ।
द्रुततरमुपयातः स्रंसमानांशुकोऽसा-
वुपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः ॥

२१९०

प्रलयमखिलतारालोकमह्नाय नीत्वा
श्रियमनतिशयश्रीः सानुरागां दधानः ।
गगनसलिलराशिं रात्रिकल्पावसाने
मधुरिपुरिव भास्वानेष एकोऽधिशेते ॥

एते माघस्य.

२१९१

निर्यान्त्या रतिवेश्मनः परिणतप्रायां विलोक्य क्षपां
गाढालिङ्गनचुम्बनानि बहुशः कृत्वाप्यसंतुष्टया ।

एकं भूमितले निधाय चरणं तल्पेऽर्पयन्त्यापरं
तन्वङ्ग्या परिवर्तिताङ्गलतया प्रेयांश्चिरं चुम्बितः ॥

कस्यापि.

२१९२

वरुणगृहिणीमाशामासादयन्तममुं रुची-
निचयसिचयांशांशभ्रंशक्रमेण निरंशुकम् ।
तुहिनमहसं पश्यन्तीव प्रसादमिषादसौ
निजमुखमतः स्मेरं धत्ते हरेर्महिषी हरित् ॥

२१९३

रजनिवमथुप्रालेयाम्भःकणक्रमसंभृतैः
कुशकिसलयस्याच्छैरग्रेसरैरुदबिन्दुभिः ।
सुषिरकुशलेनायःसूचीशिखाङ्कुरसंकरं
किमपि गमितान्यन्तर्मुक्ताफलान्यवमेनिरे ॥

२१९४

रविरुचिरुचामोंकारेषु स्फुटामलबिन्दुतां
गमयितुममूरुच्चीयन्ते विहायसि तारकाः ।
स्वरविरचनायासामुच्चैरुदात्ततया हृताः
शिशिरमहसो बिम्बादस्मादसंशयमंशवः ॥

२१९५

व्रजति कुमुदे दृष्ट्वा मोहं दृशोरपिधायके
भवति च नले दूरं तारापतौ च हतौजसि ।
लघु रघुपतेर्जायां मायामयीमिव रावणि-
स्तिमिरचिकुरग्राहं रात्रिं हिनस्ति गभस्तिराट् ॥

२१९६

त्रिदशमिथुनक्रीडातल्पे विहायसि गाहते
निधुवनधुतस्रग्भागश्रीभरं ग्रहसंग्रहः ।
मृदुतरकराकारैस्तूलोत्करैरुदरंभरिः
परिहरति नाखण्डो गण्डोपधानविधां विधुः ॥

२१९७

दशशतचतुर्वेदीशाखाविवर्तनमूर्तयः
सविधमधुनालंकुर्वन्ति ध्रुवं रविरश्मयः ।
वदनकुहरेष्वध्येतॄणामयं यदुदञ्चति
श्रुतिपदमयस्तेषामेव प्रतिध्वनिरध्वनि ॥

२१९८

नभसि महसां ध्वान्तध्वाङ्क्षप्रमापणपत्रिणा-
मिह विहरणैः श्येनंपातां रवेरवधारयन् ।
शशविशसनत्रासादाशामयाच्चरमां शशी
तदधिगमनात्तारापारावतैरुदडीयत ॥

२१९९

प्रथममुपहृत्यार्घ्यं तारैरखण्डिततण्डुलै-
स्तिमिरपरिषद्दूर्वापर्वावलीशबलीकृतैः ।
अथ रविरुचां प्रासातिथ्यं नभः स्वविहारिभिः
सृजति शिशिरक्षोदश्रेणीमयैरुदसक्तुभिः ॥

२२००

असुरहितमप्यादित्योत्थां विपत्तिमुपागतं
दितिसुतगुरुः प्राणैर्योक्तुं न किं कचमत्तमः ।
पठति लुठतीं कण्ठे विद्यामयं मृतजीविनीं
यदि न भजते संध्यामौनव्रतव्ययभीरुताम् ॥

२२०१

तटतरुखगश्रेणीसांराविणैरिव सांप्रतं
सरसि विगलन्निद्रामुद्राजनिष्ट सरोजिनी ।
अधरसुधया मध्ये मध्ये वधूमुखलब्धया
धयति मधुपः स्वादुंकारं मधूनि सरोरुहाम् ॥

२२०२

तिमिरविरहात्पाण्डूयन्ते दिशः कृशतारकाः
कमलहसितैः श्येनीवोन्नीयते सरसी न का ।

शरणमिलितध्वान्तध्वंसिप्रभादरधारणा-
द्गगनशिखरं नीलत्येकं निजैरयशोभरैः ॥

२२०३

जगति मिथुने चक्रावेव स्मरागमपारगौ
नवमिव मिथः संभुञ्जाते वियुज्य वियुज्य यौ ।
सततममृतादेवाहाराद्यदापदरोचकं
तदमृतभुजां भर्ता शंभुर्विषं बुभुजे विभुः ॥

२२०४

स्वमुकुलमयैर्नेत्रैरन्धंभविष्णुतया जनः
किमु कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षिकाम् ।
लिखितपठिता राज्ञो दाराः कविप्रतिभासु ये
शृणुत शृणुतासूर्यंपश्या न सा किल भाविनी ॥

२२०५

घुसृणसुमनःश्रेणीश्रीणामनादरिभिः सरः-
परिसरचरैर्भासां भर्तुः कुमारतरैः करैः ।
अजनि जलजामोदानन्दोत्पतिष्णुमधुव्रता-
वलिशबलनाद्गुञ्जापुञ्जश्रियं गृहयालुभिः ॥

२२०६

दहनमविशद्दीप्तिर्यास्तं गते गतवासर-
प्रशमसमयप्राप्ते पत्यौ विवस्वति रागिणी ।
अधरभुवनात्सोद्धृत्यैषा हठात्तरणेः कृता-
मरपतिपुरप्राप्तिर्धत्ते सतीव्रतमूर्तिताम् ॥

२२०७

बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः
पितृशितिहरिद्वर्णाद्याहारजः किल कालिमा ।
शमनयमुनाक्रोडैः कालैरितस्तमसः पिबा-
दपि यदमलच्छायात्कायादभूयत भास्वतः ॥

२२०८

जलजभिदुरीभावं प्रेप्सुः करेण निपीडय-
त्यशिशिरकरस्ताराशङ्खप्रपञ्चविलोपकृत् ।
रजनिरमणस्यास्तक्षौणीधरार्धपिधावशा-
द्दधतमधुना बिम्बं कम्बुच्छिदाकरपत्त्रताम् ॥

२२०९

दिनमिव दिवाकीर्तिस्तीक्ष्णैः क्षुरैः सवितुः करै-
स्तिमिरकबरीलूनां कृत्वा निशां निरदीधरत् ।
स्फुरति परितः केशस्तोमैस्ततः पतयालुभि-
र्ध्रुवमधवलं तत्तच्छायच्छलादवनीतलम् ॥

२२१०

उडुपरिवृढः पत्या मुक्तां पुरा यदपीडय-
द्यदपि बिसिनीं भानोर्जायां जहास कुमुद्वती ।
तदुभयमतः शङ्के संकोचितं निजशङ्कया
प्रसरति रवौ कोपाटोपादिवारुणरोचिषि ॥

२२११

यत्पाथोजविमुद्रणप्रकरणे निर्निद्रयत्यंशुमा-
न्दृष्टीः पूरयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः ।
साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं
यन्मूलाद्रियतेतरां कवितृभिः पद्मोपमा चक्षुषः ॥

एते श्रीनैषधकर्तुः

२२१२

यद्रात्रौ रहसि व्यपेतविनयं वृत्तं रसात्कामिनो-
रन्योन्यं शयनीयमीहितरसावाप्तिप्रवृत्तस्पृहम् ।
तत्सानन्दामिलद्दृशोः कथमपि स्मृत्वा गुरूणां पुरो
हासोद्भेदनिरोधमन्थरमिलत्तारं कथंचित्स्थितम् ॥

अमरुकस्य.

२२१३

रात्रावद्य ममानया निधुवनक्लान्तस्य साहायकं
साधीयो विहितं रसादिति पुरः सख्याः प्रिये जल्पति ।
किंचित्कोपमुपप्रदर्श्य हसितं तन्व्या त्रपामन्थरं
हेलोल्लासितचञ्चुचञ्चलशिखारुद्धोन्नमद्वक्त्रया ॥

मल्लकस्य.

२२१४

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्यातिमात्रं वधूः ।
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्च्वाः पुटे
व्रीडार्ता प्रकरोति दाडिमफलव्याजेन वाग्बन्धनम् ॥

कस्यापि.

२२१५

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागः परः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥

दाक्षिणात्यस्य कस्यापि.

२२१६

ज्वालौपम्यस्पृशि यदुषसि द्राव्यमाणैरशेषै-
स्तारापुष्पैर्विरचितमदो मण्डलं चण्डरश्मेः ।
शोणीभावं शमयितुमहो रात्रिसंदंशमध्ये
तत्कालाख्यः कलयति शनैरुन्नयँल्लोहकारः ॥

भर्तृसारस्वतस्य.

२२१७

विरलविरलीभूतास्ताराः कलाविव सज्जना
मन इव मुनेः सर्वत्रैव प्रसन्नमभून्नभः ।
व्यपसरति च ध्वान्तं चित्तात्सतामिव दुर्जनो
विगलति निशा क्षिप्रं लक्ष्मीर्निरुद्यमिनामिव ॥

२२१८

अभूत्प्राची पिङ्गा रसपतिरिव प्राश्य कनकं
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि ।
क्षणात्क्षीणास्तारा नृपतय इवानुद्यमपरा
न दीपा राजन्ते द्रविणरहितानामिव गुणाः ॥

२२१९

प्राची माणिक्यशोणा कमलपरिषदामोचि संकोचमुद्रा
निद्रालुः कैरवाली सरसि सरसिका सारसी कूजतीति ।
इत्थं जातप्रबोधे वदति परिजने किंचिदुन्मीलिताक्षी
भीरुर्भीरुर्वियोगात्पुनरपि सहसालिङ्गति प्राणनाथम् ॥

एते केषामपि.

२२२०

पुरुहूतदिगङ्गना प्रसूते
रविमुद्दामसुतं चिरादिवेति ।
अलिनो नलिनोदराद्विमुक्ताः
प्रियबाहुद्वयबन्धनान्नवोढाः ॥

२२२१

निनाय यद्विरहविजृम्भणाकुलो
विभावरीं कथमपि साभ्युपागता ।
विलोकिता दयिततमा तथामुदं
तनोति नो रजनिवियोगिपत्त्रिणः ॥

२२२२

यथा शशी विपतिषुरस्तपर्वते
नवांशुमत्किरणविरुग्णचन्द्रिकः ।
करोत्यहो अपि निजसंपदः स्फुटं
द्विषद्गता विपदधिकं सुखोदयम् ॥

२२२३

भिन्दानः सुन्दरीणां पतिषु रुषमयं हर्म्यपारावतेभ्यो
वाचालत्वं ददानः कवितृषु च गुणं प्रातिभं संदधानः ।

प्रातस्त्यस्तूर्यनादः स्थगयति गगनं मांसलः पांसुतल्पा-
दस्वल्पादुत्थितानां नरवरकरिणां शृङ्खलाशिञ्जितेन ॥

राजशेखरस्य.

## अथ संकीर्णम्

२२२४

यो न दीर्घासितापाङ्गविलासविनतभ्रुवः
प्रियामुखस्य वशगस्तस्मै नृपशवे नमः ॥

२२२५

तन्वीकटाक्षदग्धस्य वद वैद्य किमौषधम् ।
पथ्यमालिङ्गनं तस्याः सकचग्रहचुम्बनम् ॥

२२२६

कुप्यत्यकस्मात्कुपितापि रम्या
स्वयं प्रसादं समुपैति यस्मात् ।
स्वयं प्रसन्नेति बिभर्ति लज्जा-
मक्षुण्णकप्रेक्षणकं प्रियायाः ॥

केषांचित्.

२२२७

भ्रूचातुर्यं कुञ्चितान्ताः कटाक्षाः
स्निग्धा हावा लज्जितान्ताश्च हासाः ।
लीलामन्दं प्रस्थितं च स्थितं च
स्त्रीणामेतद्भूषणं चायुधं च ॥

कविपुत्रयोः.

२२२८

मालती शिरसि जृम्भणोन्मुखी
चन्दनं वपुषि कुङ्कुमाविलम् ।
वक्षसि प्रियतमा मदालसा
स्वर्ग एष परिशिष्ट आगतः ॥

२२२९

मात्सर्यमुत्सार्य विचार्य कार्य-
मार्याः समर्यादमिदं वदन्तु ।
सेव्या नितम्बाः किमु भूधराणा-
मुत स्मरस्मेरविलोचनानाम् ॥

२२३०

अधीतविद्यैर्विगते शिशुत्वे
धनेऽर्जिते हारिणि यौवने च ।
सेव्या नितम्बास्तु विलासिनीनां
ततस्तदर्थं धरणीधराणाम् ॥

२२३१

सत्यं जना वच्मि न पक्षपाता-
ल्लोकेषु सप्तस्वपि तथ्यमेतत् ।
नान्यन्मनोहारि नितम्बिनीभ्यो
दुःखैकहेतुर्न च कश्चिदन्यः ॥

२२३२

यदा प्रकृत्यैव जनस्य रागिणो
ज्वलेत्प्रदीप्तो हृदि मन्मथानलः ।
तदात्र भूयः किमनर्थपण्डितैः
कुकाव्यगव्याहुतयोऽपि पातिताः ॥

केषामपि॰

२२३३

मधु च विकसितोत्पलावतंसं
शशिकरपल्लवितं च हर्म्यपृष्ठम् ।
मदनजनितविभ्रमा च रामा
फलमिदमर्थवतां विभूतयोऽन्याः ॥

मेण्ठस्य॰

२२३४

एकाकिनी यदबला तरुणी तथाह-
मस्मद्गृहे गृहपतिश्च गतो विदेशम् ।
कं याचसे तदिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥

रुद्रटस्य.

२२३५

लज्जाभरावनतमन्थरदृष्टिपातं
येषां स्थितं कुलवधूवदनारविन्दम् ।
तेषामनेकपुरुषव्रणिताधरेषु
सक्तिः कथं भवति वारवधूमुखेषु ॥

२२३६

स्मितं किंचिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतानामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः ॥

२२३७

सव्रीडार्धनिरीक्षणं यदुभयोर्यद्दूतिसंप्रेषण-
मद्य श्वो भविता समागम इति प्रीतिः प्रसादश्च यः ।
संप्राप्तेऽपि समागमे सरभसं यच्चुम्बनालिङ्गनं
तत्कामस्य फलं तदेव सुरतं शिष्टं पशूनामपि ॥

२२३८

कन्या कौतुकमात्रकेण विधवा संमर्दमात्रार्थिनी
वेश्या वित्तलवेच्छया स्वगृहिणी गत्यन्तरासंभवात् ।
वाञ्छन्तीत्थमनेककारणवशात्पुंभिः स्त्रियः संगमं
शुद्धस्नेहनिबन्धना परवधूः पुण्यैः परैः प्राप्यते ॥

२२३९

एकान्ते वनतो गृहं शशिमुखोऽप्यन्यादृशो दृश्यते
क्षिप्रं साधय यातु पुत्रि सुदिने भुक्त्वान्यमावासकम् ।

श्वश्र्वा संभ्रमिता किलेति बहुशः संप्रेरयन्त्या वधूः
पान्थं वीक्ष्य बभञ्ज सस्मितमुखी सैवार्धसिद्धौदनम् ॥

२२४०

क्वाम्भोदः क्व कचत्कलापविलसत्पक्षातपत्रः शिखी
क्वेन्दोर्मण्डलमंशुजालविमलं वीचिः क्व वाम्भोनिधेः ।
क्वोद्यन्बालदिवाकरः क्व कमलं मत्तालिमालाकुलं
यो येनाभिमतः स तेन कुरुते दूरेऽपि चेतःसुखम् ॥

केषामपि.

२२४१

आश्लिष्टा रभसाद्विलीयत इवाक्रान्ताप्यनङ्गेन या
यस्याः कृत्रिमचण्डवस्तुकरणाकूतेषु खिन्नं मनः ।
कोऽयं काहमिति प्रवृत्तसुरता जानाति या नान्तरं
रन्तुः सा रमणी स एव रमणः शेषौ तु जायापती ॥

अमरुकस्य.

२२४२

प्राङ्मा मेति मनागनागतगुणं जाताभिलाषं ततः
सव्रीडं तदनु श्लथोद्यममनु प्रत्यस्तधैर्यं पुनः ।
प्रेमार्द्रस्पृहणीयनिर्भररहःक्रीडाप्रगल्भं ततो
निःसङ्गाङ्गविघर्षणाधिकसुखं रम्यं कुलस्त्रीरतम् ॥

२२४३

सद्यः पक्वघृतं पयः सतुहिनं श्यामा नवं राङ्कवं
रक्तं कुङ्कुममारुकाणि तुरसी द्राक्षा कपित्थं मधु ।
कीरी कैरवगर्भकोमलतनुर्नैतानि सेवेत यः
कश्मीरेषु जनस्य तस्य वसतो मन्ये मुखेऽवग्रहः ॥

२२४४

गङ्गाधौतशिलातले हरवृषस्कन्धावरुग्णद्रुमे
सिद्धाध्यासितकंदरे हिमवति स्थाने स्थिते स्थेयसि ।
कः कुर्वीत परप्रणाममलिनं मान्यो मनस्वी जनो
यद्युत्त्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥

२२४५

संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवाकलङ्क-
व्यासङ्गव्यस्तधैर्यं कथममलधियो मानसं संविदध्युः ।
यद्येताः प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः
प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभागास्तरुण्यः ॥

केषामपि ·

२२४६

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥

धर्मकीर्तेः ·

२२४७

अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथाहम् ।
अस्मिन्पापा निकेते कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥

रुद्रटस्य·

२२४८

यत्नात्संगममिच्छतोः प्रतिदिनं दूतीकृताश्वासयो-
रन्योन्यं परिशुष्यतोर्निरन्तरप्राप्तिस्पृहां तन्वतोः ।
संकेतोन्मुखयोः कथं कथमपि प्राप्ते चिरात्संगमे
यत्सौख्यं नवरक्तयोस्तरुणयोस्तत्केन साम्यं व्रजेत् ॥

२२४९

कान्ताया विकसद्विलासहसितस्वच्छांशवश्चामरं
संसक्तावभिषेकहेमकलशौ यच्चन्दनाङ्कौ स्तनौ ।
यत्कार्तस्वरचारुकान्ति जघनं सिंहासनं भूभुजां
साम्राज्यं तदिदं जयाजयमयः शेषस्तु चिन्तामयः ॥

२२५०

नासादितानि वनवासदृढव्रतेन
चित्राणि नेत्रचरितानि मृगैर्मृगाक्ष्याः ।
तत्कान्तिरुज्ज्वलरुचिव्यसनादहो नु
हेम्ना हुताशपतनैरपि नैव लब्धा ॥

एतौ क्षेमेन्द्रस्य.

२२५१

चूतोद्यानं सुरभिरनिलः शाद्वलश्यामभूमि-
स्तन्त्रीवाद्यं चषकमदिरा लोलिता मालतीभिः ।
स्वच्छज्योत्स्ना विजनरजनी कुड्मलाक्षीकटाक्षाः
सारं विद्युद्वलयचपले जीवलोके किमन्यत् ॥

मङ्गलवत्सस्य.

---

## अथ वीराः

२२५२

खड्गास्तिष्ठन्तु मत्तेभकुम्भकुट्टाट्टहासिनः ।
एकदोर्दण्डशेषोऽपि कः सहेत पराभवम् ॥

२२५३

एकः स एव तेजस्वी सैंहिकेयः सुरद्विषाम् ।
शिरोमात्रावशेषेण जीयन्ते येन शत्रवः ॥

कयोरपि.

२२५४

भर्तृपिण्डानृणकरो यशःक्रयमहापणः ।
सुराङ्गनास्वयंग्राहो रम्यः कालोऽयमागतः ॥

शाण्डिल्यस्य.

२२५५

बहवः पङ्गवोऽपीह नराः शास्त्राण्यधीयते ।
विरला रिपुखड्गाग्रधारापातसहिष्णवः ॥

राजपुत्रार्गटस्य.

२२५६
अनन्तोद्भूतभूतौघसंकुले भूतलेऽखिले ।
शस्त्रे शास्त्रे त्रिचतुराश्चतुरा यदि मादृशाः ॥
स्कन्दस्कारशंकरस्य.

२२५७
महिम्नामन्तरं पश्य शेषाहेः साब्धिभूधरा ।
फणासहस्रस्रग्दाम्नि भ्रमरीव विभाति भूः ॥

२२५८
मा भैष्ट नैते निस्त्रिंशा नीलोत्पलदलत्विषः ।
एते वीरावलोकिन्या लक्ष्म्या नयनविभ्रमाः ॥

२२५९
तेजसा सह जातानां वयः कुत्रोपयुज्यते ।
बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम् ॥

२२६०
नात्युच्चशिखरो मेरुर्नातिनीचं रसातलम् ।
व्यवसायद्वितीयानां नाप्यपारो महोदधिः ॥

२२६१
येन पाषाणखण्डस्य मूल्यमल्पं वसुंधरा ।
अनस्तमितसारस्य तेजसस्तद्विजृम्भितम् ॥
एते केषामपि.

२२६२
मा जीवन्यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥

२२६३
तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥

२२६४
पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥
एते माघस्य.

२२६५
न सदश्वाः कशाघातं न सिंहा घनगर्जितम् ।
परैरङ्गुलिनिर्दिष्टं न सहन्ते मनस्विनः ॥
शुष्कटशुखवर्मसूनोर्विद्याधरस्य.

२२६६
तावदाश्रियते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥

२२६७
स पुमानर्थवज्जन्मा यस्य नाम्नि पुरः स्थिते ।
नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः ॥

२२६८
ज्वलितं न हिरण्यरेतसं
चयमास्कन्दति भस्मनां जनः ।
अभिभूतिभयादसूनतः
सुखमुज्झन्ति न धाम मानिनः ॥
एते भारवेः.

२२६९
धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्यम् ।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ॥

२२७०
अङ्गणवीथी वसुधा कुल्या जलधिः स्थली च पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रयत्नस्य धीरस्य ॥
एतौ भट्टबाणस्य.

२२७१
जीवन्नेव मृतोऽसौ यस्य जनो वीक्ष्य वदनमन्योन्यम् ।
कृतमुखभङ्गो दूरात्करोति निर्देशमङ्गुल्या ॥
दामोदरगुप्तस्य.

२२७२
अभिमुखनिहतस्य सतस्तिष्ठतु तावज्जयोऽथवा स्वर्गः ।
उभयबलसाधुवादश्रवणसुखस्यैव नास्त्यर्घः ॥
श्रीभास्करस्य.

२२७३

रविमणिरपि निश्चेष्टः पादैस्तिग्मद्युतेर्मनाक्स्पृष्टः ।
ज्वलतितरामिति को वा मन्युं सोढुं क्षमो मानी ॥

भ०-इन्द्रसिंहस्य.

२२७४

भुजे विशाले विमलेऽसिपत्त्रे
कोऽन्यस्य तेजस्विकथां सहेत ।
गतासुरप्याहवसीम्नि वीरो
द्विधा विधत्ते रविमण्डलं यः ॥

शुष्कटसूनुविद्याधरस्य.

२२७५

एषा हि मे रणगतस्य दृढा प्रतिज्ञा
द्रक्ष्यन्ति यन्न रिपवो जवनं हयानाम् ।
युद्धेषु भाग्यचपलेषु न मे प्रतिज्ञा
दैवं यदिच्छति जयं च पराजयं च ॥

चन्द्रकस्य.

२२७६

सेना मयैव न हता निखिला रिपूणां
भर्तुर्भवेदुपकृतिर्न शरीरकेण ।
मत्तेभतुङ्गदशनाहतिनिर्गतासु-
रित्थं ह्रियेव सुभटो रुधिरे ममज्ज ॥

श्रीशूरस्य.

२२७७

रथस्यैकं चक्रं भुजगयमिताः सप्ततुरगा
निरालम्बो मार्गश्चरणरहितः सारथिरपि ।
रविर्गच्छत्यन्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥

अर्गटस्य.

२२७८

विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्याजौ रामः सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥

२२७९

घटे जन्मस्थानं मृगपरिजनो भूर्जवसनं
वने वासः कन्दादिकमशनमेवंविधगुणः ।
अगस्त्यः पाथोधिं यदकृत कराम्भोजकुहरे
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥

२२८०

विपक्षः श्रीकण्ठो जडपतिरमात्यः शशधरो
वसन्तः सामन्तः कुसुममिषवो लक्ष्यमबलाः ।
तथापि त्रैलोक्यं जयति मदनो देहरहितः
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥

केषामपि.

२२८१

लोकोत्तरं चरितमर्पयति प्रतिष्ठां
पुंसां कुलं न हि निमित्तमुदारतायाः ।
वातापितापनमुनेः कलशात्प्रसूति-
र्लीलायितं पुनरमुद्रसमुद्रपानम् ॥

२२८२

पृथ्वि स्थिरा भव भुजंगम धारयैनां
त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥

बालरामायणे.

२२८३

क्षुद्राः संत्रासमेते विजहत हरयो भिन्नशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमपि नहि रुषां नन्वहं मेघनादः
किंचित्संरम्भलीलानियमितजलधिं राममन्वेषयामि ॥

२२८४

पातालतः किमु सुधारसमानयामि
चन्द्रं निपीड्य किमुतामृतमाहरामि ।
उच्चण्डचण्डकिरणं किमु वारयामि
कीनाशलोकमथवा ननु चूर्णयामि ॥

हनुमद्वाक्यमेतत्.

२२८५

सामोपायनयप्रपञ्चपटवः प्रायेण ये भीरवः
शूराणां व्यवसाय एव हि परं संसिद्धये कारणम् ।
विस्फूर्जद्विकटाटवीगजघटापीठैकसंचूर्णन-
व्यापारैकरसस्य सन्ति विजये सिंहस्य के मन्त्रिणः ॥

२२८६

काकुत्स्थस्य दशाननो न कृतवान्दारापहारं यदि
क्वाम्भोधिः क्व च सेतुबन्धघटना क्वोत्तीर्य लङ्काजयः ।
पार्थस्यापि पराभवं यदि रिपुर्नाधात्क्व तादृक्तपो
नीयन्ते रिपुभिः समुन्नतिपदं प्रायः परं मानिनः ॥

कयोरपि.

२२८७

वह्निं शीतयितुं हिमं ज्वलयितुं वातं निरोद्धुं पयो
मूर्तं व्योम विधातुमुन्नमयितुं नेतुं नतिं वा महीम् ।
उद्धर्तुं किल भूभृतः स्थलयितुं सिन्धुं च संभाव्यते
शक्तिर्यस्य जनैः स एव नृपतिः शेषाः परं पार्थिवाः ॥

भट्टवृद्धः.

२२८८

नायाति वाडवशिखाक्कथनेन तापं

शैत्यं हिमाद्रिपयसा विशता च नाब्धिः ।

कश्चिद्गभीरमनसां सततं विषाद-

काले प्रमोदसमये च समोऽनुभावः ॥

२२८९

संप्राप्नुवन्ति ननु मण्डलमेकमेव

क्ष्मापा जये समरसीम्नि वपुस्तु हित्वा ।

चण्डांशुमण्डलमथाभिमतानि कामं

प्रेमार्द्रनिर्जरवधूस्तनमण्डलानि ॥

२२९०

नास्मिन्संततवेष्टनोल्बणतमैस्तल्पैरुदेति व्यथा

ग्रन्थिभ्यश्चलितैर्न चालमसुभिर्मर्मव्यथा जायते ।

क्रन्दद्बन्धुजनार्तनादचकितस्वान्तं न वा स्थीयते

नह्येतन्मरणं सुखस्य सुभगा काप्येव संप्राप्तिभूः ॥

## अथ हास्यम्

२२९१

कृष्णः क्रीडितवान्गोभिरिति गोतुल्यबुद्धिषु ।

पक्षपातवती लक्ष्मीरहो देवी पतिव्रता ॥

अमृतदत्तस्य.

२२९२

प्रायश्चित्तं मृगयते यः प्रियापादताडितः ।

क्षालनीयं शिरस्तस्य कान्तागण्डूषशीधुभिः ॥

श्यामलकस्य.

२२९३

तवोच्छ्रितान्पातयितुः पतितांश्चोद्धरिष्यतः ।

विधातुरिव दृश्यन्ते भग चित्रा विभूतयः ॥

व्याघ्रगणस्य.

२२९४
केशाः किमपराध्यन्ति क्लेशानां मुण्डनं कुरु ।
सकषायस्य चित्तस्य काषायैः किं प्रयोजनम् ॥
२२९५
किराटोटति साटोपं पटाङ्कितकटीतटः ।
रटन्वराटिकाहेतोर्लसदन्तरशाटिकः ॥
२२९६
रण्डाः पाखण्डिभिर्व्याप्ता भर्तृभिः कुलयोषितः ।
वेश्या धनिनमिच्छन्ति च्छात्राः करपरायणाः ॥
२२९७
यदक्षिभ्रूलतापाङ्गैः स्त्रियः कुर्वन्ति चापलम् ।
जघनेष्वेव तत्सर्वं पतत्यनपराधिषु ॥
२२९८
आदौ नम्रस्ततः स्तब्धः कार्यकालेषु निष्ठुरः ।
कृते कार्ये पुनर्नम्रः शिश्नतुल्यो वणिग्जनः ॥
२२९९
केतक्यः कण्टकैर्व्याप्ता नलिन्यः पङ्कसंभवाः ।
विलासिन्यः सकुट्टन्यः क्व रत्नमनुपद्रवम् ॥
२३००
जिह्वायाश्छेदनं नास्ति न तालुपतनाद्भयम् ।
निर्विशङ्केन वक्तव्यं वाचालः को न पण्डितः ॥
२३०१
गुरुनटदैवज्ञभिषक्छ्रोत्रियमुखगह्वराणि यदि न स्युः ।
व्याकरणसिंहभीता अपशब्दमृगाः क्व विचरेयुः ॥
२३०२
गणयति गगने गणकश्चन्द्रेण समागमं विशाखायाः ।
विविधभुजंगक्रीडासक्तां गृहिणीं न जानाति ॥
२३०३
परनारीषु दोषोऽस्ति स्वनारी नैव विद्यते ।
अत एव कुलीनानां प्रशस्ता करसुन्दरी ॥

२३०४

गौरः सुपीवराभोगो रण्डाया मुण्डितो भगः ।
मेरोरर्कहयोल्लीढशष्पहेमतटायते ॥

२३०५

अभ्यस्य पवनविजयं व्याख्याय च शैवसंहिताः सकलाः
मरणसमये गुरूणां गूथवदसवो विनिर्याताः ॥

२३०६

धान्यं मे कनकं मे माषा मे शोभना मसूरा मे ।
इति बत मे मे कुर्वन्पशुरिव नीतः कृतान्तेन ॥

२३०७

का नाम बुद्धिहीनस्य विधेस्तस्य विदग्धता ।
कूष्माण्डेषु न यश्चक्रे तैलमूर्णां च दन्तिषु ॥

२३०८

सदा वक्रः सदा क्रूरः सदा मानधनापहः ।
कन्याराशिस्थितो नित्यं जामाता दशमो ग्रहः ॥

२३०९

यमः शरीरगोप्तारं संचितारं वसुंधरा ।
दुःशीला स्त्री च हसति भर्तारं पुत्रवत्सलम् ॥

२३१०

अधोमुखैकदंष्ट्रेण विषशुक्रप्रवाहिणा ।
अनेन दुश्चिकित्स्येन जगदष्टं भगाहिना ॥

२३११

परान्नं प्राप्य दुर्बुद्धे मा प्राणेषु दयां कृथाः ।
दुर्लभानि परान्नानि प्राणा जन्मनि जन्मनि ॥

२३१२

घृतेन भोजनं बन्धुं बिडालस्यापि दीयते ।
आटिकाक्रोडखण्डस्तु दुर्लभं भोजनं महत् ॥

२३१३

याचन्ते पितरः पुत्रान्स्वर्गार्थं स्पृहयालवः ।
यः पीतं पायसं दद्यात्स्विन्नभृष्टां तथाटिकाम् ॥

२३१४

सा पार्वतीत्यवितथं स च स्थाणुरपि स्फुटम् ।
संपृक्तावपि यावास्तां सुरताभोगनिःस्पृहौ ।

२३१५

स्थाणुर्वा स्यादजो वा स्यात्पशूनां पतिरेव वा ।
कामिनीविभ्रमाचार्यं योऽधाक्षीत्कुसुमायुधम् ॥

२३१६

परोपकारसंस्कारताम्बूलाधरचुम्बनैः ।
यन्न संयुज्यते वक्त्रमधश्छिद्रेण तत्समम् ॥

केषामपि.

२३१७

प्रपायां पीयते वारि सत्रागारेऽपि भुज्यते ।
सुप्यते देवसदने यम्यते यत्र लभ्यते ॥

२३१८

निदाघकाले विप्रस्य प्रसुप्तस्य तरोरधः ।
शुना प्रमूत्रितं हस्ते 'देवस्य त्वे'ति सोऽब्रवीत् ॥

२३१९

वैद्यनाथ नमस्तुभ्यं क्षपिताशेषमानव ।
त्वयि संन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥

२३२०

आतुराद्वित्तहरणं मृतादपि पलायनम् ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥

२३२१

दाहज्वरेण मे मान्द्यं वद वैद्य किमौषधम् ।
पिब मद्यं शरावेण ममाप्यानय कर्परम् ॥

एते मयस्य.

२३२२

अधमर्णशवाजीविश्राद्धभुग्दुष्टभूभुजाम् ।
अभिप्राया न सिद्ध्यन्ति तेनेदं ध्रियते जगत् ॥

२३२३

अक्रोधं शिक्षयन्त्यन्यान्क्रोधना ये तपस्विनः ।
निर्धना ये धनायैव धातुवादोपदेशिनः ॥

हर्षस्य.

२३२४

काकाल्लौल्यं यमात्क्रौर्यं स्थपतेर्नित्यघातिताम् ।
आद्याक्षराणि संगृह्य कायस्थः केन निर्मितः ॥

२३२५

यमोऽपि वञ्चितो येन नकारान्तरलेखया ।
आयुधं कलमं यस्य तस्य देवोऽपि शङ्कते ॥

२३२६

कायस्थेनोदरस्थेन मातुरामिषशङ्कया ।
अन्त्राणि यन्न भुक्तानि तत्र हेतुरदन्तता ॥

२३२७

लेखनीकृतकर्णस्य कायस्थस्य न विश्वसेत् ।
विश्वसेत्कृष्णसर्पस्य वने व्याघ्रस्य विश्वसेत् ॥

२३२८

निःस्नेहः शूकरहितः सकषायो विबन्धकृत् ।
मसूर इव कायस्थः कायस्थः कस्य शान्तये ॥

२३२९

लघुपादो न मार्जारः श्वासधारी न तापसः ।
दण्डहस्तोऽपि न यमश्छिद्रान्वेषी न पन्नगः ॥

केषामपि.

२३३०

यद्भामितातिवेगेन व्यासेन सहसा बहु ।
भाषितं शतशस्तेन तत्रैव च रुचिं कुरु ॥

२३३१

चक्रिता च मृताचार्यं चेलं चर्चा च लीनता ।
चकारचञ्चुता चेति सप्तजीवनहेतवः ॥

दामोदरगुप्तस्य.

२३३२

नीचेश्वरस्य यद्धास्यं – – – – – – – –
तद्दुर्भरकृतघ्नस्य जठरस्य विजृम्भितम् ॥

२३३३

वैयाकरणसिंहेन योऽपशब्दमृगो हतः ।
नटैराशनिकैर्वैद्यैः पाण्डुराङ्गैः स — — — ॥

२३३४

— — — — — — — — —
– – – – रुण यातु कथं जडतुल्यं तुण्ठुको हसति ॥

एते केषामपि.

२३३५

परपरिवादेन गुणो वेषविशेषेण पौरुषातिशयः ।
यत्किंचनकारितया नृणां भवेद्राजपुत्रत्वम् ॥

प्रकाशवर्षस्य.

२३३६

उपयुक्तखदिरवीटकजनिताधररागभङ्गभयात् ।
कुलटा वाटकनिकटे तृष्यन्त्यपि वारि नो पिबति ॥

दामोदरगुप्तस्य.

२३३७

छन्दोरहिता गाथाः श्लोकानपशब्दविषधरग्रस्तान् ।
पठतोऽप्यहो सुमहती महार्घता राजपुत्रस्य ॥

इच्छटस्य.

२३३८

शृणु सखि कौतुकमेकं ग्राम्येण कुकामिना यदद्य कृतम् ।
सुरतसुखमीलिताक्षी मृतेति भीतेन मुक्तास्मि ॥

२३३९

अविदग्धः श्रमकठिनो दुर्लभयोषिद्युवा विप्रः ।
अपमृत्युरपक्रान्तः कामिव्याजेन मे रात्रौ ॥

एतौ दामोदरगुप्तस्य.

२३४०

अधरामृतेन पित्तं नश्यति वायुः पयोधरभरेण ।
अनवरतरतेन कफस्त्रिदोषशमनं वपुस्तन्व्याः ॥

२३४१

याप्यो वैद्यस्य निधिर्जीवति चेत्तन्महान्यशःपटहः ।
व्याधिभयात्को न सुहृन्न भवति – – –कुरु चिकित्सायाम् ॥

कयोरपि.

२३४२

पर्यङ्कः स्वास्तरणः पतिरनुकूलो मनोहरं सदनम् ।
नार्हति लक्षांशमपि त्वरितक्षणचौर्यसुरतस्य ॥

दामोदरगुप्तस्य.

२३४३

द्विगुरपि सद्वन्द्वोऽहं गृहे च मे सततमव्ययीभावः ।
तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः ॥

२३४४

वाचयति नान्यलिखितं लिखितमनेनापि वाचयति नान्यः ।
अयमपरोऽस्य विशेषः स्वयमपि लिखितं न वाचयति ॥

कयोरपि.

२३४५

मदनपरिपाण्डुगण्डा मुण्डितभगमण्डला खराण्डानाम् ।
खण्डयतु दुःखमधिकं सुखखण्डकरण्डिका रण्डा ॥

रण्डानन्दस्य.

२३४६

चङ्गस्तृणेन यातः पटहरणेनापि निर्गतः शंभुः ।
सौरो व्यञ्जनहान्या श्यामलकस्त्वर्धचन्द्रेण ॥

कस्यापि.

२३४७
कचाधरकुचोरूणां दुःखं कंदर्पकर्मणि ।
स्त्रीचिह्नशिश्नयोः सौख्यं वादिपक्षवतामिव ॥
२३४८
अनाहूतप्रविष्टस्य दृष्टस्य क्रुद्धचक्षुषा ।
स्वयमेवोपविष्टस्य वरं मृत्युर्न भोजनम् ॥
२३४९
उत्कोचपारितोषकभाटसुभाषिततरार्थचौर्यांशाः ।
तत्क्षणमेव ग्राह्याः षडन्यकाले न लभ्यन्ते ॥
२३५०
आ सप्ततेर्यस्य विवाहपाङ्क्ति-
र्विच्छिद्यते नूनमपण्डितोऽसौ ।
जीवन्ति ताः कर्तनकुट्टनाभ्यां
गोभ्यः किमुक्षा यवसं ददाति ॥
भट्टोर्वीधरस्य.
२३५१
छिद्रेष्वनर्था बहुलीभवन्ती-
त्यलीकमेतद्भुवि संप्रतीतम् ।
छिद्रं पुरस्कृत्य हि कामिनीना-
मर्था भवन्त्येव हि न त्वनर्थाः ॥
२३५२
स्वल्पष्टकारो विटचेटचाट-
किराटभाटीकुलटाभटानाम् ।
भट्टस्य मुट्टः पुनरेष कस्मा-
दत्रोत्तरं दास्यति कुट्टनी ते ॥
कयोरपि.
२३५३
एषोऽग्निहोत्रीति बिभर्ति गास्ता
विक्रीय दुग्धं सलिलं जुहोति ।

ख्यातोऽस्ति लोकेष्वृतुकालगामी
रजस्वलां याति दिवापि वेश्याम् ॥

२३५४
शैलाः सुरान्नुक्रमयान्निरीक्ष्य
निघर्षणच्छेदनतापमुक्ताः ।
आत्मानमाश्लिष्य भुजोपपीडं
श्रेयांसि कर्तृष्विह चिन्तयन्ति ॥
सुवर्णकारेश्वरवर्मणः.

२३५५
एतांश्छिनद्मि यदि तन्मम जीवितेन
षण्ढस्य किं नु यदि सन्त्वथ गोपतेः किम् ।
आसे प्रसार्य यदि तज्जनता हसन्ति
भारैर्गुणैश्च वृषणैश्च हला श्रमो मे ॥
रत्नभूतेः.

२३५६
खट्वा नितान्तलघुका शिथिलप्रताना
वेश्यापतिः स च निरन्तरखण्डकारी ।
तत्रापि दैवहतिकाः खलु माघरात्र्यो
हा सह्यतां कथमयं व्यसनप्रपञ्चः ॥

२३५७
अक्षोटशुण्ठमरिचार्द्रकदाडिमत्व-
क्कुस्तुम्बुरूलवणतैलसुसंस्कृतान्यः ।
मत्स्यान्सुशीतासितभक्ततले ददाति
स ब्रह्मलोकमधिगच्छति पुण्यकर्मा ॥

२३५८
भक्तं प्रतोलयति वज्रमिवामरेन्द्रः
शाकं समुद्धरति शल्यमिवास्थिलग्नम् ।
क्वाथीं सुसैन्धवयुतां गलदाहकर्त्रीं
निर्मत्सरेण मनसा जलवद्ददाति ॥

२३५९

सिद्धान्तषट्कमपि चोपनिषच्चतुष्कं
विद्याश्चतुर्दश कलाः सकलाश्च सम्यक् ।
बुद्ध्वापि याति लघुतां गुरुतां गतोऽसौ
यश्चक्रिकां बहुविधां बहुधा न वेत्ति ॥

२३६०

कटी मुष्टिग्राह्या द्विपुरुषभुजग्राह्यमुदरं
स्तनौ घण्टालोलौ जघनमिव यातुं व्यवसितौ ।
स्मितं भेरीनादो मुखमपि च यत्तद्भयकरं
तथाप्येषा रण्डा परिभवति संतापयति च ॥

२३६१

सिताम्बरयुगावृतः क्षुरनिघृष्टजङ्घोरुको
दिनत्रयपरिग्रहग्लपितवीटिकां धारयन् ।
सुराजिरमहेलको धवलसंनिधावुद्धुरो
रहो मृगयतेतरां विचलितोर्ध्वधम्मिल्लकः ॥

२३६२

सर्वस्य द्वे जगति नियते संपदापच्च जन्तो-
र्वृद्धो यूना सह परिचयात्त्यज्यते कामिनीभिः ।
एको गोत्रे भवति पुरुषः संपदामाश्रयो यः
स्त्री पुंवच्च व्यवहरति चेद्विद्धि गेहं प्रनष्टम् ॥

२३६३

कण्ठाद्रक्तं पिबति गुणिनां मद्यमांसं न भुङ्क्ते
विष्णुद्रव्यं हरति कुरुते द्वादशीषूपवासम् ।
सांख्यं श्रुत्वापहरति गवां ब्राह्मणानां च वृत्तिं
पापो दम्भः कलियुगसखः कस्य मित्रं नियोगी ॥

२३६४

प्रश्नाः कथा विचित्राः कण्डूयनमंशुकान्तराकृष्टिः ।
दिनवेलार्कनिरीक्षणमतिहासो मशकदंशकाक्षेपः ॥

२३६५

बहिरपि गमनं बहुशः स्वजनकलिः सलिलपात्रभङ्गश्च ।
वह्निप्रशमश्चेति द्वादशचेष्टाः सुवर्णकाराणाम् ॥

२३६६

यभस्व नित्यं यदि शक्तिरस्ति ते
दिनादिनं गच्छति कान्त यौवनम् ।
मृताय को दास्यति दर्भविष्टरे
तिलोदकैः सार्धमलोमशं भगम् ॥

२३६७

ऋजवी दृष्टिरनुल्वणं विहसितं मन्दं परिष्वञ्जितं
द्वेषो नर्मणि दूरतीर्थगमने यत्नो रतिर्लिङ्गिषु ।
यस्यास्त्यक्तसुखस्पृहं किल वपुः पीनाल्पलम्बस्तनी
सज्जारा विटपेटकैकमहिषी रण्डा सुखायास्तु वः ॥

२३६८

वेश्यानां परलोकसाधनधियामत्यन्तरत्यन्तर-
व्यग्राणामिदमेकमेव तपसश्छिद्रं कदाचिद्भवेत् ।
ताम्बूलद्रवसान्द्ररागमदिरामोदप्रगल्भैर्मुखै-
र्यत्स्वस्तील्पपवित्रवक्त्रकुहरांश्चुम्बन्ति विप्रानपि ॥

२३६९

वित्तेन वेत्ति वेश्या स्मरसदृशं कुष्ठिनं जराजीर्णम् ।
वित्तं विनापि वेत्ति स्मरसदृशं कुष्ठिनं जराजीर्णम् ॥

अयं क्षेमेन्द्रस्य.

२३७०

दीनार एकोऽस्ति ममेन्दुवक्त्रे
कटीतटप्रान्तनिबन्धबद्धः ।
उपार्जितोऽयं बहुभिः प्रयासै-
स्तदर्धमर्धेन कुरु प्रसादम् ॥

२३७१

प्रचुरमरिचापूर्णाः पूर्णैर्निरन्तरसंकुला
करिवरचलद्दन्तच्छायैर्बिसाङ्कुरमूलकैः ।
शकुनिशकलश्रेणीशाराः स्फुटा वटिकाकुलाः
शिशिरसमये भूयासुस्ते करम्भकहण्डिकाः ॥

२३७२

दन्तान्निर्दलयद्रसांश्च जडयत्तालु द्विधा स्फोटय-
च्छैत्यात्संघटयद्गलं गलबिलद्वाराणि संकोचयत् ।
इत्थं निर्मलकर्करीस्थमसहप्रालेयवाताहतं
नाधन्याः प्रचुरं पिबन्त्यनुदिनं प्रोन्मुक्तधारं पयः ॥

केषामपि.

२३७३

बिभ्राणार्द्रनखक्षतानि जघने नान्यत्र गात्रे भया-
न्नेत्रे चुम्बनपाटले च दधती निद्रालसे निश्चले ।
स्वं संकेतमदूरमेव कमितुर्भ्रूसंज्ञया बिभ्रती
सिद्धिं याति विटैककल्पलतिका रण्डा न पुण्यैर्विना ॥

२३७४

यत्नोत्थापनमात्रनिःसहजरच्चर्मावशेषश्लथ-
भ्रश्यच्छेपसि दुर्बलाङ्गवलनाव्यर्थौघमालिङ्गने ।
लज्जादायिनि खिद्यमानयुवतौ वृद्धस्य कृच्छ्रे रते
यत्स्यात्तत्प्रतिभाव्य किं नु हसितुं युक्तं किमारोदितुम् ॥

भट्टवृद्धेः.

२३७५

धत्सेऽङ्गानि न धार्यसे च बहुभिर्वेत्सि स्वयं संगतं
पद्भ्यां यासि वचो ददासि शिरसः शक्नोषि संचालनम् ।
भक्तस्योपरि नास्ति ते विमुखता नोष्मा न तृष्णाप्यहो
आनन्दोऽद्य नियोगिरुग्विरहितो दृष्टोऽसि जीवन्पुनः ॥

२३७६

मांसपाकोत्कटमद्यगन्धिविहरच्चेटीनटीसंकुलं
यद्वेश्यायतनं भुजंग परया भक्त्या पुरः पश्यसि ।
अत्रास्ते गृहदेवता विदधती दिग्घट्टनं कुट्टनी
यस्याः प्रत्यहमात्तकामुकपशुव्रातोपहारैर्बलिः ।

२३७७

गृध्री निर्भरमामिषेषु सरघा घोरा मधूनां भरे
व्याघ्री तीक्ष्णनखक्षतेषु भुजगी दंशप्रकारेषु च ।
उत्तानेषु विवर्तनेषु शफरी वित्तच्छले मूषकी
वेश्या कामुकवञ्चनासु भवने रूपैरनेकैः स्थिता ॥

२३७८

उच्चैरध्ययनं चिरंतनकथाः स्त्रीभिः सहालापनं
तासामर्भकलालने रतिरथो तत्पाकमिथ्यास्तुतिः ।
पितृभ्रातृजनाशिषः सुभगतायोग्यत्वसंकीर्तनं
स्वानुष्ठानकथाभिवादनविधिर्भिक्षोर्गुणा द्वादश ॥

२३७९

क्षारं राद्धमिदं किमद्य दयिते राध्नोषि किं न स्वय-
माः पापे प्रतिजल्पसे प्रतिदिनं पापस्त्वदीयः पिता ।
धिक्त्वां क्रोधमुखीमलीकमुखरस्त्वत्तोऽपि कः क्रोधनो
दंपत्योरिति नित्यदत्तकलहक्लेशान्तयोः किं सुखम् ॥

२३८०

न भ्रूभङ्गकटाक्षवीक्षणसुखं सान्द्रेऽन्धकारोदये
नालापाः प्रकटीभवन्ति मधुराः स्वैरं मिथो भाषणात् ।
साशङ्के हृदये तथा हि न मुदामासक्तिरुत्पद्यते
चित्रं चौर्यरते तथापि मनसः कोऽप्येष रम्यो रसः ॥

२३८१

क्रयादौषधवत्कामः प्रभुत्वात्केवलश्रमः ।
कारुवन्निजदारेषु योऽन्यः कामः स मन्मथः ॥

२३८२

स्वायत्तमेकान्तहितं विधात्रा
विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे
विभूषणं मौनमपण्डितानाम् ॥

२३८३

नाम ग्रन्थकृतां गृहाण विबुधोपाध्यायचर्चां कुरु
ग्रन्थानां भव सत्परिग्रहकृती स्पर्धस्व साकं बुधैः ।
नानाहस्तविचित्रचालनपरश्चोच्चैः सशब्दं हस-
न्निच्छेश्चेद्बुधतां पुरो जडधियामत्यन्तमूर्खोऽपि सन् ॥

२३८४

निःशङ्कं यत्तदुच्चैर्वद कुरु विकटं स्वाननं ज्ञानगर्वा-
च्छ्लाघस्वात्मानमन्यान्भष हस सहसा किंचिदश्लीलमुक्त्वा ।
सावद्यं खण्डखाद्यं पठ विवद समुत्कर्षयन्मूर्खलोका-
निच्छेश्चेत्सूरिभावं जडजनपुरतो मूर्खवृन्दारकोऽपि ॥

२३८५

व्यासादीन्कविपुंगवाननुचितैश्चोद्यैः सलीलं भष-
न्नुच्चैर्जल्प निमील्य लोचनयुगं श्लोकान्सगर्वं पठन् ।
काव्यं स्वीकुरु यत्परैर्विरचितं स्पर्धस्व साकं बुधै-
र्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥

२३८६

आकारेण शशी गिरा परभृतः पारावतश्चुम्बने
हंसश्चङ्क्रमणे समं दयितया रत्या विमर्दे गजः ।
इत्थं भर्तरि मे समस्तयुवतिश्लाघ्यैर्गुणैः सेविते
क्षुण्णं नास्ति विवाहितः पतिरिति स्यान्नैष दोषो यदि ॥

२३८७

अनेकैर्नायकगुणैः सहितः सखि मे पतिः ।
स एव यदि जारः स्यात्सफलं जीवितं मम ॥

२३८८

रे रे यन्त्रक मा रोदीः कं कं न भ्रमयन्त्यमूः ।
कटाक्षाक्षेपमात्रेण कराकृष्टस्य का कथा ॥

केषामपि.

२३८९

विप्रः सपक्षो ह्युपवीतधारी
युक्त्या स्वरार्थं भ्रमयन्स्वहस्तम् ।
शिष्योऽस्मि नार्या न तु रोदनं मे
शब्देन वेदाध्ययनं करोमि ॥

राजानकानन्दस्वामिनः.

२३९०

यज्ञोपवीतं परमं पवित्रं
करेण धृत्वा शपथं करोमि ।
नान्यन्मनोहारि नितम्बिनीभ्यो
दुःखैकहेतुर्न च कश्चिदस्ति ॥

२३९१

वान्त्यापि यत्सुखयति प्रहतोऽपि चेतो
जातव्रणोऽपि नयनोत्सवमातनोति ।
मुण्डीकृतोऽपि सुरते प्रबिभर्ति शोभां
पायादपूर्वचरितः सुभगो भगो वः ॥

२३९२

मूर्खः कृतेऽपि परदाररते विशुद्ध्यै
मातेति वाचिकमवान्तरमातनोति ।
यागाब्जसीम्नि कृतविट्टुदनार्थमोतु-
रुत्खातपातकमुदस्यति तद्दलेभ्यः ॥

२३९३

अपथ्यभोगेषु यथातुराणां
स्पृहा यथार्थेष्वतिदुर्गतानाम् ।

परोपतापेषु यथा खलानां
स्त्रीणां तथा चौर्यरतोत्सवेषु ॥

२३९४

कार्यार्थिनो दीर्घमिवाध्वखेदं
विक्रीतदासा इव कर्मभारम् ।
कष्टं कटुद्रव्यमिवामयार्ताः
स्वभर्तृगेहं वनिताः सहन्ते ॥

२३९५

अधेश्वराश्चारणगायनानां
सदैव कल्पद्रुमवत्फलन्ति ।
सद्भयस्तु किंचिद्वचसैव सायं
दीपाय कर्पूरमिवार्पयन्ति ॥

२३९६

श्वश्रूर्नुदति च शश्वन्नुदति ननन्दाथ देवरो नुदति ।
प्रियसखि तथापि गेहे पतिरसमासे समाश्रित्य ॥

२३९७

घझढधभणनविशेषो वक्तुर्वक्त्रान्न लभ्यते यस्य ।
मुखगुदरन्ध्रविशेषो दन्तैरुपलभ्यते तस्य ॥

अयं कस्यापि.

२३९८

इन्दुर्यत्र न निन्द्यते न मधुरं दूतीवचः श्रूयते
नोच्छ्वासा हृदयं दहन्ति शिशिरा नो याति कार्श्यं वपुः ।
स्वायत्तामनुकूलिकां स्वगृहिणीमालिङ्ग्य यत्सुप्यते
तत्किं प्रेम गृहाश्रमव्रतमहो कष्टं हि तद्धार्यते ॥

२३९९

दिग्वासा यदि तत्किमस्य वसनैश्चेत्तस्य किं भस्मना
भस्माथाङ्गनया किमस्य यदि सा कामं परिद्वेष्टि किम् ।
इत्यन्योन्यविरुद्धचेष्टितमसौ पश्यन्निजस्वामिनो
भृङ्गी सान्द्रसिरावनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥

२४००

नास्माकं जननी तथोज्ज्वलकुला सच्छ्रोत्रियाणां कुला-
दूढा काचन कन्यका खलु मया तेनास्मि ताताधिकः ।
अस्मत्स्यालकभागिनेयभगिनी मिथ्याभिशस्ता परै-
स्तत्संबन्धवशान्मया स्वगृहिणी प्रेयस्यपि प्रोज्झिता ।।

कृष्णमिश्रस्य.

२४०१

बाला क्रन्दति घर्षणेन युवतिः सीत्कारमामुञ्चति
प्रौढा मुञ्चति पुत्रशोकमतुलं पीयूषदण्डाहता ।
वृद्धागाधभगोदधिप्रमथने निर्मन्थमन्थाचलो
जीयादिन्द्रकरीन्द्रदन्तमुसलाकारो लकारस्तव ।।

२४०२

भिक्षो कन्था श्लथा ते ननु शफरवधे जालिकैषास्ति मत्स्यां-
स्तेऽमी मद्यावदंशाः पिबसि मधु समं वेश्यया यासि वेश्याम् ।
दत्त्वारीणां गलेऽङ्घ्रिं किमु तव रिपवो भित्तिभेत्तास्मि येषां
चौरस्त्वं द्यूतहेतोः कथमसि कितवो येन दासीसुतोऽस्मि ।।

२४०३

दूरे क्षीरकथा तथाहि कतरो राज्ञां विशेषोऽपरो
दण्डापूपिकया दधिष्वधिगमस्तक्रं क मे संभवेत् ।
मस्तु स्वस्तिमदस्तु गोरसरसप्रस्ताव एवाफल-
स्तद्भाग्यं मम येन काञ्जिकलवैर्निष्किंचनो वञ्चितः ।।

प० जोनकस्य.

२४०४

क्लेशैः केशैरशेषैरलमुपरचितैः कार्यहार्यं मनोऽस्या
दाता ग्राम्योऽपि काम्यः किमपरमनया दग्धवैदग्ध्यरीत्या ।
स्वैरं निर्गत्य पुत्र व्रज युवतिजनो यत्र वाञ्छ्यलभ्यः
कुट्टन्या प्रोक्तमित्थं प्रकटविटभटोच्चाटनं पातु युष्मान् ।।

२४०५

आदौ तावद्व्यापारस्था यमवरुणधनदसदृशा भवन्त्यतिगर्विता
मानोन्मत्ता दर्पोत्सिक्ताः परविभवहरणनिरता भवन्त्यतिदारुणाः।
भ्रष्टास्तेभ्यो व्यापारेभ्यो हतिनिगडनियतचरणास्तथा लगुडार्दिता
लम्बैः कूर्चैर्दीनैर्वक्त्रैर्मुनय इव शमदमरता भवन्त्यतिभद्रकाः ॥

एते केषामपि.

२४०६

भोगोपभुक्तिः क्रियते परेण
संमर्दनार्तिं तु वयं भजामः ।
वृद्धास्तनौ वक्तुमितीव यातौ
समानदुःखस्य भगस्य मूलम् ॥

---

## अथ जातिः

२४०७

मार्जारश्चुल्लितलादुत्थाय विजृम्भितायतो भूत्वा ।
विधुनोति भस्मपरुषाण्यङ्गानि निशावसानेषु ॥

२४०८

गायति विहसति नृत्यति हृदयेन धृतां प्रियां विचिन्तयति ।
समविषमं च न विन्दति गृहगमनसमुत्सुकः पथिकः ॥

कयोरपि.

२४०९

धूलीधूसरतनवो राज्यस्थितिरचनकल्पितैकनृपाः ।
कृतमुखवाद्यविकाराः क्रीडन्ति सुनिर्भरं डिम्भाः ॥

रुद्रटस्य.

२४१०

विरलाङ्गुलिकरपिहितघ्राणान्वितगण्डचिबुकमुखविवरम् ।
कस्योच्चरदृकारं सूक्ष्मशिशोर्ज्योन्मनो न हरेत् ॥

२४११

आस्यं पिधाय सकलं विरलाङ्गुलिना करेण सघ्राणम् ।
अयमुच्चरदृकारं मनोहरं ज्योत्करोति शिशुः ॥

एतौ वल्लभदेवस्य.

२४१२

गर्जन्हरिः साम्भसि शैलकुञ्जे
प्रतिध्वनीनात्मकृतान्निशम्य ।
पदं बबन्ध क्रमितुं सकोपः
प्रतर्कयन्नन्यमृगेन्द्रनादम् ॥

भट्टेः.

२४१३

अम्भोमुचां सलिलमुद्वमतां निशीथे
तालीवनेषु निभृतस्थितकर्णतालाः ।
आकर्णयन्ति करिणोऽर्धनिमीलिताक्षा
धारारवान्दशनकोटिनिषण्णहस्ताः ॥

कस्यापि.

२४१४

द्वित्राणि स्खलता पदानि दधता धात्रीकरालम्बिना
स्वभ्यस्तं पुनरेव जानुगमनं निःशङ्कमातन्वता ।
उद्भिन्नासमदन्तकुड्मलमुखेनाव्यक्तवाग्वादिना
या प्रीतिः स्वसुतेन चेतसि सखे वक्तुं न सा पार्यते ॥

भट्टजनार्दनस्य.

२४१५

आयातो भवतः पितेति सहसा मातुर्निशम्योदितं
धूलीधूसरितो विहाय शिशुभिः क्रीडारसान्प्रस्तुतान् ।
दूरात्स्मेरमुखः प्रसार्य ललितं बाहुद्वयं बालको
नाधन्यस्य पुरः परैति परया प्रीत्या रणन्घर्घरम् ॥

कस्यापि.

२४१६

मातर्धर्मपरे दयां मयि कुरु श्रान्तेऽद्य वैदेशिके
द्वारालिन्दककोणकेऽथ निभृतं यातास्मि सुप्त्वा निशि ।
इत्युक्त्वा सहसा प्रचण्डगृहिणीवाक्येन निर्भर्त्सितः
स्कन्धन्यस्तपलालमुष्टिविभवः पान्थः पुनः प्रस्थितः ॥

रविदत्तस्य.

२४१७

आरात्कारीषवह्नेः प्रविरचिततृणप्रस्तरान्तर्निषण्णैः
संशीर्णग्रन्थिकन्थाविवरवशविशच्छीतवाताभिभूतैः ।
नीताः कृच्छ्रेण पान्थैः श्वभिरिव निबिडं जानुसंकोचकुब्जै-
रन्तर्दुर्वारदुःखद्विगुणतरकृतायामयामास्त्रियामाः ॥

कस्यापि.

२४१८

पक्षावुत्क्षिप्य धुन्वन्सकलतनुरुहाभोगविस्फारिताङ्गः
प्रागेवोड्डीननिद्रः स्फुरदरुणकरोद्भासितं खं निरीक्ष्य ।
प्रातश्चोत्थाय नीडस्थिततरलतनुर्घर्घरध्वानमुच्चै-
रुद्ग्रीवः पूर्वकायोन्नतिविकटसटः कुक्कुटो रारटीति ॥

नड्डुवाहस्य.

२४१९

आकर्षन्निव गां धमन्निव खुरैः पश्चार्धमुज्झन्निव
स्वीकुर्वन्निव खं पिबन्निव दिशो वायून्समश्नन्निव ।
साङ्गारप्रकरां स्पृशन्निव महीं छायाममृष्यन्निव
चञ्चच्चामरवीज्यमानवदनः श्रीमान्हयो धावति ॥

श्रीसिंहदत्तस्य.

२४२०

पश्चादङ्घ्रिं प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटा धूलिधूम्रा विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुङ्गस्तुरंगो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ।

भट्टबाणस्य.

२४२१

आलोकत्रस्तनारीकृतसभयमहानादधावज्जनौघ-
न्यासद्वारप्रदेशप्रचुरकलकलाकर्णनस्तब्धचक्षुः ।
कष्टं दण्डं गृहाणेत्यतिमुखरमुखैस्ताडितो लोष्टघातै-
र्भीतः सर्पो गृहस्यानधिगतविवरः कोणतः कोणमेति ॥

दिविराकिशोरकस्य.

२४२२

आघ्रायाघ्राय गन्धं विकृतमुखपुटो दर्शयन्दन्तपङ्क्तिं
धावन्नुन्मुक्तनादो मुहुरपि रभसाकृष्टया पृष्ठलग्नः ।
गर्दभ्याः पादघातद्विगुणितसुरतप्रीतिराकृष्टशिश्नो
वेगादारुह्य मुह्यन्नवतरति खरः खण्डितेच्छश्चिराय ॥

श्रीमयूरस्य.

२४२३

घ्रात्वा श्रोणीमजाया विततमभिमुखं नाससंकोचभङ्गं
स्थित्वा सूर्यं निरीक्ष्य प्रविकसितसटो घट्टयन्क्ष्मां खुरेण ।
ब्लोब्लोकारान्प्रकुर्वन्मणिशकलनिभं चालयन्नेत्रयुग्मं
छागश्चाटूननेकांश्चतुर इव विटो मन्मथान्धः करोति ॥

भट्टबाणस्य.

२४२४

गर्जित्वा मेघधीरं प्रथममथ शनैर्मण्डलीकृत्य देहं
शृङ्गाभ्यां घारयन्तावभिमुखमवनिं दारयन्तौ खुराग्रैः ।
मन्दं मन्दं समेत्य स्थिरनिहितपदं दत्तघातौ सरोषं
युध्येते चालयन्तौ कुटिलितमसकृत्पुच्छमेतौ महोक्षौ ॥

कस्यापि.

२४२५

आहत्याहत्य मूर्ध्ना द्रुतमनुपिबतः प्रस्नुतं मातुरूधः
किंचित्कुब्जैकजानोरनवरतचलच्चारुपुच्छस्य धेनुः ।
उत्तीर्णं तर्णकस्य प्रियतनयतया दत्तहुंकारमुद्रा
विस्रंसिक्षीरधारालवशबलमुखस्याङ्गमातृप्ति लेढि ॥

श्रीमयूरस्य.

---

## अथ चाटवः

२४२६

अनास्वादितसंभोगाः पतन्तु तव शत्रवः ।
बालवैधव्यदग्धानां कुलस्त्रीणां स्तना इव ॥

२४२७
नारायणायितं देव त्वया नरकविद्विषा ।
यदेकः शिशुपालोऽपि स्थापितो न द्विषां कुले ॥
२४२८
तुलामारुह्य रविणा वृश्चिके निहितं पदम् ।
भवता शिरसि न्यस्तमयत्नेनैव भोगिनाम् ॥
२४२९
विचरेदेकपाद्धर्मः कथमस्मिन्कलौ युगे ।
यदि वंशस्त्वदीयोऽयं न स्यादस्यावलम्बनम् ॥
२४३०
कृतं कलौ त्वयैकेन परलोकप्रसाधनम् ।
गुणानुबन्धिभिः शुद्धैर्मार्गणैः सफलीकृतैः ॥
२४३१
किं कृतेन न यत्र त्वं यत्र त्वं किमसौ कलिः ।
कलौ चेद्भवतो जन्म कलिरस्तु कृतेन किम् ॥
२४३२
विना साध्येन नैवास्ति तार्किकाणां हि साधनम् ।
साध्यं ते नास्त्यहो चित्रं तथाप्यस्त्येव साधनम् ॥
२४३३
प्रत्यक्षमविसंवादि प्रमाणं प्रोच्यते बुधैः ।
प्रत्यक्षस्ते गुणौघोऽयमप्रमाणः कथं भुवि ॥
२४३४
चित्रं कारणमन्यत्र कार्यमन्यत्र दृश्यते ।
महान्प्रतापो देवस्य दाहस्तु हृदि विद्विषाम् ॥
२४३५
राजंस्त्वमेव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयायसे ॥

२४३६
करपातैर्दुरालोकैस्तीक्ष्णः संतापयन्प्रजाः ।
भानुर्न भवता तुल्यः क्षणसंरक्तमण्डलः ॥

२४३७
एतावच्छक्यमस्माभिर्वक्तुं त्वं गुणवानिति ।
रत्नाकरस्य रत्नौघपरिच्छेदे तु के वयम् ॥

२४३८
मित्रमण्डलसंतापशुष्कदेहास्तवारयः ।
जाताः संप्रति दग्धाशा निदाघदिवसा इव ॥

२४३९
कारणैः सदृशं कार्यमिति मिथ्याप्रसिद्धयः ।
मानिनो भवतो जातं यदमानं यशो भुवि ॥

२४४०
अमानेनापि भवता दानमानादिभिर्गुणैः ।
आश्रितः सर्व एवायं समानः क्रियते जनः ॥

२४४१
भवतोऽपि भवद्भृत्याः सुखभाजो भवन्त्यमी ।
त्वत्प्रसादात्सुखावाप्तिर्या तेषां सा कुतस्त्वयि ॥

२४४२
भोगस्तवैव सफलो योऽर्थिभिः परिभुज्यते ।
अन्येषां किं नृणां भोगैरभोगैः फणिनामिव ॥

२४४३
दुर्योधनः सकर्णोऽसि हृदि शल्योऽसि विद्विषाम् ।
सकृपो धृतराष्ट्रोऽसि त्वमेकः कौरवायसे ॥

२४४४
युधिष्ठिरोऽसि भीमोऽसि चरितैरर्जुनो भवान् ।
प्रज्ञया सहदेवोऽसि वाच्यता नकुलस्य ते ॥

२४५४
आहते तव निःसाणे स्फुटितं रिपुहृद्घटैः ।
गलितं तत्प्रियानेत्रै राजंश्चित्रमिदं महत् ॥
२४५५
अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ।
मार्गणौघः समायाति गुणो याति दिगन्तरम् ॥
२४५६
अमी पानकरम्भाभाः सप्तापि जलराशयः ।
त्वद्यशोराजहंसस्य पञ्जरं भुवनत्रयम् ॥
२४५७
कीर्तिस्ते जातजाड्येव चतुरम्बुधिमज्जनात् ।
आतपाय धरानाथ गता मार्तण्डमण्डलम् ॥
२४५८
दुनोति त्वामघवतः कीर्तनं केनचित्कृतम् ।
त्वयि संकीर्तिते चित्रं मघवानपि तुष्यति ॥

एते अमृतदत्तस्य.

२४५९
भवतस्तुल्यतामेति न सोमो न दिवाकरः ।
यस्य दातुः परिश्रान्तो न रात्रौ न दिवा करः ॥
२४६०
अक्षराणामकारोऽहमिति विष्णुः स्वयं ब्रुवन् ।
भवता सोऽपि यत्सत्यमाकारेण लघूकृतः ॥

एतौ भास्करसेनस्य.

२४६१
राजन्यद्यपि ते बाहू कान्तालिङ्गनलालसौ ।
तथापि समरे भेत्तुं 'शक्तौ हस्तिकपाटयोः' ॥
२४६२
अगम्यगमनात्प्रायः प्रायश्चित्तीयते जनः ।
अगम्यं त्वद्यशो याति सर्वत्रैव च पावनम् ॥

२४६३

यशसस्तव सौजन्यमहो विस्मयकारकम् ।
आत्मवच्छुक्लतां नीतमयशो विद्विषामपि ॥

२४६४

गुणवत्त्वे समानेऽपि भेदोऽयं युवयोर्महान् ।
धनुर्याति गुणच्छेदमविच्छेदगुणो भवान् ॥

२४६५

किं करोतु गुणौघस्ते शरावपुटदीपवत् ।
वसुधाम्बरपर्यन्तविनिवारितगोचरः ॥

२४६६

संधिविग्रहकालज्ञः कृतकृत्योऽपि पाणिनिः ।
परप्रत्ययकारीति भवता नोपमीयते ॥

२४६७

'उपसर्गाः क्रियायोगे' पाणिनेरिति संमतम् ।
निष्क्रियोऽपि तवारातिः सोपसर्गः सदा कथम् ॥

२४६८

तव शत्रुर्भवांश्चैव द्वयं व्याकरणायते ।
स निपातोपसर्गाभ्यां त्वं गुणागमवृद्धिभिः ॥

२४६९

असत्कविप्रणीतानां श्लोकानामिव ते द्विषाम् ।
क्लिष्टार्थसंधिवृत्तीनां निपाताः स्युः पदे पदे ॥

२४७०

यदस्ति तद्ददासीति नैतच्चित्रमवैम्यहम् ।
भयं स्वप्नेऽपि ते नास्ति दत्तं तद्विद्विषां कथम् ॥

२४७१

अकलङ्को दृढः शुद्धः परिवारी गुणान्वितः ।
सद्वंशो हृदयग्राही खड्गः सुसदृशस्तव ॥

२४७२

प्रायेण सर्वं पश्यन्ति विपरीतं विनश्वराः ।
यत्त्वं काञ्चनगौरोऽपि काल एवासि विद्विषाम् ॥

२४७३

त्वया सह विरुद्धानां कुतः कुशलता कुले ।
वासो हि नियतस्तेषां वने कुशलताकुले ॥

२४७४

विरोधात्तव शत्रूणां जातं सौगतदर्शनम् ।
विग्रहे क्षणभङ्गित्वं सर्वाङ्गेषु च शून्यता ॥

२४७५

रागान्नक्षत्रयोगाच्च समूहात्सास्य देवता ।
जयलक्ष्मीर्महीभर्तुर्वक्षो याता रणे द्विषाम् ॥

प° पाजकस्य.

२४७६

त्वद्यशःपुण्डरीकस्य त्रैलोक्यैकसरःस्थितेः ।
कीर्तिहंसीविधूतस्य रजः पतति नो हिमम् ॥

कस्यापि.

२४७७

सकृपाणां द्विषां सेनामकृपाणां रणे घ्नता ।
अमूर्धन्येन भवता मूर्धन्येन जिता दिशः ॥

अमृतदत्तस्य

२४७८

त्वद्यशोजलधौ राजन्निमज्जनभयादिव ।
सूर्येन्दुबिम्बमिषतो धत्ते तुम्बीद्वयं नभः ॥

२४७९

अहो किमपि ते शुद्धं यशःकुसुममुद्गतम् ।
यस्यायममृतस्यन्दी बालेन्दुर्बाह्यपल्लवः ॥

जयवर्धनस्य.

२४८०

उदिते दृष्टिसुखे त्वयि शशिनीव भवन्ति चन्द्रकान्तानि ।
वदनान्यरिनारीणामविरलजलबिन्दुवर्षीणि ॥

२४८१

एकं मित्रं भजते मासेनेन्दुः स्वयं क्षयं गच्छन् ।
मित्रशतानि भजंस्त्वं प्रतिक्षणं वृद्धिमुपयासि ॥

कयोरपि.

२४८२

स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥

भट्टबाणस्य.

२४८३

दिङ्मुखानि परिचुम्बति पृथ्वी-
मम्बुराशिरशनां परिरभ्य ।
उल्लसत्युपवनेषु यशस्ते
वृद्धमेव तरुणोचितचेष्टम् ॥

श्रीकल्लटस्य.

२४८४

दृष्टमङ्कुरितमर्जुनसृष्टौ
यन्महापुरुषनिर्मितिबीजम् ।
तत्त्वोदयविधाविह धातु-
र्दृश्यते कुसुमितं फलितं च ॥

आनन्दवर्धनस्य.

२४८५

ऊष्मव्यपेता रहिताश्च वृद्ध्या
संयोगहीना लघवोऽपि चान्तः ।
श्लोकस्य वर्णा इव विद्विषस्ते
पादान्तमागम्य गुरूभवन्ति ॥

२४८६

यशोदयामण्डितकान्तदेहो
बाल्येऽपि गोपालजनस्य नेता ।
गोमण्डलं पासि बलेन युक्तः
कथं न राजन्पुरुषोत्तमोऽसि ॥

२४८७

कृशाशयात्यन्तविवृद्धतापया
विपाण्डुरीभूतपयोधरश्रिया ।
शिलीमुखास्वादितबन्धुजीवया
तवारिनारी शरदा विडम्ब्यते ॥

केषामपि.

२४८८

दिग्वधूवदनचुम्बि चेर्ष्यया
वीक्ष्य सद्युति दिवा भवद्यशः ।
दर्शितः पृथुपयोधरोद्गम-
स्तेन सापि परिरभ्यतेऽखिला ॥

२४८९

अभिहिताप्यभियोगपराङ्मुखी
प्रकटमङ्गविलासमकुर्वती ।
उपरि ते पुरुषायितुमक्षमा
नववधूरिव शत्रुपताकिनी ॥

एतौ विकटनितम्बायाः

२४९०

द्रविणमापदि भूषणमुत्सवे
शरणमात्मभये निशि दीपकः ।
बहुविधार्थ्युपकारभरक्षमो
भवति कोऽपि भवानिव सन्मणिः ॥

भल्लटस्य.

२४९१

अपहरसि सदा मनांसि पुंसा-
मतिमहता गुणसंपरिग्रहेण ।
न च भवसि तथाप्यनेकचित्तो
इतमथवा विवृणोति कः परस्वम् ॥

२४९२

सुद्युम्न इन्दुकुलजः स बभूव नाम्नी
राजाप्यसौ दशरथः सुतरामभद्रः ।
धर्मात्मजो नकुलवानिति सुप्रसिद्धं
केनोपमा भवतु ते सकलाधिपस्य ॥

कयोरपि.

२४९३

ऐरावणे सुरवधूपरिगीयमान-
युष्मद्यशःश्रवणनिश्चलकर्णताले ।
निर्विघ्नमापिबति भृङ्गकुलं मदाम्भः
कल्याणमावहति कस्य न चेष्टितं ते ॥

जितमन्योः.

२४९४

गायन्ति किंनरगणाः सह कामिनीभिः
प्रोत्तुङ्गशैलशिखरेषु हिमाचलस्य ।
शङ्खेन्दुकुन्ददलबालमृणालनाल-
नीहारहारहरहाससितं यशस्ते ॥

कस्यापि.

२४९५

त्वद्बाहुदण्डकरवालविदारितारि-
मातङ्गकुम्भदलनच्युतमौक्तिकौघैः ।
रेजे भवत्परिगृहीतविपक्षलक्ष्मी-
धम्मिल्लपुष्पनिकरैरिव रङ्गभूमिः ॥

हर्षदत्तस्य.

२४९६

याते शमं रजसि जातजलाभिषेका
धौताम्बराः स्फुरितपाण्डुपयोधरान्ताः ।
पत्युः प्रजार्थमधुना तव पुष्पवत्यो
वाञ्छन्ति संगममिमाः ककुभश्चतस्रः ॥

मातङ्गदिवाकरस्य.

२४९७

येन व्यधीयत करालकृपाणपट्ट-
व्याघट्टनोत्फलितभीमभटोत्तमाङ्गैः ।
वैरिप्रतापतपनोरुयशःशशाङ्क-
ग्रासादरेण युधि राहुपरंपरेव ॥

प्रकाशदत्तस्य.

२४९८

आश्चर्यधामभिरतीव गुणैः किमेत-
ज्जालं त्वया विरचितं यदपूर्वमेव ।
चेतांसि मूर्तिरहितान्यपि चञ्चलानि
बध्नाति यच्छ्रुतिगतं तदपूर्वमेव ॥

वल्लभदेवस्य.

२४९९

रत्नाकरोऽपि न च जातु भवान्समुद्रो
नो गोत्रभिच्च विबुधानवसि प्रयत्नात् ।
नित्यं वृषेण चरसीह न कृत्तिवासाः
सर्वप्रजापतिरपङ्कजमध्यवर्ती ॥

कय्यटस्य.

२५००

कुन्दं क्षणक्षयि कलङ्कि शशाङ्कबिम्बं
क्षीरं विकारि जडसंगति हंसवृन्दम् ।
हाराः सरन्ध्रवपुषो धवलद्युतीनां
केनोपमां व्रजतु नाथ यशस्त्वदीयम् ॥

२५०१

त्वदरिपुरविचित्रभित्तियोषि-
न्मदनपुरे विनिवेशितैकपाणिः ।
अपरकरगृहीतचर्मदण्डः
करसुरतं कुरुते पुलिन्दवर्गः ॥

२५०२

पृथुरसि गुणैः कीर्त्या रामो नलो भरतो भवा-
न्महति समरे शत्रुघ्नस्त्वं क्षितौ जनकः स्थितः ।
इति सुचरितैः कीर्तिं बिभ्रच्चिरंतनभूभृतां
कथमसि न मांधाता देव त्रिलोकविजय्यपि ॥

कस्यापि.

२५०३

घटयसि घनकालं देव कस्मादकस्मा-
द्भ्रुकुटिकथितकोपोऽप्यभ्यमित्रं यियासुः ।
न पुनरपि तु कुर्युः पङ्किलानेव मार्गा-
नविरतमदधारादुर्दिनैर्दन्तिनस्ते ॥

लुब्धकापरनाम्नो विक्रान्तिवर्मणः.

२५०४

अकालधृतमानसव्यतिकरोत्सवैः सारसै-
रकाण्डपटुताण्डवैरपि शिखण्डिनां मण्डलैः ।
दिशः समवलोकिता रभसनिर्भरप्रोल्लस-
द्भवत्पृथुवरूथिनीजनितभूरजःश्यामलाः ॥

२५०५

यदपि निरायुधा यदपि सर्वजनैर्वियुता
यदपि पदातयः पथिषु केषु न पर्यटिताः ।
तदपि सहेतयस्तदपि संप्रति सानुचरा-
स्तदपि सवारणास्तव कथं विहरन्त्यरयः ॥

एतौ प्रकाशवर्षस्नोर्दर्शनीयस्य.

२५०६

यशःकुसुमवाटिका गुणनिधानमञ्जूषिका
कलाकमलदीर्घिका कलितरुप्रवालाशनिः ।
द्विषत्तिमिरचन्द्रिका वरविलासिनीचेतसां
वशीकरणवर्तिका कुशलिनी तनुस्तावकी ॥

२५०७

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा मदस्य च हेतवो
व्रजति पुरुषो यैरुन्मादं त एव तवाङ्कुशाः ॥

कयोरपि.

२५०८

यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रतां
त्वां प्रत्येव बिभर्ति यश्च किरति क्रूरध्वनिं निष्ठुरः ।
दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन्गुणं
विख्यातः स्फुटमेक एव हि भवान्सीमा गुणग्राहिणाम् ॥

२५०९

युष्मद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं
सङ्ग्रामाङ्गणसीम्नि जङ्गमगिरिस्तोमभ्रमाधायिभिः ।
पृथ्वीन्द्रः स पृथुर्भवद्रणरसप्रेक्षोपनम्रामर-
श्रेणीमध्यचरः पुरः क्षितिधराक्षेपाय धत्ते धियम् ॥

एतौ श्रीहर्षस्य.

२५१०

देव त्वद्विजयं निराकृतभयं प्रौढप्रतापालयं
क्रान्तक्ष्मावलयं कृतारिविलयं श्रुत्वा सुराधीश्वरः ।
गुप्तं गच्छति नेच्छति प्रतिवचः प्रेम्णा गुरुं पृच्छति
त्राणं वाञ्छति मूर्छति प्रतिमुहुः शच्यां दृशं यच्छति ॥

कस्यापि.

२५११

देव त्वद्यश एव किं सितसितं रामे शशाङ्के मरु-
द्वाहे स्वर्गगजे हरे फणिपतौ वाण्यां वृषे भे रुचिः ।
अन्येषां तु तदम्बरे तदुदरे तद्यञ्जने तन्मदे
तत्कण्ठे च तदीक्षणे तदलके तत्पोत्रके तत्पथि ॥

शाकल्यपल्यस्य.

२५१२

त्वद्यात्रासमयेऽतिदुर्धरगतेः सैन्यस्य संमर्दतो
द्राक्पिष्टेऽपि शिरोगणे गुणयुगं जज्ञे फणाभृत्पतेः ।
प्रापद्भूपरमाणुभिस्तरलितैः कालुष्यमक्ष्णां न य-
द्भृङ्गस्य च कारणं यदश्रृणोन्नो पत्तिकोलाहलम् ॥

मङ्खस्य.

२५१३

सङ्ग्रामाङ्गणसंगतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरमला कीर्त्या च लोकत्रयम् ॥

२५१४

देवाकर्णय नाकिनां पुरि नृणां लोके पुरे भोगिना-
मासन्केचन सन्ति केचन तथा स्थास्यन्ति ये केचन ।
तन्मध्ये न बभूव नास्ति भविता तादृङ्न नीतौ नतौ
कान्तौ काव्यरतौ नुतौ रिपुहतौ कीर्तौ न यस्ते समः ॥

२५१५

भूपालाः शशिभास्करान्वयभुवः के नाम नासादिता
भर्तारं पुनरेकमेव हि भुवस्त्वां देव मन्यामहे ।
येनाङ्गं परिमृष्य कुन्तलमथाकृष्य व्युदस्यायतं
चोलं प्राप्य च मध्यदेशमधुना काञ्च्यां करः पातितः ॥

मयूरस्य.

२५१६

त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति द्विष-
स्त्वं बाणान्दश पञ्च मुञ्चसि निजान्मुञ्चन्ति शस्त्राणि ते ।
ते देवीपतयस्त्वदस्त्रनिहितास्त्वं मानुषीणां पति-
र्निन्दा तेषु कथं स्तुतिस्त्वयि कथं श्रीकर्ण निर्णीयताम् ॥

कस्याचिद्दाक्षिणात्यस्य ।

२५१७

अर्थिभ्रंशबहूभवत्फलभरव्याजेन कुब्जायितो
देव त्वय्यतिदानभाजि कथमप्यास्तां स कल्पद्रुमः ।
आस्ते निर्व्ययरत्नसंपदुदयोदग्रः कथं याचक-
श्रेणीवर्जनदुर्यशोनिविडितव्रीडस्तु रत्नाचलः ॥

२५१८

दूरं श्वेतगुणैरहंकृतिभृतां जैत्राङ्ककारे चर-
त्यस्मिंस्त्वद्यशसि प्रयाति कुमुदं बिभ्यन्न निद्रां निशि ।
धम्मिल्ले किमु मल्लिकासुमनसां माल्यं भिया लीयते
पीयूषद्रवकैतवाद्धृतदरः शीतद्युतिः स्विद्यति ॥

२५१९

युष्मद्गन्धगजस्तृषाम्भसि भृशं कण्ठान्तमज्जत्तनुः
फेनैः पाण्डुरितः स्वदिक्करिजयक्रीडायशःस्पर्धिभिः ।
दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः कराम्भोवमि-
व्याजादभ्रमुवल्लभेन विरहं निर्वापयत्यम्बुधेः ॥

२५२०

आस्ते दामोदरीयामियमुदरदरीं यावलम्ब्य त्रिलोकी
संमातुं शक्तिमन्ति प्रथिमभरवशादत्र नो त्वद्यशांसि ।
तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्म-
च्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥

२५२१

मयि स्थितिर्नम्रतयैव लभ्यते
दिगेव च स्तब्धतया विलङ्घ्यते ।

इतीव चापं दधदाशुगं क्षिप-
न्नयोपदेष्टासि रणे द्विषामपि ॥
२५२२
रिपूनवाप्यापि गतोऽवकीर्णितां
भवान्न यावज्जनरञ्जनव्रती ।
भृशं विरक्तानपि रक्तवत्तरा-
न्निकृत्य यत्तानसृजासृजद्युधि ॥
२५२३
न तूणादुद्धारे न गुणघटने न श्रुतिशिखं
समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि ।
नृणां दृश्ये देव क्वचन विशिखान्किं तु पतित-
द्विषद्वक्षोरन्ध्रैरनुमितिरमून्गोचरयति ॥
२५२४
न पाहि पाहीति यदब्रवीरमुं
ममौष्ठ तेनैवमभूदिति क्रुधा ।
रणक्षितौ ते किमु शत्रुमूर्धभि-
र्विदश्य दन्तैर्निजमोष्ठमास्यते ॥
२५२५
भुजेऽपसर्पत्यपि दक्षिणे गुणं
महेषुणादाय पुरः प्रसर्पिणे ।
धनुः परीरम्भमिवातिसंमदा-
त्तवाहवे दित्सति वामबाहवे ॥
२५२६
देवारिप्रकरः शरश्च भवतः संख्ये पतन्तावुभौ
सीत्कारं च न संमुखौ रचयतः कम्पं च न प्राप्नुतः ।
तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्ति यन्मुक्तयो-
रेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतम् ॥

२५२७

तादृग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्तृतां
शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे वाडवः ।
व्योमव्यापिविपक्षराजकयशस्तारापराभावुकः
कासां देव न स प्रतापतपनः पारं गिरां गाहते ॥

एते श्लोका नैषधकर्तुः श्रीहर्षस्य-

२५२८

श्रीसंनिधानविलसद्रुचिरब्जशङ्ख-
चक्राङ्कपाणिरसुरक्षणहारिचेष्टः ।
बह्वीः समा अबलभद्रधरोऽपि राज-
ञ्छ्रीया अचिन्त्यचरितः पुरुषोत्तमस्त्वम् ॥

कपिलदामोदरस्य-

२५२९

एष विशेषः स्पष्टो वह्नेश्च त्वत्प्रतापवह्नेश्च ।
अङ्कुरति तेन दग्धं दग्धस्यानेन नोद्भवो भूयः ॥

२५३०

ददतो वाञ्छितमर्थं सदनुरक्त तव गृहं त्यक्त्वा ।
स्त्रीचापलेन कीर्तिर्नग्नासक्ता गता ककुभः ॥

२५३१

अटता पृथिवीमखिलामिदमाश्चर्यं मया दृष्टम् ।
धनदोऽपि नयननन्दन परिहरासि यदुग्रसंपर्कम् ॥

२५३२

इदमपरमद्भुततमं युवतिसहस्रैर्विलुप्यमानस्य ।
वृद्धिर्भवति न हानिर्यत्तव सौभाग्यकोषस्य ॥

२५३३

प्रकृतिलघोर्येन कृता जघन्यवर्णस्य गौरवापत्तिः ।
जघनचपला यदार्याः स पिङ्गलस्ते कथं तुल्यः ॥

२५३४
दैन्यमिदं यच्छ्लाघा क्रियते रक्षसापि न समस्य ।
न सबलमकरोद्योषिति भवांस्तु भुङ्क्ते प्रसह्य रिपुलक्ष्मीम् ॥
एते दामोदरगुप्तस्य.

२५३५
कुन्दः कन्दलितव्यथं विचकिलः कम्पाकुलं केतकः
सातङ्कं मदनः सदैन्यमलसं मुक्तोऽतिमुक्तद्रुमः ।
मोक्तुं किं तु न पारितस्तव रिपुस्त्रीभिः पुरीनिर्गमे
तत्कालं कृतमाधवीपरिणयः सत्केसरः केसरः ॥
शम्भोः.

२५३६
लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥

२५३७
किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥

२५३८
अत्यन्तकृष्णः स विनिर्मलस्त्वं
स वामनः सर्वत उन्नतोऽसि ।
जनार्दनो यत्स दयापरस्त्वं
विष्णुः कथं वीर तवोपमानम् ॥
प° श्रीबकस्य.

२५३९
राजन्यशो हिममिषाच्छिशिरे यदासी-
द्भूमौ लसत्किमुत तद्बलिसद्म यातम् ।

तत्राप्यमादित्र ततोऽद्य मधौ त्वदीयं
प्रोद्भिन्नमाशु धरणेः कुसुमच्छलेन ॥

२५४०

मेघाडम्बरमम्बरं यदि तदा निर्नष्टशोभा वयं
नित्यं तीक्ष्णकरेण तेन दिवसे तत्राप्यहो बाधिताः ।
स्वामी नः शशभृल्लयोदयहतो दुःखादितीवागता
उद्याने नरदेव सेवनपराः पुष्पच्छलात्तारकाः ॥

२५४१

यद्ग्रीष्मो विलसत्प्रतापमहिमा यज्जीवनाद्यो भृशं
संपन्नो घनकाल एष सफला चेयं शरन्निर्मला ।
हेमन्तः शिशिरो घनाम्बरधरस्त्वत्सेवयेत्याशया
पुष्पौघैः किमु देव सेवनपरः स्थैर्येच्छुरास्ते मधुः ॥

२५४२

श्रीमन्नाथ तवानने भगवती वाणी नरीनृत्यते
तद्द्रष्टुं कमला समागतवती लोलेति बद्धा गुणैः ।
कीर्तिश्चन्द्रकरीन्द्रदन्तकुमुदक्षीरोदनीरोपमा
त्रासादम्बुनिधिं विलङ्घ्य भवतो नाद्यापि विश्राम्यति ॥

दाक्षिणात्यस्य कस्यापि.

२५४३

अधर्ममन्यत्र महीतलेऽस्मि-
न्संक्षोभहेतुं मलिनं विचार्य ।
निष्कासनायास्य रुषेव देव
सितं यशः सर्वदिशः प्रयाति ॥

पं॰ श्रीबकस्य.

२५४४

किं वृत्तान्तैः परगृहगतैः किं तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।

गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥

मातङ्गदिवाकरस्य.

२५४५

अनिःसरन्तीमपि गेहगर्भा-
त्कीर्तिं परेषामसतीं वदन्ति ।
स्वैरं चरन्तीमपि च त्रिलोक्यां
त्वत्कीर्तिमाहुः कवयः सतीं तु ॥

२५४६

आसीन्नाथ पितामही तव मही माता ततोऽनन्तरं
संप्रत्येव हि साम्बुराशिरशना जाया जयोद्भूतये ।
पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा
युक्तं नाम समस्तशास्त्रविदुषां लोकेश्वराणामिदम् ॥

मातङ्गदिवाकरस्य.

२५४७

अव्यापाररता वसन्तसमये ग्रीष्मे व्यवायप्रियाः
सक्ताः प्रावृषि पल्वलाम्भसि नवे कूपोदकद्वेषिणः ।
कट्वम्लोष्णरताः शरद्यधिभुजो हेमन्तनिद्रालसाः
स्वैर्दोषैरपचीयमानवपुषो नश्यन्तु ते शत्रवः ॥

वैद्यहरिचन्द्रस्य.

२५४८

तन्वीमुज्झितभूषणां कलगिरं रोमोद्गमं बिभ्रतीं
वेपन्तीं व्रणिताधरां विवसनां सीत्कारमातन्वतीम् ।
दोर्भ्यां चण्डतुषारपातसभयामालिङ्ग्य कण्ठे भृशं
स्वां मूर्तिं दयितामिवातिरसिकां त्वद्विद्विषः शेरते ॥

२५४९

दानं दृढतरमुष्टेः श्रीरुज्झितकोषतो यशो मलिनात् ।
धाराधरात्प्रतापस्त्वदसेरितिचित्रमेतदवनिपते ॥

२५५०

नाकारमुद्वहसि नैव विकत्थसे त्वं
दित्सां न सूचयसि मुञ्चसि सत्फलानि ।
निःशब्दवर्षणमिवाम्बुधरस्य राज-
न्संलक्ष्यते फलत एव तव प्रसादः ॥

अयं मातृगुप्तस्य.

२५५१

इन्द्रो यच्छतमन्युरस्ति दहनो यत्पावकोऽप्यन्तकः
कीनाशो धनदो विमाननिरतः पाशी जलानां पतिः ।
ईशः कामहरश्चलो यदनिलो यन्नैर्ऋतो राक्षस-
स्तन्नान्योऽवनिलोकपाल भवतः कश्चित्समः स्याद्गुणैः ॥

प° श्रीवकस्य.

२५५२

देवोर्वीरमणेन्द्र पार्वणशशिद्वैराज्यसज्जं यशः
सर्वाङ्गोज्ज्वलशार्वपर्वतसितश्रीगर्वनिर्वासि यत् ।
तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रियः
पर्यायः किमु दुग्धसिन्धुपयसां सर्वानुवादः किमु ॥

२५५३

निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटावट-
स्थानस्थायुकमौक्तिकोत्करकिरः कैर्देव नायं करः ।
उन्नीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तुरंगक्षुर-
क्षुण्णासु क्षितिषु क्षिपन्निव यशःक्षोणीक्षबीजव्रजम् ॥

नैषधकर्तुः.

२५५४

उग्रग्राहमुदन्वतो जलमतिक्रामत्यनालम्बना
व्योम्नि भ्राम्यति दुर्गमक्षितिभृतां प्राग्भारमारोहति ।
कीर्णं याति विषाकुलैरहिकुलैः पातालमेकाकिनी
त्वत्कीर्तिर्यदतो नरेन्द्र कृतकं मन्ये भयं योषिताम् ॥

२५५५

उद्दामाम्बुदगर्हितान्धतमसप्रध्वस्तदिङ्मण्डले
काले यामिकजाग्रदुग्रसुभटव्याकीर्णकोलाहले ।
कर्णस्यासुहृदर्णवाम्बुवडवावह्नेर्यदन्तःपुरा-
दायातासि तदम्बुजाक्षि कृतकं मन्ये भयं योषिताम् ॥

कयोरपि.

२५५६

सा ख्यातास्ति जगत्त्रये सुरनदी सा शंभुचूडामणौ
शेषा शेषतुषारसोमसुषमाचौरी गुणैर्निर्मलैः ।
युक्ता सा भवदीयकीर्तितुलनौचित्यं भजेत्सा न चे-
द्भूपालक्षणदेश संततमधोयानैकताना भवेत् ॥

प० कृष्णकस्य.

२५५७

दिग्दन्तावलमण्डली विदलति स्वर्णाद्रिरुत्कम्पते
क्षोणी क्षुभ्यति बिभ्यति प्रतिदिशं सर्वेऽपि रत्नाकराः ।
लङ्कातङ्कमुपैति शेवधिपतिः शङ्कां परां गाहते
दानाय त्वयि राजशेखरमणे दर्भं समुद्बिभ्रति ॥

दाक्षिणात्यस्य कस्यापि.

२५५८

यत्कस्यामपि भानुमान्न ककुभि स्थेमानमालम्बते
जातं यद्वनकाननैकशरणप्राप्तेन दावाग्निना ।
एषा त्वद्भुजतेजसा विजितयोस्तावत्तयोरौचिती
धिक्कं वाडवमम्भसि द्विषि भिया येन प्रविष्टं पुनः ॥

२५५९

अकर्णधाराशुगसंभृताङ्गतां
गतैररित्रेण विना तवारिभिः ।
विधाय तावत्तरणेर्भिदामहो
निमज्ज्य तीर्णः समरे भवार्णवः ॥

एतौ नैषधकर्तुः.

२५६०

अहं सदा प्राणसमं महीभुजां
स मां सदा वेत्ति नृपस्तृणोपमम् ।
इतीव कर्णेषु सुवर्णमर्थिनां
स्वखेदमाख्यातुमिवास्ति भूपते ॥

२५६१

त्वदाप्तचामीकरचारुभूषण-
प्रभावलीसंगमपिङ्गलत्विषाम् ।
समुन्मिषद्दाहभियेव दुर्गति-
र्जहाति सङ्गं ज्वलतामिवार्थिनाम् ॥

एतौ बिह्लणस्य.

२५६२

मुखेनेन्दुं धत्से सकलमकलङ्कं न शिरसा
द्विजिह्वः क्रूरोऽसौ निपतति न कर्णे न कटके ।
प्रभूताप्येषा ते जनयति न भूतिः परुषता-
मपूर्वं शर्वत्वं तव निरपवादं कुत इदम् ॥

कस्यापि.

२५६३

इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारि-
स्त्वन्नागानां मदजलमषीभाञ्जि गण्डस्थलानि ।
अद्याप्युर्वीवलयतिलक श्यामलिम्नानुलिप्ता-
न्याभान्त्येवं वद धवलितं किं यशोभिस्त्वदीयैः ॥

राजशेखरकवेः.

२५६४

कुरबक कुचाघातक्रीडारसेन वियुज्यसे
बकुलविटपिन्स्मर्तव्यं ते मुखासवसेवनम् ।
चरणघटनाशून्यो यास्यस्यशोक सशोकता-
मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥

रत्नाकरस्य.

२५६५

तीव्राताम्ररुचो रवेः कथमिदं स्वप्नेऽपि संभावना
नो युक्त्यानुगतः प्रभातसलिलस्नानेन सोऽयं विधिः ।
सान्द्रानन्दविधायिशीतमधुरव्यापारगौरात्मना
नूनं त्वद्यशसैव संप्रति शशी शीर्णः पुनः पूरितः ॥

श्रीकल्लटकवेः

२५६६

अर्थाकृष्टधियः पदं रचयतः शब्दावधानात्मनः
संधिच्छेदविधाननिर्गमविधिव्यापारमातन्वतः ।
मा मां कश्चिदिह ग्रहीदिति मुहुः साशङ्कमापश्यत-
श्चौरस्येव कवेर्भयं भवति यत्तद्विद्विषामस्तु वः ॥

२५६७

साशङ्कस्य समाकुलीकृतमतेरत्यन्तनिस्तेजसः
खिन्नाङ्गस्य विकम्पमानहृदयस्यारूढमन्योर्भृशम् ।
लज्जां संत्यजतः क्रमं विमृषतो विघ्नान्बहून्पश्यतः
क्लेशो योऽर्थिजनस्य वक्तुमनसो भूयात्स ते विद्विषाम् ॥

२५६८

श्लोकः कस्य ममैव साधु सुकवे भूयः सखे पठ्यता-
मस्यार्थः पुनरुक्तमेतदपरोऽप्येष प्रयोगोऽस्ति भोः ।
इत्येवं कुविदग्धवाक्यपरशुच्छिन्नोत्तमाशालता
दुःखं यत्कवयः प्रयान्ति नृपते तद्यान्तु ते शत्रवः ॥

२५६९

द्वारं वेत्रिभिरावृतं बहिरपि प्रक्लिन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन्सैव चिरंतनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥

२५७०

किं हास्येन न मे प्रयास्यसि पुरः प्राप्तश्चिरादर्शनं
नेयं निष्करुण प्रवासरुचिता केनासि दूरीकृतः ॥

स्वप्नान्तेष्विति ते वचः प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति शून्यबाहुयुगलस्तारं रिपुस्त्रीजनः ॥

२५७१

तं राजानमकाण्ड एव चपले त्यक्त्वा तथा वल्लभं
पश्चात्तापविदीर्यमाणहृदया किं सांप्रतं रोदिषि ।
इत्थं वृष्टिजलप्रवाहनयना शून्ये पुरे विद्विषां
चित्रस्था पुरतो विलोक्य पथिकैर्लक्ष्मीस्तवालभ्यते ॥

२५७२

आक्षिप्तैः प्रतिपक्षभूमिपतिभिः क्रुद्धेन देव त्वया
वित्रस्तैर्न महायुधानि विविधान्याविष्क्रियन्ते युधि ।
दूरावर्जितमौलयस्तव पुरस्तन्वन्ति ते केवलं
नानाकारकिरीटरत्ननिकरैरिन्द्रायुधानि क्षितौ ॥

२५७३

कस्मात्सत्यवतीसुतेन मुनिना नोक्तं भविष्यत्कथा-
मध्ये रूपमनादिमध्यनिधनस्येदं हरेर्मानुषम् ।
इत्थं व्युत्थितविश्वकण्टकचमूनिर्मूलनव्यापृतं
संग्रामाम्बरसूर्यमम्बरचरास्त्वां वीक्ष्य संशेरते ॥

एते केषामपि.

२५७४

सौभाग्यस्य समर्पणेन तिमिरातङ्कच्छिदा तेजसा
सामर्थ्येन विषानलादिजयिना तैस्तैस्तथान्यैर्गुणैः ।
श्लाघ्यत्वं दधते नृपैः शिरसि ये सर्वैर्धृतास्तान्मणी-
न्पद्भ्यां संस्पृशसीत्यहो फलमिदं नीतेरवाप्तं त्वया ॥

अमृतदत्तस्य.

२५७५

अम्भोराशिरिवासि सत्त्वनिलयो नो मन्दरक्षोभवा-
न्कल्याणप्रकृतिः सुमेरुरिव किं देवः सुरापाश्रयः ।
सच्छायो न तु रूढदुस्तरलतस्त्वं कल्पवृक्षो यथा
तैः कुर्वन्ति तुलां तथापि भवतो मूढाः कवीनां धियः ॥

२५७६

नो कामः प्रतिहन्यते प्रणयिनां स्वप्नेऽपि नाथ त्वया
नैवाधः कुरुषे वृषं द्विरसना व्याला न ते वल्लभाः ।
नो बह्वयस्तव मूर्तयो न च तनुर्नित्यं जडानुग्रह-
व्यग्रा नो विषमा च दृक्त्वमथ च ख्यातः क्षितावीश्वरः ॥

२५७७

राजञ्छ्रीः समलंकृता तव धिया सा चापि विद्वत्तया
विद्वत्ता नयवित्तया परमया नीतिश्च शौर्येण ते ।
शौर्यं ते यशसा यशश्च चरितैश्चेष्टाश्च ते तेजसा
तेजश्च स्वकुलोद्गतं कुलमपि श्लाघ्यं भवज्जन्मना ॥

२५७८

गर्जित्वा बहुदूरमुन्नतिभृतो मुञ्चन्ति वार्यम्बुदा
भद्रस्यापि गजस्य दानसमये संजायते दुर्मदः ।
पुष्पाडम्बरयापनेन ददति प्रायः फलानि द्रुमा
नोत्सेको न मदो न कालहरणं दानप्रवृत्तस्य ते ॥

एते केषामपि.

२५७९

मर्यादानियमो द्वयोरपि धृता द्वाभ्यामपीयं मही
भीतैर्भोगिभिरप्युभावनुगतौ रत्नाकरौ द्वावपि ।
एवं ते जलधेश्च तुल्यगुणयोरेको विशेषो महा-
ल्लाँवण्यातिशयेन यत्स विरसस्तेनैव हृद्यो भवान् ।

बन्धोः.

२५८०

बद्धाः केचिदधोमुखत्वमपरे नीताः समारोपिताः
केचित्संभृतविग्रहा अपि बलादानीय रिक्तीकृताः ।
अन्ये बन्धनतश्चिरात्कथमपि भ्रष्टा निरालम्बना-
स्त्वच्चक्रे रिपवोरघट्टघटिकायन्त्रक्रमं बिभ्रति ॥

२५८१

निष्पत्तिं करपीडनेन गमिताश्चक्रच्युतास्ताडिता
दग्धा भूतिकृतास्पदेन भवता नित्यं प्रतापाग्निना ।
बद्धाः कण्ठतलेषु रज्जुवलयैर्भूयो धरां ग्राहिता
भग्नाः संप्रति नाथ पार्थिवघटाः किं कर्परैर्वीक्षितैः ॥

२५८२

यान्त्येके परपुष्टतां बलिभुजो भ्राम्यन्ति केचिन्मही-
मन्ये बिभ्रति लावकत्वमपरे जाता वने वर्तकाः ।
केचित्खञ्जनका भवन्ति सभयैर्मार्गप्रयाणैरहो
तिर्यक्तामपि लम्भितैस्त्वदरिभिर्लब्धा न पक्षोन्नतिः ॥

२५८३

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥

२५८४

यल्लावण्यमयत्वमेव जलधेर्जातं परं दूषणं
यच्चैषा शशलक्ष्मणः परिणता पृथ्वी कलङ्कायते ।
यत्संकल्पफलप्रदोऽप्यहृदयश्चिन्तामणिर्वेधसा
तत्त्वामप्रतिसंविधातुमनसा साकूतमाचेष्टितम् ॥

२५८५

आमोदाहृतभृङ्गपक्षपवनप्रेङ्खद्रजःपिञ्जरे
पद्मे श्रीर्वसतीति नाद्भुतमिदं रम्यं प्रकृत्यैव तत् ।
तच्चित्रं यदरातिकण्ठरुधिरप्रक्लिन्नतीक्ष्णस्फुर-
द्धारेऽसौ भवतश्चिरं निवसति स्त्रीत्वेऽपि हृष्टा सती ॥

२५८६

तन्वी विग्रहिणी कलङ्करहिता मुक्ताफलालंकृता
सद्वंशा गजगामिनी पुलकिता दन्तप्रभाभासिता ।

श्यामा चारुपयोधरा सुरुचिरा पुंसां मनोहारिणी
कामं वक्षसि ते पतत्वहरहः खड्गाग्रधारा रिपोः ॥

२५८७

ते गच्छन्ति महापदं भुवि पराभूतिः समुत्पद्यते
तेषां तैः समलंकृतं निजकुलं तैरेव लब्धा क्षितिः ।
तेषां द्वारि नदन्ति वाजिनिवहास्ते भूषिताः प्रत्यहं
ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥

२५८८

सिक्तायां वीरकण्ठस्थलबहलगलद्रक्तधाराम्बुवर्षै-
र्माद्यन्मातङ्गकुम्भोद्दलनविलुलितैर्मौक्तिकैः पुष्पितायाम् ।
संग्रामोद्यानभूमौ तुरगखुरमुखोत्खातकृष्टस्थलायां
जातं त्वत्खड्गवल्ल्यां फलमतुलरसास्वादहृद्यं जयश्रीः ।

२५८९

भास्वद्रत्नप्रदीपे वरशयनगतो वासवेश्मन्युदारे
कान्तामालिङ्ग्य तुङ्गस्तनकलशयुगस्पर्शरोमाञ्चिताङ्गः ।
स्वप्ने नीवीं विमोक्तुं चपलयति करं यावदुत्कस्तवारि-
स्तावत्प्रस्तारक्रान्तास्थितकठिनकुशप्रान्तविद्धो विबुद्धः ॥

२५९०

न प्राप्तो रत्नपात्रस्थितमधुकणिकासंगमामोदलाभो
नो वा नारीकपोले विलसितममले कर्णपूरीकृतेन ।
इत्थं त्वच्छत्रुगेहे वनकरिकषणोन्मूलितं दीर्घिकाया-
मुच्चैः किंजल्करेणुभ्रमदलिविरुतैरुत्पलं रोदितीव ॥

२५९१

नाहं तुल्यः कृतेन प्रसभमकपटाक्रान्तलोकः प्रभुर्मे
त्रेता नैवास्मि यस्मान्मम भुवनपतिर्नैव दारापहारी ।
का स्पर्धा द्वापरे मे स्वजनसुतसुहृद्बन्धुघाती न देवो
राजन्नित्थं कृतादीनुपहसति कलिस्त्वद्यशोंशुच्छलेन ॥

२५९२

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः सुचिरपरिचिता नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥

बाणस्य.

२५९३

प्रोद्यद्वालाङ्कुरश्रीर्दिशि दिशि दशनैरेभिराशागजानां
रोहन्मूलातिगौरैरुरगपतिफणैरत्र पातालकुक्षौ ।
अस्मिन्नाकाशदेशे विकसितकुसुमा राशिभिस्तारकाणां
नाथ त्वत्कीर्तिवल्ली फलति फलमिदं बिम्बमिन्दोः सुधार्द्रम् ॥

वसुधरस्य.

२५९४

आ स्वर्लोकादुरगनगरं नूतनालोकलक्ष्मी-
मातन्वद्भिः किमिव सिततां चेष्टितैस्ते न नीतम् ।
अप्येतासां रमणविरहे त्रिद्विषत्कामिनीनां
यैरानीता नखपदमयी मण्डना पाण्डिमानम् ॥

कस्यापि.

२५९५

लग्नं रागावृताङ्ग्या सुदृढमपि ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥

हर्षदत्तस्य.

२५९६

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते प्रविलसति पुरो वृद्धया किं मया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥

२५९७

तन्मे निष्प्रश्रयत्वं स खलपरिचयः सा परेष्वभ्यसूया
तत्स्वभ्रूविभ्रमोत्थं सहजमपि तथा चापलं लोकनिन्द्यम् ।
सर्वं सद्भर्तृयोगादपगतमधुना तात नैवास्मि शोच्या
लक्ष्मीसंदेशमेवं गदितुमिव गता कीर्तिरम्भोनिधिं ते ॥

२५९८

शान्त्यै दर्पवतां जयाय जगतां संपत्तये याचतां
संमानाय सतां हिताय महतां तापाय पृथ्वीभृताम् ।
सोल्लासेन सकौतुकेन शमितध्यानेन दूरीकृत-
स्वाध्यायेन समाप्तसर्वतपसा त्वं वेधसा निर्मितः ॥

अयं शंभुकवेः.

२५९९

आकाराहीनकान्तिर्निधनविरहितो योगदोल्लासभागी
विक्रान्तो विश्वतुल्यः कमलकलितदृग्विभ्रमोत्कृष्टमूर्तिः ।
नानाशापूर्णकीर्तिः सुखरसमयितो वारणाक्रान्तदेहो
यादृग्देव त्वमेवं भवतु रिपुगणोऽप्यादिवर्णप्रलोपात् ॥

प० श्रीबकस्य.

२६००

शौर्यश्रीकेशपाशः करिवदनमिलन्मौक्तिकव्यक्तपुष्पः
क्षोणीरक्षाभुजंगः कुलशिखरिलुठत्कीर्तिनिर्मोकपट्टः ।
शत्रुव्रातप्रतापप्रलयजलधरः स्फारधाराकरालः
प्रीत्या लक्ष्मीकटाक्षः कुवलयविजयी देवपाणौ कृपाणः ॥

कस्यापि.

२६०१

धूलीभिर्दिवमन्धयन्बधिरयन्नाशाः खुराणां रवै-
र्वातं संयति खञ्जयञ्जवजयैः स्तोतॄन्गुणैर्मूकयन् ।
धर्मोपार्जनसंनियुक्तजगता देव त्वयाधिष्ठितः
सान्द्रोत्फालमिषाद्विगायति पदा स्प्रष्टुं तुरंगोऽपि गाम् ॥

२६०२

विद्राणे रणचत्वरादरिगणे त्रस्ते समस्ते पुनः
कोपात्कोऽपि निवर्तते यदि भटः कीर्त्या गजत्युद्भटः ।
आगच्छन्नपि संमुखं विमुखतामेवाधिगच्छत्यसौ
देव त्वच्छुरिकारयेण झटिति च्छिन्नापसर्पच्छिराः ॥

२६०३

अन्तः संतोषबाष्पैः स्थगयति न दृशस्ताभिराकर्णयिष्य-
न्नङ्गे नानास्तिलोमा रचयति पुलकश्रेणिमानन्दकन्दाम् ।
न क्षोणीभङ्गभीरुः कलयति स शिरःकम्पनं तन्न विद्मः
शृण्वंस्त्वत्कीर्तिपूरान्कथमुरगपतिः प्रीतिमाविष्करोति ॥

२६०४

युष्मद्भीतारिनारी गिरिबिलविलसद्वासरा निःसरन्ती
स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्निद्रचन्द्रा ।
आक्रन्दद्भूरि यत्तन्नयनजलमिलच्चन्द्रहंसानुबिम्ब-
प्रत्यासत्तिप्रहृष्यत्तनयविहसितैराश्वसीन्न्यश्वसीच्च ॥

२६०५

द्वेष्याकीर्तिकलिन्दशैलसुतया नद्या भवद्दोर्द्वयी-
कीर्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे ।
तत्तस्मिन्विनिमज्ज्य बाहुजभटैरारम्भि रम्भापरी-
रम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥

२६०६

आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्तिः
सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रतापः ।
त्वत्तो वीरः परः कः पदयुगयुगपत्पातिभूपातिभूय-
श्चूडारत्नोडुपत्नीकरपरिचरणानन्दनन्दन्नखेन्दुः ॥

एते नैषधकर्तुः ।

२६०७

अपारपुलिनस्थलीभुवि हिमालये मालये
निकामविकटोन्नते दुरधिरोहणे रोहणे ।

महत्यमरभूधरे गहनकंदरे मन्दरे
भ्रमन्ति न पतन्त्यहो परिणता भवत्कीर्तयः ॥

२६०८

उर्वीं मौर्वीकिणभृति भवद्दोष्णि बिभ्रत्यशेषां
शान्तक्लान्तिः किमपि कुरुते नर्मणा कर्म कूर्मः ।
कृत्वा लीलापुलिनलवलीपल्लवग्रासगोष्ठीं
दिङ्मातङ्गाः सममथ सरिन्नाथपाथः पिबन्ति ॥

२६०९

किं मौनं ननु मेनके किमु रुजं धत्से शचि क्षामता
केयं वाचि घृताचि साचि किमिदं रम्भे मुखाम्भोरुहम् ।
याते त्वच्चरितामृते श्रुतिपथं गीर्वाणवामभ्रुवा-
मेवं देव खरस्मरज्वरजुषामुक्ताः सखीभिर्गिरः ॥

२६१०

यो वैरिष्वनलो नलो वसुमतीदीपो दिलीपोऽथ यो
यो मानेन पृथुः पृथुर्जगति यो निर्लाघवो राघवः ।
यः कीर्तौ भरतो रतो नृपगुणैर्यः शंतनुः शन्तनुः
संजाते त्वयि कस्य न क्षितिपते सर्वेऽपि ते विस्मृताः ॥

२६११

कर्पूरैरिव पारदैरिव सुधास्यन्दैरिव प्लाविते
जाते हन्त दिवापि देव ककुभां गर्भे भवत्कीर्तिभिः ।
धृत्वाङ्गे कवचं निबध्य शरधिं कृत्वा पुरो माधवं
कामः कैरवबान्धवोदयधिया धुन्वन्धनुर्धावति ॥

२६१२

व्याप्तव्योमतले मृगाङ्कधवले निर्धौतदिङ्मण्डले
देव त्वद्यशसि प्रशान्ततमसि प्रौढे जगत्प्रेयसि ।
कैलासन्ति महीभृतः फणभृतः शेषन्ति पाथोधयः
क्षीरोदन्ति सुरद्विपन्ति करिणो हंसन्ति पुंस्कोकिलाः ॥

२६१३

चैत्रं मा स्मर विस्मर स्मर रतिं किं सायकैर्मारकै-
र्गोधां मुग्ध बधान किं च जहिहि ज्याबन्धधीरं धनुः ।
देवेऽस्मिन्हि मुहुः स्मृतेऽपि न मतिर्नैव स्मृतिर्न स्थिति-
र्नासक्तिर्न धृतिर्न निर्वृतिरपि काप्यस्ति वामभ्रुवाम् ॥

२६१४

पद्भ्यामटितुमशक्ता निजभुवि मणिकुट्टिमेषु या चित्रम् ।
सा ते कथमरिवनिता कण्टकविकटाटवीष्वटति ॥

२६१५

आलेख्यं निजमुल्लिलेख विजने सोल्लेखया रेखया
संकल्पानकरोद्विकल्पबहुलाकल्याननल्पानपि ।
अद्राक्षीदपरप्रजापतिमतं चक्रे च तीव्रं व्रतं
त्वन्निर्माणविधौ कियन्न विदधे बद्धावधानो विधिः ॥

२६१६

कंदर्पे नडकूबरे कुमुदिनीकान्तेऽप्यवज्ञावतां
त्वत्सौन्दर्यकथासु तासु मरुतां वृत्तासु कौतूहलात् ।
प्राप्ता तानवमुर्वशी रतिरतिक्रान्ता हृता रोहिणी
जाता किं च खरस्मरज्वरभरारम्भापि रम्भातनुः ॥

२६१७

सोल्लासा अपि सोद्यमा अपि घनोत्कण्ठा अपि क्वापि नो
यान्ति श्यामनिशान्तरेऽपि रमणोपान्तं कुरङ्गीदृशः ।
सद्यस्त्वद्यशसा हि कुञ्जररदच्छेदच्छविच्छादिना
नीतं कान्तपुरंध्रिकुन्तलभरश्यामं विरामं तमः ॥

२६१८

उल्लेखं निजमीक्षते भणितिषु प्रौढिं परां शिक्षते
संधत्ते पदसंपदः परिचयं धत्ते ध्वनेरध्वनि ।
वैचित्र्यं विचिनोति वाचकविधौ वाचस्पतेरन्तिके
देव त्वद्गुणवर्णनाय कुरुते किं किं न वाग्देवता ॥

२६१९

श्रीखण्डद्रवनिर्झरन्ति हृदये पीयूषकल्लोलिनी-
निष्यन्दन्ति तनौ रसायनरसस्यन्दन्ति कर्णान्तरे ।
नासीरप्रसरन्ति दिक्परिसरे भूमण्डले मौक्तिक-
प्रस्तारन्ति सुधाकरन्ति गगनोत्सङ्गे भवत्कीर्तयः ॥

२६२०

किं राकेन्दुकरच्छटाभिरुदितं किं मौक्तिकैरुद्गतं
किं मल्लीमुकुलैः स्मितं विकसितं किं मालतीकुड्मलैः ।
रूढं किं रमणीविलासहसितैः किं तत्र कीर्णं सुधा-
स्यन्दैर्यत्र जगत्त्रयैकतिलक भ्रान्तं भवत्कीर्तिभिः ॥

२६२१

नोद्दामानि दिशां मुखानि न घनाभोगा नभोमण्डली
नैवोत्तालतलं रसातलतलं पृथ्वी न पृथ्वी पुनः ।
एतद्देव कथं नु कुञ्जररदच्छेदावदातास्तव
स्वैरं यान्ति च मान्ति च श्रुतिसुधाधारामुचः कीर्तयः ॥

२६२२

औदार्यं सधने नयोऽथ सुजने लज्जा कुलस्त्रीजने
सत्काव्यं वदने मदो द्विरदने पुंस्कोकिलः कानने ।
रोलम्बः कमले नखाङ्करचना कान्ताकपोलस्थले
तन्वी तल्पतले भवानपि विभो भूमण्डले मण्डनम् ॥

२६२३

कण्ठान्तः क्वणितं दिवाकरकरक्लान्त्या रजोविप्लवै-
स्तन्नेत्राञ्चलकुञ्चनं शितकुशप्रान्तक्षतैः सीत्कृतिः ।
श्वासोर्मिप्रचयो वनेचरभिया त्वद्वैरिवामभ्रुवा-
मेवं देव मरुस्थलीषु सुरतक्रीडानुरूपः क्रमः ॥

२६२४

रूपं यन्मदने द्युतिः शशिनि या गम्भीरता याम्बुधौ
यो मेरौ गरिमाथ या कमलिनीकान्ते प्रतापोन्नतिः ।

यो लक्ष्मीरमणे च विक्रमगुणस्तत्सर्वमेकत्र चे-
द्द्रष्टुं वाञ्छसि दृश्यतामयमितो देवस्त्रिलोकीमणिः ॥

२६२५

स ख्यातो जगति त्रिविक्रम इति त्वद्विक्रमा भूरय-
स्तेनैको निहतो बलिर्बलिशतध्वंसी भुजस्तावकः ।
तं वैकुण्ठमवैति को न जगतीं जेतुं त्वकुण्ठो भवा-
नस्त्येवं महदन्तरं तव तथा देवस्य दैत्यद्रुहः ॥

२६२६

प्रालेयैः स्नपयन्ति कल्पलतिकाः सेकाननेकानथ
श्रीखण्डाम्बुगलज्जलैरविरलैस्तन्वन्ति संतानके ।
सान्द्रैश्चन्द्रमणिद्रवैरपि विभो मन्दारवल्लीमञ्चं
सिञ्चन्त्यद्य भवत्प्रतापदहनत्रासेन नाकाङ्गनाः ॥

२६२७

कान्तारेषु च काननेषु च सरित्तीरेषु च क्ष्माभृता-
मुत्सङ्गेषु च पत्तनेषु च सरिद्भर्तुस्तटान्तेषु च ।
भ्रान्ताः केतकगर्भपल्लवरुचः श्रान्ता इव क्ष्मापते
कान्ते नन्दनकन्दलीपरिसरे रोहन्ति ते कीर्तयः ॥

२६२८

राकेन्दोरुदयः किमेष किमयं गौरीगुरुर्वा गिरिः
क्षीरोदः किमयं किमेष पुरजिल्लीलाविलासोरगः ।
किं मन्थाद्रिरयं सुधाजलनिधेर्धौतस्तरङ्गैरिति
त्वत्कीर्तौ वसुधापुरंदर गताः संदेहिनो देहिनः ॥

एते शंभुकवेः ।

२६२९

सिन्धोर्जैत्रमयं पवित्रमसृजत्त्वत्कीर्तिपूर्ताद्भुतं
यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः ।
यद्बिन्दुश्रियमिन्दुरञ्चति जलं चाविश्य दृश्येतरो
यस्यासौ जलदवतो स्फटिकभूर्जागर्ति यागेश्वरः ॥

२६३०

युष्मत्कीर्तिविवर्तधौतनिखिलत्रैलोक्यनिर्वासितै-
र्विश्रान्तिः कलिता कथासु जरतां श्यामैः समस्तैरपि ।
जज्ञे कीर्तिमयादहो भयभरैरस्मादकीर्तेः पुनः
सेयं नास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिम् ॥

श्रीहर्षस्य.

२६३१

सुराणां पातासौ स पुनरतिपुण्यैकरसिको
ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः ।
करस्तस्यात्यन्तं स्पृशति शतकोटिप्रणयितां
स सर्वस्वं दाता तृणमिव सुरेशं विजयते ॥

सुबन्धोः.

२६३२

कृष्णोऽयं मथनार्तिकृत्प्रतिदिनं सुप्तोऽस्य किं सेवया
सेव्योऽन्योऽन्तरविद्ययापरमतिर्नित्यप्रबुद्धो मया ।
इत्थं ह्याकलयन्विलोक्य हि तथा प्राप्तं यशस्तावकं
राजन्क्षीरनिधिस्तुषारकपटात्सेवार्थमेवागतः ॥

२६३३

श्रीजैनोल्लाभदीनार्थं श्लोकोऽयं चाटुमिश्रितः ।
श्रीवकेन मयाकारि वारिदे हिमवर्षिणि ॥

२६३४

आसीददभ्रशरदभ्रमिषाद्यशस्ते
नाके भ्रमन्नृप यदभ्रमुकान्तशुभ्रम् ।
तत्पुष्पवर्षणमिवाप्सरसां द्युलोके
व्याप्नोत्यमादिव भुवं तुहिनच्छलेन ॥

अस्यैव.

२६३५

श्रीमद्भूरमणेन्द्र तावकयशःपीयूषपोषोद्धतो
राहोर्यद्ग्रहणागतस्य गिलनं चक्रे क्रुधा प्रत्युत ।

सोऽयं मुक्तक्षुधो यदस्य जठराजीर्णो दरीदृश्यते
मन्ये तेन गतः शशी निलयतां लावण्यमालिन्ययोः ।।

त्रिभिः पादैः समस्यापूरणं श्रीबकस्य.

२६३६

सहृदयगिरामानर्थक्यप्रसङ्गभयेन किं
किमुत तरुणीदृङ्निर्माणप्रयोजनकाम्यया ।
बहुमततरं स्वं विज्ञानं विधातुमथाभव-
त्तव नरपते सर्गारम्भे विधिर्विहितोद्यमः ॥

श्रीभर्तृसारस्वतस्य.

२६३७

पाताले परिपालयत्यहिपतौ वाताशिनो भोगिनः
शक्रे शासति नाकलोकममराः सत्राशनं भुञ्जते ।
क्षोणीशे त्वयि रक्षति क्षितिमिमां प्रख्यातकीर्तौ सदा
मृद्वन्नं मृदुलाम्बरं बहु सुखं सर्वे लभन्ते जनाः ॥

कस्यापि.

२६३८

भोगीन्द्रः प्रमदोत्तरङ्गसुरगीसंगीतगोष्ठीषु ते
कीर्तिं देव शृणोतु विंशतिशती यच्चक्षुषां वर्तते ।
रक्ताभिः सुरसुन्दरीभिरभितो गीतां तु कर्णद्वयी-
दुःस्थः श्रोष्यति नाम किं स हि सहस्राक्षो न चक्षुःश्रवाः॥

मुरारेः.

२६३९

शंभुर्मानससंनिधौ सुरधुनीं मूर्ध्ना दधानः स्थितः
श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ ।
मग्नः पङ्करुहे कमण्डलुगतामेतां वहन्नब्जभू-
र्मन्ये वीर तव प्रतापदहनं ज्ञात्वोल्वणं भाविनम् ॥

२६४०

देव त्वद्भुजदण्डदर्पगरिमोद्गारप्रतापानल-
ज्वालापक्त्रिमकीर्तिपारदघटीविस्फोटिनो बिन्दवः ।

शेषाहिः कति तारकाः कति कति क्षीराम्बुधिः कत्यपि
प्रालेयाचलशङ्खशुक्तिकरकाकर्पूरकुन्देन्दवः ॥

एतौ श्रीहनुमतः.

## अथ नीतिपद्धतिः

२६४१

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥

२६४२

उपकारः परो धर्मः परोऽर्थः कर्मनैपुणम् ।
पात्रे दानं परः कामः परो मोक्षो वितृष्णता ॥

२६४३

स धर्मो यो निरुपधः सोऽर्थो यो न विरुध्यते ।
स कामः सङ्गहीनो यः स मोक्षो योऽपुनर्भवः ॥

२६४४

अविद्यानाशिनी विद्या भावना भवनाशिनी ।
दारिद्र्यनाशनं दानं शीलं दुर्गतिनाशनम् ॥

२६४५

गतेऽपि वयसि ग्राह्या विद्या सर्वात्मना बुधैः ।
इह चेत्स्यान्न फलदा फलदा सान्यजन्मनि ॥

२६४६

अत्यार्यमतिदातारमतिशूरमतिव्रतम् ।
प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥

२६४७

नालसाः प्राप्नुवन्त्यर्थान्न क्लीबा न च मानिनः ।
न च लोकरवाद्भीता न च शश्वत्प्रतीक्षिणः ॥

२६४८

यः समुत्पतितं क्रोधं मानं चापि नियच्छति ।
स श्रियो भाजनं पुंसां यश्चापत्सु न मुह्यति ॥

२६४९

वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥

२६५०

अनागतविधातारमप्रमत्तमकोपनम् ।
चिरारम्भमदीनं च नरं श्रीरुपतिष्ठति ॥

२६५१

जीयन्तां दुर्जया देहे रिपवश्चक्षुरादयः ।
जितेषु तेषु लोकोऽयं ननु कृत्स्नस्त्वया जितः ॥

२६५२

यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गां चरन्तीं निवारय ॥

२६५३

सुहृदोऽप्यरयस्तस्य यस्यात्मा दुरधिष्ठितः ।
अजीर्णे पथ्यमप्यन्नं व्याधये मरणाय वा ॥

२६५४

भीरुः पलायमानोऽपि नान्वेष्टव्यो बलीयसा ।
कदाचिच्छूरतामेति मरणे कृतनिश्चयः ॥

२६५५

तेजस्विनि क्षमोपेते नातिकार्कश्यमाचरेत् ।
अतिनिर्मथनाद्वह्निश्चन्दनादपि जायते ॥

२६५६

असहायः समर्थोऽपि तेजस्वी किं करिष्यति ।
निवाते ज्वलितोऽप्यग्निः स्वयमेव प्रशाम्यति ॥

२६५७

कृत्वा बलवता वैरमात्मानं यो न रक्षति ।
अपथ्यमिव तद्भुक्तं तस्यानर्थाय केवलम् ॥

२६५८
कारणात्प्रियतामेति द्वेष्यो भवति कारणात् ।
अर्थार्थी जीवलोकोऽयं न कश्चित्कस्यचित्प्रियः ॥

२६५९
नास्ति जात्या रिपुर्नाम मित्रं चापि न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥

२६६०
अकृत्वा परसंतापमगत्वा खलनम्रताम् ।
अनुत्सृज्य सतां मार्गं यत्स्वल्पमपि तद्बहु ॥

२६६१
अप्रार्थितानि दुःखानि यथैवायान्ति देहिनम् ।
सुखानि च तथा मन्ये दैन्यमत्रातिरिच्यते ॥

२६६२
यदभावि न तद्भावि यद्भावि न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥

२६६३
आगमिष्यन्ति ते भावा ये भावा मयि भाविनः ।
अहं तैरनुगन्तव्यो न तेषामन्यतो गतिः ॥

२६६४
धनमस्तीति वाणिज्यं किंचिदस्तीति कर्षणम् ।
सेवा न किंचिदस्तीति नाहमस्मीति साहसम् ॥

२६६५
नोदन्वानर्थितामेति न चाम्भोभिर्न पूर्यते ।
आत्मा तु पात्रतां नेयः पात्रमायान्ति संपदः ॥

२६६६
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञाय सामर्थ्यं न बालैः समतामियात् ॥

२६६७

पुत्रैर्मित्रैर्गृहैर्वापि वियुक्तस्य धनेन वा ।
मग्नस्य व्यसने कृच्छ्रे पुंसः श्रेयस्करी धृतिः ॥

२६६८

दुःखी दुःखाधिकान्पश्येत्सुखी पश्येत्सुखाधिकान् ।
आत्मानं हर्षशोकाभ्यां शत्रुभ्यामिव नार्पयेत् ॥

२६६९

सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम् ।
वर्तमानः सुखे सर्वो नावैतीति मतिर्मम ॥

२६७०

येऽर्थाः क्लेशेन देहस्य धर्मस्यातिक्रमेण च ।
अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः ॥

२६७१

गुणेषु यत्नः क्रियतां किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥

२६७२

गुणाः खलु गुणा एव न गुणा धनहेतवः ।
अर्थसंचयकर्तॄणि भाग्यानि पृथगेव हि ॥

२६७३

गुणाः खलु गुणा एव न गुणाः फलहेतवः ।
सगुणो निष्फलश्चापो निर्गुणः सफलः शरः ॥

२६७४

आत्मायत्ते गुणादाने नैर्गुण्यं वचनीयता ।
दैवायत्तेषु वित्तेषु पुंसः का नाम वाच्यता ॥

एते भगवद्व्यासमुनेः.

२६७५

काकतालीययोगेन यदनात्मवति क्षणम् ।
करोति प्रणयं लक्ष्मीस्तत्तस्याः स्त्रीत्वचापलम् ॥

२६७६

नोपभोक्तुमपि क्लीबो जानात्युपचितां श्रियम् ।
ग्राम्यो विरागयत्येव रमयन्नपि कामिनीम् ॥

२६७७

यच्छक्तावप्युपेक्षन्ते कदाचिदपकारिणम् ।
समूलकाषं कषितुमुपायोऽसौ न मूढता ॥

२६७८

उत्पन्नपरितापस्य बुद्धिर्भवति यादृशी ।
तादृशी यदि पूर्वं स्यात्कस्य न स्यात्फलोदयः ॥

२६७९

अज्ञोऽपि तज्ज्ञतामेति शनैः शैलोऽपि चूर्ण्यते ।
घुणोऽप्यत्ति महावृक्षं पश्याभ्यासविजृम्भितम् ॥

२६८०

धन्यास्ते पुरुषव्याघ्र ये बुद्ध्या कोपमुत्थितम् ।
निरुन्धन्ति महत्पारं दीप्तमग्निमिवाम्भसा ॥

२६८१

महानहमिति ज्ञात्वा महासत्त्वं न लङ्घयेत् ।
निष्पिनष्टि गजस्यापि पाणिभ्यां किं न केसरी ॥

२६८२

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय क्षीणे कस्यास्ति सौहृदम् ॥

२६८३

गुणैः सर्वज्ञकल्पोऽपि सीदत्येको निराश्रयः ।
अनर्घमपि माणिक्यं हेमाश्रयमपेक्षते ॥

रविगुप्तस्य.

२६८४

अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च संचयम् ।
अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मभिः ॥

२६८५

यो यमर्थं प्रार्थयते यमर्थं घटते च यः ।
सोऽवश्यं तमवाप्नोति न चेच्छ्रान्तो निवर्तते ॥

२६८६

गच्छन्पिपीलको याति योजनानां शतान्यपि ।
अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥

२६८७

चिन्तनीया हि विपदामादावेव प्रतिक्रिया ।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥

२६८८

मित्रस्वजनबन्धूनां बुद्धेर्धैर्यस्य चात्मनः ।
विपन्निकषपाषाणे नरो जानाति सारताम् ॥

२६८९

सर्वः पदस्थस्य सुहृद्बन्धुरापदि दुर्लभः ।
ये यान्त्यापदि बन्धुत्वं सुहृदो बन्धवश्च ते ॥

२६९०

स सुहृद्यो विपन्नार्थं दीनमभ्यवपद्यते ।
न तु दुश्चरितातीतकर्मोपालम्भपण्डितः ॥

२६९१

शिरसा विधृता नित्यं स्नेहेन परिपालिताः ।
केशा अपि विरज्यन्ते कोऽन्ते नायाति विक्रियाम् ॥

२६९२

मृदोः परिभवो नित्यं वैरं तीक्ष्णस्य नित्यशः ।
उत्सृज्यैतद्द्वयं तस्मान्मध्यां वृत्तिं समाश्रयेत् ॥

२६९३

मृदुनापि हि साध्यन्ते कर्मणा स्वार्थसिद्धयः ।
असृक्पिबति तन्वङ्गी जलौका स्वात्मतृप्तये ॥

२६९४
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दानं मैत्री च भूतेषु दया च मधुरा च वाक् ॥
२६९५
जातवैरस्तु बलिना दुःखं स्वपिति सर्वदा ।
अनिर्वृतेन मनसा ससर्प इव वेश्मनि ॥
२६९६
कर्मणा मनसा वाचा चक्षुषा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥
२६९७
संभोजनं संकथनं संप्रश्नोऽथ समागमः ।
ज्ञातिभिः सह कार्याणि न विरोधः कथंचन ॥
२६९८
एतदेवायुषः सारं निसर्गक्षणभङ्गिनः ।
स्निग्धैर्मुग्धैर्विदग्धैश्च यदयन्त्रितमास्यते ॥
२६९९
दर्शितानि कलत्राणि गृहे भुक्तमशङ्कितम् ।
कथितानि रहस्यानि सौहृदं किमतःपरम् ॥
२७००
शोकाराति भयत्राणं प्रीतिविस्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥
२७०१
न मातरि न दारेषु न सोदर्येषु बन्धुषु ।
विस्रम्भस्तादृशः पुंसां यादृङ्मित्रे निरन्तरे ॥
२७०२
अबन्धुष्वपि बन्धुत्वं स्नेहात्समुपजायते ।
बन्धुष्वपि च बन्धुत्वमलोकज्ञेषु हीयते ॥

२७०३

सत्कृतं स्वजनेनेह परोऽपि बहु मन्यते ।
स्वजनेन ह्यवज्ञातं परोप्यऽभिभवेन्नरम् ॥

२७०४

ज्ञातीनां वक्तुकामानां कटूनि परुषाणि च ।
सकोपं हृदयं वाचा श्लक्ष्णया शमयेद्बुधः ॥

२७०५

परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः ।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥

२७०६

मूषकी गृहजातापि हन्तव्या ह्यपकारिणी ।
घृतप्रदानैर्मार्जारो हितकृत्प्रार्थ्यतेऽन्यतः ॥

२७०७

सौहृदेन परित्यक्तं निःस्नेहं खलमुत्सृजेत् ।
सोदर्यं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥

२७०८

पूर्वोपकारी यस्तु स्यादपकारे गरीयसि ।
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥

२७०९

अथ चेद्बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम् ।
पापान्स्वल्पेऽपि तान्हन्यादपराधे तथानृजून् ॥

२७१०

अणु पूर्वं बृहत्पश्चाद्भवत्यार्येषु संगतम् ।
विपरीतमनार्येषु यथेच्छसि तथा कुरु ॥

२७११

सद्भिरेव सदासीत सद्भिः कुर्वीत संगतम् ।
सद्भिर्विवाहं मैत्रीं च नासद्भिः किंचिदाचरेत् ॥

२७१२

विरुद्धैरपि वक्तव्यं साधुभिर्धर्मदर्शिभिः ।
दोषा अपि हि साधूनामसतां च गुणैः समाः ॥

२७१३

प्रेक्षणीयः प्रयत्नेन स्वभावो नेतरे गुणाः ॥
अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि तिष्ठति ॥

२७१४

अप्युन्मत्तात्प्रलपतो बालाच्च परिसर्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥

२७१५

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥

२७१६

किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति संचिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा ॥

२७१७

कार्यमालोचितापायं मतिमद्भिर्विवेचितम् ।
न केवलं हि संपत्तौ विपत्तावपि शोभते ॥

२७१८

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णस्तु जातुचित् ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न गच्छति ॥

२७१९

सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते ।
प्रारम्भे कृतबुद्धीनां सिद्धिरव्यभिचारिणी ॥

२७२०

अफलानि दुरन्तानि समव्ययफलानि च ।
अशक्यानि च वस्तूनि नारभेत विचक्षणः ॥

२७२१

यत्कार्यं पुरुषेणेह व्यवसायवता सता ।
तत्कार्यमविशङ्केन सिद्धिर्दैवे प्रतिष्ठिता ॥

२७२२

दैवयोगादुपनताः प्रतिज्ञाहीनसंपदः ।
अकस्मादेव नश्यन्ति खलानामिव संगतम् ॥

२७२३

न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मवान् ।
अनुद्योगेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥

२७२४

बहवो यत्र नेतारः सर्वे पण्डितमानिनः ।
सर्वे महत्त्वमिच्छन्ति तद्वृन्दमवसीदति ॥

२७२५

ज्येष्ठो भ्राता पितृसमो मृते पितरि भारत ।
स ह्येषां वृत्तिदाता स्यात्स ह्येतान्परिपालयेत् ॥

२७२६

कनिष्ठास्तं नमस्येरन्सर्वे छन्दानुवर्तिनः ।
तमेव चोपजीवेयुर्यथैव पितरं तथा ॥

२७२७

तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी ।
कोऽर्थः पुत्रेण वा तेन यो न विद्वान्न धार्मिकः ॥

२७२८

अजातमृतमूर्खेभ्यो मृताजातौ वरं सुतौ ।
तौ किंचिच्छोकदौ पित्रोर्मूर्खस्त्वत्यन्तशोकदः ॥

२७२९

अपुत्रत्वं भवेच्छ्रेयो न तु स्याद्विगुणः सुतः ।
जीवन्नप्यविनीतोऽसौ मृत एव न संशयः ॥

२७३०

एकोऽपि गुणवान्पुत्रो निर्गुणेन शतेन किम् ।
एकश्चन्द्रस्तमो हन्ति न च ताराः सहस्रशः ॥

२७३१

दाने तपसि शौर्ये वा यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥

२७३२

पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् ।
विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥

२७३३

दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते ।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन युज्यते ॥

२७३४

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥

२७३५

प्रज्ञाशौर्यविवृद्धेषु भृत्येषु शठवृत्तिषु ।
स्वामी विश्वासनिद्रालुः प्रतारयति तायते ॥

२७३६

यस्य कार्यमकार्यं वा सममेव भवत्युत ।
कस्तस्य विश्वसेत्प्राज्ञो दुर्मतेरकृतात्मनः ॥

२७३७

अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् ।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥

२७३८

केचिन्मृगमुखा व्याघ्राः केचिद्व्याघ्रमुखा मृगाः ।
तत्स्वरूपविपर्यासाद्विश्वासो ह्यापदां पदम् ॥

२७३९
परनिन्दासु पाण्डित्यं स्वेषु कार्येष्वनुद्यमः ।
प्रद्वेषश्च गुणज्ञेषु पन्थानो ह्यापदां त्रयः ॥

२७४०
यच्छक्यं ग्रसितुं ग्रासं ग्रस्तं च परिणामि यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥

२७४१
तिष्ठत्येकेन पादेन चलत्येकेन पण्डितः ।
नापरीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥

२७४२
बहूनामल्पसाराणां समवायो हि दुर्जयः ।
तृणैरावेष्ट्यते रज्जुस्तया नागोऽपि बद्धयते ॥

२७४३
बहूनामप्यमित्राणां य इच्छेत्कर्तुमप्रियम् ।
आत्मा तेन गुणैर्योज्यस्तत्तेषां महदप्रियम् ॥

२७४४
प्रज्ञागुप्तशरीरस्य किं करिष्यन्ति संहताः ।
गृहीतच्छत्रहस्तस्य वारिधारा इवारयः ॥

२७४५
यन्न शक्यं न तच्छक्यं सुशीघ्रमपि धावता ।
मन्दबुद्धिस्तु जानीते मुहूर्तेनास्मि वञ्चितः ॥

२७४६
अक्षिपक्ष्म कदा लुप्तं छिद्यन्ते हि शिरोरुहाः ।
वर्धमानात्मनामेव भवन्ति हि विपत्तयः ॥

२७४७
मा तात साहसं कार्षीर्विभवैर्विप्रलम्भितः ।
स्वगात्राण्यपि भाराय भवन्ति हि विपत्तये ॥

२७४८

मा तात प्रभवामीति बाधिष्ठाः कृपणं जनम् ।
मा त्वां कृपणचक्षूंषि धाक्षुरग्निरिवेन्धनम् ॥

२७४९

मा तात संपदामग्रमारूढोऽस्मीति विश्वसीः ।
दूरारोहपरिभ्रंशविनिपातो हि दारुणः ॥

२७५०

यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः ।
यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः ॥

२७५१

वैरमादौ समुत्पाद्य यः कश्चित्संधिमिच्छति ।
मृन्मयस्येव भग्नस्य संधिस्तस्य न विद्यते ॥

२७५२

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः ।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥

२७५३

कौर्मं संकोचमादाय प्रहारानपि मर्षयेत् ।
काले काले तु मतिमानातिष्ठेत्कृष्णसर्पवत् ॥

२७५४

वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः ।
अथैनमागते काले भिन्द्याद्घटमिवाश्मनि ॥

२७५५

तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥

२७५६

योऽरिणा सह संधाय सुखं स्वपिति विश्वसन् ।
स वृक्षाग्रे सुप्त इव पतितः प्रतिबुध्यते ॥

२७५७

सकृदुष्टस्तु यः कश्चित्पुनः संधानमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥

२७५८

नात्यन्तसरलैर्भाव्यं गत्वा पश्य वने तरून् ।
छिद्यन्ते सरलास्तत्र कुब्जाः सन्ति पदे पदे ॥

२७५९

यस्य चाप्रियमन्विच्छेद्ब्रूयात्तस्य सदा प्रियम् ।
व्याधा मृगवधं कर्तुं हृद्यं गायन्ति सुस्वरम् ॥

२७६०

ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च ।
पुनः पुनः प्रवर्तन्ते तस्मान्निःशेषमाचरेत् ॥

२७६१

नहि कश्चित्कृते कार्ये कर्तारं समवेक्षते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥

२७६२

नोपेक्षितव्यो विद्वद्भिः शत्रुरल्पोऽप्यवज्ञया ।
वह्निरल्पोऽपि संवृद्धः कुरुते भस्मसाद्वनम् ॥

२७६३

आदरात्संगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥

२७६४

केचिदज्ञानतो नष्टाः केचिन्नष्टाः प्रमादतः ।
केचिज्ज्ञानावलेपेन केचिन्नष्टैस्तु नाशिताः ॥

२७६५

पण्डितेन विरुद्धः सन्दूरेऽस्मीति न विश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां दूरे हिनस्ति सः ॥

२७६६

पक्वान्नमिव राजेन्द्र सर्वसाधारणाः स्त्रियः ।
तस्मात्तासु न रज्येत नाश्वसेन्न च विश्वसेत् ॥

२७६७

मठरश्च तपस्वी च शूरश्चाप्यकृतव्रणः ।
मद्यपा स्त्री सती राजन्निति न श्रद्दधाम्यहम् ॥

२७६८

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधः शय्यां वासयेद्व्यभिचारिणीम् ॥

२७६९

चतुरः सृजता राजन्नुपायांस्तेन वेधसा ।
न सृष्टः पञ्चमः कोऽपि गृह्यन्ते येन योषितः ॥

२७७०

अपि कुञ्जरकर्णाग्रादपि पिप्पलपल्लवात् ।
अपि विद्युद्विलसिताद्विलोलं ललनामनः ॥

२७७१

जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृद्गतं चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥

२७७२

यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः ।
यद्बहिस्तन्न कुर्वन्ति विचित्रचरिताः स्त्रियः ॥

२७७३

न दानेन न मानेन नार्जवेन न सेवया ।
न शस्त्रेण न शास्त्रेण गृह्यन्ते विषमाः स्त्रियः ॥

२७७४

स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥

२७७५

सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः ।
तन्मित्रं यत्र विश्वासः स देशो यत्र जीवति ॥

२७७६

नित्यं प्रहृष्टया भाव्यं गृहकार्ये च दक्षया ।
सुसंस्कृतोपस्करया नित्यं चामुक्तहस्तया ॥

२७७७

स्त्रियः सेवेत नात्यन्तं मृष्टं भुञ्जीत नाहितम् ।
अस्तब्धः पूजयेन्मान्यान्सेवेतामायया गुरून् ॥

२७७८

न चेर्ष्या स्त्रीषु कर्तव्या दारा रक्ष्याः प्रयत्नतः ।
अनायुष्या भवेदीर्ष्या तस्मात्तां परिवर्जयेत् ॥

२७७९

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या हि सर्वदा ।
द्वयोर्हि कुलयोर्दोषमावहेयुररक्षिताः ॥

२७८०

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामः पण्डितोऽप्यत्र मुह्यति ॥

२७८१

स्त्रियश्च यः प्रार्थयते संनिकर्षं च गच्छति ।
ईषच्च कुरुते सेवां तं तमिच्छन्ति योषितः ॥

२७८२

यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम् ।
उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥

२७८३

नास्ति यज्ञः स्त्रियः कश्चिन्न व्रतं नोपवासकः ॥
पतिं शुश्रूषते यत्सा तेन स्वर्गे महीयते ॥

२७८४

''।मक्षास्तथा नार्यो मृगया गीतवादिते ।
(तानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥

२७८५

प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥

२७८६

अतथ्यास्तथ्यसंकाशास्तथ्याश्चातथ्यदर्शनाः ।
दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणम् ॥

२७८७

ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च ।
वृन्तादिव फलं पक्कं धृतराष्ट्र पतन्ति ते ॥

२७८८

व्रजत्यधोऽधो यात्युच्चैर्नरः स्वैरेव कर्मभिः ।
खनितेव हि कूपस्य प्रासादस्येव कारकः ॥

२७८९

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्ध्यवज्ञानमवमानं च केवलम् ।

२७९०

किं करिष्यत्यपात्राणामुपदेष्टा सुत्रागपि ।
तक्ष्णस्तीक्ष्णः कुठारोऽपि दुर्दारुणि विहन्यते ॥

२७९१

यदश्रुतार्थधर्मा वै प्रमाद्यति न तच्छलम् ।
धर्म एवायमन्धानां यत्स्खलन्ति खलेष्वपि ॥

एते श्रीव्यासमुने ·

२७९२

वहन्प्रज्वलितो वह्निर्दहन्मूलानि रक्षति ।
समूलकाषं कषति वार्योघो मृदुशीतलः ॥

२७९३

आपत्सु मित्रं जानीयाद्रणे शूरं रहः शुचिम् ।
भार्यां तु विभवे क्षीणे दुर्भिक्षे च प्रियातिथिम् ॥

२७९४

पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन् ।
सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ।

२७९५

अवकाशः सुवृत्तानां हृदयान्तर्न योषिताम् ।
इतीव विदधे धाता सुवृत्तौ तद्बहिः कुचौ ॥

कह्लणस्य.

२७९६

प्रावृण्मेघस्य मालिन्ये को दोषो भूरिवर्षिणः ।
शारदाभ्रस्य शुभ्रत्वं वद कुत्रोपयुज्यते ॥

२७९७

सतां मतमतिक्रम्य योऽसतां वर्तते मते ।
अचिरात्स च्युतः स्थानात्पतति द्विषतां वशे ॥

२७९८

जडोऽयमिति नात्यन्तं हीनमप्युपतापयेत् ।
निर्दयं निहतोऽश्मापि वमति ज्योतिषः कणान् ॥

२७९९

न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ।
होतारमपि जुह्वन्तं स्पृष्टो दहति पावकः ॥

२८००

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥

पञ्चतन्त्रे.

२८०१

शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः ।
न्यायेनारब्धकार्यस्य नास्ति किंचन दुष्करम् ॥

२८०२

नोपकारः सुहृच्चिह्नं नापकारोऽरिलक्षणम् ।
प्रदुष्टमप्रदुष्टं च चित्तं मित्रारिलक्षणम् ॥

२८०३

आकारेणेङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकाराभ्यां ज्ञायतेऽन्तर्गतं मनः ॥

२८०४

कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
को वाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥

२८०५

कण्टकस्य च भग्नस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं वरम् ॥

२८०६

यदि सत्सङ्गनिरतो भविष्यसि भविष्यसि ।
अथासज्जनगोष्ठीषु पतिष्यसि पतिष्यसि ॥

केषामपि.

२८०७

परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च कुप्यत्यमूढः सन्स च मूढतमो मतः ॥

२८०८

परवाच्येषु निपुणः सर्वो भवति सर्वदा ।
आत्मवाच्यं न जानाति जानन्नपि विमुह्यति ॥

२८०९

यद्यद्रूयादल्पमतिस्तत्तदस्य सहेद्बुधः ।
प्राकृतो हि प्रशंसन्वा निन्दन्वा किं करिष्यति ॥

२८१०

प्रत्यक्षं गुणवादी यः परोक्षे तु विनिन्दकः ।
स मानवः श्ववल्लोके परित्याज्यो बुभूषता ॥

२८११

दानं क्षमा धृतिः प्रज्ञा संतोषो वागनिष्ठुरा ।
ह्रीरहिंसाऽव्यसनिता स्नानं चेति सुखावहाः ॥

२८१२

यत्सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते ।
कामं तदुपसेवेत न मूढव्रतमाचरेत् ।

२८१३

सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थनिबन्धनः ।
इतरेतरयोनी तौ विद्धि मेघोदधी यथा ॥

२८१४

सततं यश्च कामार्थी नेतरावनुतिष्ठति ।
स वध्यः सर्वलोकस्य ब्रह्महेव जुगुप्सितः ॥

२८१५

अर्थानामर्जनं कार्यं वर्धनं रक्षणं तथा ।
भक्ष्यमाणो निराधानः क्षीयते हिमवानपि ॥

२८१६

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥

२८१७

निर्विशेषं यदा राजा समं भृत्येषु वर्तते ।
तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥

२८१८

मित्रपक्षमनाश्वासं भार्यां चाप्रियवादिनीम् ।
भर्तारं चाविशेषज्ञं दूरतस्त्यजतः सुखम् ॥

एते भगवद्व्यासमुनेः.

२८१९

क्षमी दाता गुणग्राही स्वामी दुःखेन लभ्यते ।
अनुकूलः शुचिर्दक्षो राजन्भृत्योऽपि दुर्लभः ॥

२८२०

सारासारपरिच्छेत्ता स्वामी भृत्यस्य दुर्लभः ।
यथोक्तकारी स्मृतिमान्प्रभोर्भृत्यश्च दुर्लभः ॥

२८२१

कुलीनः शीलसंपन्नो वाग्मी दक्षः प्रियंवदः ।
यथोक्तवादी स्मृतिमान्दूतः स्यात्सप्तभिर्गुणैः ॥

२८२२

न तु हन्यान्महीपालो दूतं कस्यांचिदापदि ।
दूतहन्ता तु नरकं सचिवैः सह गच्छति ॥

२८२३

योनौ कर्मणि बीजे वा यस्य नास्त्यन्यसंकरः ।
तस्य कृच्छ्रगतस्यापि न पापे रमते मतिः ॥

२८२४

धर्मकामार्थकुशलाः कुलीनाः सत्यवादिनः ।
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥

२८२५

यं यमर्थप्रयोगेषु राजा नयति मुख्यताम् ।
तस्य तस्योपघाताय यतन्ते राजवल्लभाः ॥

२८२६

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन्विब्रुवन्वापि नरः किल्बिषभाग्भवेत् ॥

२८२७

तस्मात्सभ्यः सभां गत्वा रागद्वेषविवर्जितः ।
वचस्तथाविधं ब्रूयाद्यथा न नरके पतेत् ॥

२८२८

अपराधानुरूपं च दण्डं दण्ड्येषु पातयेत् ।
वियोजयेद्धनैराढ्यान्दरिद्रान्वधबन्धनैः ॥

२८२९

पिता माता तथा भ्राता भार्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोऽस्ति यस्त्वधर्मेण तिष्ठति ॥

२८३०

जिघांसवः पापकामाः परस्वादायिनः शठाः ।
रक्षांस्यधिकृता एते तेभ्यो रक्षेदिमाः प्रजाः ॥

२८३१

निर्दोषाः शुचयो यस्य लुब्धैरधिकृतैर्नृप ।
धनार्थं विप्रलुप्यन्ते किं पापमधिकं ततः ॥

२८३२

अनादेयं नाददीत परिक्षीणोऽपि पार्थिवः ।
आदेयं न समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत् ॥

२८३३

आयास्य बहुभिर्दुग्धां पीतां वत्सेन सद्गवीम् ।
सुशिक्षितोऽपि गोपालः प्रयत्नेन दुहीत किम् ॥

२८३४

प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ।
एवं विद्वानविद्वान्वा ब्राह्मणो दैवतं महत् ॥

२८३५

अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
लोकपालान्सृजेयुश्च लोकानन्यांस्तथा द्विजाः ।

२८३६

संनिवेशविशेषात्तु दुरुक्तमपि शोभते ।
कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम् ॥

२८३७

धर्मार्थसहितं वाक्यं प्रियं वा यदि वाप्रियम् ।
अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥

२८३८

सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥

२८३९

वैद्यसांवत्सरामात्या यस्य राज्ञः प्रियंवदाः ।
आरोग्यधर्मकोषेभ्यः क्षिप्रं स परिहीयते ॥

२८४०

योऽर्थधर्मावुपाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥

एते श्रीव्यासमुनेः.

२८४१

प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ।
अजागलस्तनस्येव तस्य नाम निरर्थकम् ॥

२८४२

अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः ।
स समेत्य निहन्तव्यः श्वेव सोन्माद आतुरः ।

२८४३

बुद्धिमाननुरक्तोऽयमिहोभयमयं जडः ।
इति भृत्यविचारज्ञो भृत्यैरापूर्यते नृपः ॥

२८४४

स्थानेष्वेव नियोज्यानि भृत्याश्चाभरणानि च ।
नहि चूडामणिः पादे प्रभवामीति बध्यते ॥

एते पञ्चतन्त्रके.

२८४५

चित्तज्ञः कुरुते यद्यत्तत्तत्संपद्यते गुणः ।
प्रभुचित्तमजानानः फलभाङ्नैव सेवकः ॥

वल्लभदेवस्य.

२८४६

एकार्थाभिनिवेशित्वमरिलक्षणमुच्यते ।
— — — जिगीषुगुणान्वितः ॥

कस्यापि.

२८४७

त्यजति भयमकृतपापो मित्राणि शठं प्रमादिनं विद्या ।
ह्रीः कामिनमलसं श्रीः स्त्री क्रूरं दुर्जनं लोकः ॥

२८४८

अव्यवसायिनमलसं दैवपरं पुरुषकारपरिहीनम् ।
वृद्धमिव पतिं कन्या नेच्छत्यवगूहितुं लक्ष्मीः ॥

२८४९

दक्षः श्रियमधिगच्छति पथ्याशी कल्यतां सुखमरोगी ।
अभ्यासी विद्यान्तं धर्मार्थयशांसि च विनीतः ॥

२८५०

अविधेयो भृत्यजनः शठानि मित्राण्यदायकः स्वामी
विनयरहिता च भार्या मस्तकशूलानि चत्वारि ॥

२८५१

कार्यगतैर्वैचित्र्यान्नीचोऽपि क्वचिदलं न जातु महान् ।
कांस्येनैवादर्शः क्रियते राज्ञामपि न हेम्ना ॥

२८५२

अनुरञ्जिता अपि गुणैर्न नमन्ति प्रकृतयो विना दण्डात् ।
अङ्कगतापि न वीणा कलमधुरमताडिता क्वणति ॥

२८५३

गुण एव नालमृजुता कौटिल्यं दोष एव न च जन्तोः ।
ऋजुरपि मारयति शरो वक्रमपि धनुस्तनुं पाति ॥

२८५४

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥

२८५५

शान्तवपुरेष नास्माद्भयमुद्भवतीति नायमेकान्तः ।
शुक्लाः कज्जलमसितं दीपदशाः किं न जनयन्ति ॥

२८५६

आकारदारुणोऽयं भयमस्मादित्यनिश्चयोऽयमपि ।
भवति महाभैरवमपि शिवस्य रूपं शिवायैव ॥

२८५७

उच्चैः पदमधितिष्ठँल्लोकस्तत्त्वेषु मुह्यति प्रायः ।
विषममपि पश्यति समं पर्वतशिखराग्रमारूढः ॥

२८५८

शिक्षयति लोक एव प्रायः कुसृतीर्जनं सुशीलमपि ।
इन्धनमेव प्रथयति हविर्भुजो दाहसामर्थ्यम् ॥

२८५९

कुलजोऽयं गुणवानिति विश्वासं नाचरेत्खलप्रकृतौ ।
ननु मलयचन्दनादपि समुत्थितोऽग्निर्दहत्येव ॥

२८६०

प्रखला एव खलानां प्रशमायालं न जातु सत्पुरुषः ।
कुष्ठव्याधेरौषधमनुरूपमुशन्त्यरिष्टतरुम् ॥

२८६१

कार्याकार्ये तुलयति सर्वस्तृप्तो न जातु तृष्णार्तः ।
स्वादु शुचि वा च तोयं मरुपथिकः को विचारयति ॥

२८६२

प्रथमतरमेव धूर्ताः सगुणानत्युन्नतान्प्रबाधन्ते ।
स्त्रीणां स्तनेषु लक्ष्मीस्तेष्वेवादौ जरा पतति ॥

२८६३

क्वचिदपि वस्तुविशेषे दोषोऽपि गुणेन तुल्यतामेति ।
खण्डनमेव हि मण्डनमधरमणौ भवति रमणीनाम् ॥

एते रविगुप्तस्य.

२८६४

यस्यार्थिनो न विमुखाः सर्वार्तिहरं यशः स किल राजा ।
अभिषेकपट्टबन्धौ वाल्व्यजनं व्रणस्यापि ॥

२८६५

पृथुरहमयं कृशीयान्गम्यो नास्याहमित्यनास्थैषा ।
किमचलशिरो नमहदपि वज्रमणीयो विदारयति ॥

२८६६

असतोऽपि भवति गुणवान्सद्भ्योऽपि परं भवन्त्यसद्वृत्ताः ।
पङ्कादुदेति कमलं कृमयः कमलादपि भवन्ति ॥

२८६७

नम्रीभूय परेषां सकृदपि यः परिभवं नरः सहते ।
अब्धिरिव वृष्टिमार्गैः स पूर्यते परिभवैरेत्य ॥

२८६८

दानपरोऽप्युन्नतिमान्भूभृत्कटकेषु भेदमपि कुर्वन् ।
स्त्रीव्यसनात्परवश्यो भवति नरेन्द्रः करीन्द्र इव ॥

२८६९

अतितेजस्व्यपि राजा पानासक्तो न साधयत्यर्थम् ।
तृणमपि दग्धुं शक्तो न वाडवाग्निः पिबन्ननिशम् ॥

२८७०

रिक्ताः कर्मणि पटवस्तृप्तास्त्वलसा भवन्ति ये भृत्याः ।
तेषां जलौकसामिव पूर्णानां रिक्तता कार्या ॥

२८७१

पित्रास्येदं कृतमिति तत्कर्मणि योजयेन्न दुष्पुत्रम् ।
हवनविधौ हव्यभुजां तिलं प्रशंसन्ति न तु तैलम् ॥

२८७२

यस्मिन्कर्मणि शक्तिर्यस्यास्त्यधिका स तत्र विनियोज्यः ।
मधुनि सहकारगन्धो गुणाय महते भवति न क्षीरे ॥

२८७३

लक्ष्मीपरिपूर्णोऽहं भयं न मेऽस्तीति मोहनिद्रैषा ।
परिपूर्णस्यैवेन्दोर्भवति भयं सिंहिकासूनोः ॥

२८७४

नाम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः ।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन ॥

एते अर्गटस्य.

२८७५

भङ्कुं शक्तो यादृग्भवति मृदुः स्यान्न तादृशस्तीक्ष्णः ।
अतिमृदु जलमपि निपतद्भिनत्ति शैलं क्षुरं न यत्नेन ॥

वल्लभदेवस्य.

२८७६

कार्यज्ञः प्रष्टव्यो न पुनर्मान्यो मम प्रियो वेति ।
गुरुरप्यासनसेव्यः प्रियानितम्बः कदा मन्त्री ॥

२८७७

गुणवानस्मि विदेशः क इव ममेत्येष दुरभिमानलवः ।
अञ्जनमक्षिण विराजति विन्यस्तं न पुनरधरमणौ ॥

२८७८

स्तब्धप्रकृतिर्लोके बहुमानमुपैति नातिशयनम्रः ।
स्फुटमत्रोदाहरणं पयोधरः कुवलयाक्षीणाम् ॥

२८७९

पुंसामसमर्थानामुपद्रवायात्मनो भवति कोपः ।
पिठरं क्वथदतिमात्रं निजपार्श्वान्येव दहतितराम् ॥

एते प्रकाशवर्षस्य.

२८८०

परपक्षक्षयदक्षो नरपतिदयितोऽपि वंशजन्मापि ।
न भवति तावद्गुणवान्धनुरिव यावन्न मानवो नमति ॥

२८८१

आश्रयमाश्रयलिप्सुस्तुङ्गं सेवेत दुरधिरोहमपि ।
विनिपतति यदि स तस्मात्तथाप्युपर्येव नीचानाम् ॥

२८८२

ह्रेपयति प्रियवचनैरादरमुपदर्शयन्खलीकुरुते ।
उत्कर्षयंश्च लघयति मूर्खसुहृत्सर्वथा वर्ज्यः ॥

२८८३

व्यसनैरेवाघ्राताः शृण्वन्ति वचांसि पापमित्राणाम् ।
उद्धूतारिष्टेभ्यो ह्यपथ्यमेवाधिकं स्वदते ॥

केषामपि.

२८८४

विद्वानृजुरभिगम्यो विदुषि शठे चाप्रमादिना भाव्यम् ।
ऋजुमूर्खस्त्वनुकम्प्यो मूर्खशठः सर्वथा वर्ज्यः ॥

२८८५

येन सहासितमशितं कथितं च रहस्यविस्रब्धम् ।
तं प्रति कथमसतामपि निवर्तते चित्तमामरणात् ॥

कस्यापि.

२८८६

तापयिता गुणिरागान्नक्षयमाप्नोति सूर्यवन्नृपतिः ।
सुखयन्नपि तद्द्वेषी क्षिप्रं क्षयमेति सोम इव ॥

वल्लभदेवस्य.

२८८७

कुसुमानीव फलानामर्थानां हेतवो गुणाः प्रायः ।
अत एव कृतार्था इव धनवत्सु गुणा न दृश्यन्ते ॥

कपिलस्वामिनः.

२८८८

अप्रतिबुद्धे श्रोतरि वक्तृत्वमनर्थकं पुंसाम् ।
नेत्रविहीने कामिनि लावण्यविलासवत्स्त्रीणाम् ॥

२८८९

उत्कोचपारितोषकभाटसुभाषिततरार्थचौर्यांशाः ।
तत्क्षणमेव ग्राह्याः षडन्यकाले न लभ्यन्ते ॥

२८९०

जलधिजलान्ता नद्यः स्त्रीभेदान्तानि बन्धुहृदयानि ।
पिशुनजनान्तं सख्यं दुष्पुत्रान्तानि च कुलानि ॥

२८९१

बाल इव यो न पश्यति तत्त्वं किं तेन पण्डितेनापि ।
द्वावप्येतावन्धौ योऽप्यक्षो योऽप्रसन्नाक्षः ॥

२८९२
कल्पयति येन वृत्तिं लोके च यतः प्रसिद्धिमुपयाति ।
स गुणस्तेन गुणवता विवर्धनीयः प्रकाश्यश्च ॥

२८९३
मित्रं वा बन्धुं वा नैवातिप्रणयपीडितं कुर्यात् ।
स्वं वत्समपि पिबन्तं विषाणकोट्या क्षिपति धेनुः ॥

२८९४
अतिपरिचयादवज्ञा भवति विशिष्टेऽपि वस्तुनि प्रायः ।
लोकः प्रयागवासी कूपस्नानं सदाचरति ॥

एते केषामपि.

२८९५
अतिरिच्यते सुजन्मा कश्चिज्जनकान्निजेन चरितेन ।
कुम्भः परिमितमम्भः पिबति पपौ कुम्भसंभवोऽम्भोधिम् ॥

कस्यापि.

२८९६
सत्सङ्गात्स्याद्गुणवान्गुणवति लोकोऽनुरज्यते सकलः ।
अभिगम्यतेऽनुरक्तः ससहायो युज्यते लक्ष्म्या ॥

२८९७
भ्रातॄणां सततं भेदः कथं नाम न जायते ।
अध्यापितानां पत्नीभिर्द्वेषविद्यां सदा निशि ॥

२८९८
सुहृदामुपकारकारणा-
द्द्विषतामप्यपकारकारणात् ।
नृपसंश्रय इष्यते बुधै-
र्जठरं को न बिभर्ति केवलम् ॥

पञ्चतन्त्रे.

२८९९
उन्नतानां सुवंशानां द्वैधं तावन्न जायते ।
यावत्कुठारधारेव योषिद्विशति नान्तरम् ॥

२९००

यः कुरुते परयोषित्सङ्गं
वाञ्छति यश्च धनं परकीयम् ।
यश्च सदा गुरुवृद्धविमानी
तस्य सुखं न परत्र न चेह ॥

राहुलकस्य.

२९०१

यस्य जना न वदन्ति महत्त्वं
नो समरे मरणं विजयं वा ।
न श्रुतदानमहाधनतां वा
तस्य भवः क्रिमिकीटसमानः ॥

वराहमिहिरस्य.

२९०२

यस्यास्ति सर्वत्र गतिः स कस्मा-
त्स्वदेशरागेण हि याति नाशम् ।
तातस्य कूपोऽयमिति ब्रुवाणाः
क्षारं जलं कापुरुषाः पिबन्ति ॥

२९०३

यदकार्यमकार्यमेव त-
न्न बुधस्तत्र मतिं नियोजयेत् ।
परयापि तृषार्दितैर्जनै-
र्नहि रथ्यागतमम्बु पीयते ॥

पञ्चतन्त्रे.

२९०४

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव संपदः ॥

२९०५

सर्वथा स्वहितमाचरणीयं
किं करिष्यति जनो बहुजल्पः ।
विद्यते नहि स कश्चिदुपायः
सर्वलोकपरितोषकरो यः ॥

भारवेः.

२९०६

वश्याः सुता वित्तकरी च विद्या
नीरोगता सज्जनसंगतिश्च ।
इष्टा च भार्या वशवर्तिनी च
दुःखस्य मूलोद्धरणानि पञ्च ॥

२९०७

विद्वद्गोष्ठी भारतं काव्यचिन्ता
तन्त्रीवाद्यं सुप्रयुक्तं च गेयम् ।
इष्टा भार्या तत्समानं च मित्रं
सद्यः शोकं नाशयन्तीह सप्त ॥

२९०८

दानं दरिद्रस्य विभोः क्षमित्वं
यूनस्तपो ज्ञानवतश्च मौनम् ।
इच्छानिवृत्तिश्च सुखोचितानां
दया च भूतेषु दिवं नयन्ति ॥

२९०९

घ्नन्तः शपन्तः परुषं वदन्त-
स्तथापि विप्राः प्रणयेन पूज्याः ।
पराजयोऽप्यत्र जयेन तुल्यो
मास्मत्कुले ब्रह्मजितो भवेयुः ॥

२९१०

निम्नेन तोयं हरितेन गावः
सान्त्वेन बाला विनयेन सन्तः ।

अर्थेन नारी तपसा च देवाः
सर्वो हि लोको ह्रियते प्रियेण ॥

एते केषामपि.

२९११

यः काकिणीमप्यपथप्रनष्टा-
मन्वेषयेन्निष्कसहस्रतुल्याम् ।
स्थानेषु कोटिष्वपि मुक्तहस्त-
स्तं पद्महस्ता न जहाति लक्ष्मीः ॥

श्रीहर्षस्य.

२९१२

उत्साहसंपन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढनिश्चयं च
लक्ष्मीः स्वयं वाञ्छति वासहेतोः ॥

पञ्चतन्त्रे.

२९१३

देशं बलं कार्यमुपायमायुः
संचिन्त्य यः प्रारभते स्वकृत्यम् ।
महोदधिं नद्य इवातिपूर्णं
समृद्धयस्तं पुरुषं भजन्ते ॥

२९१४

पुंस्त्वप्रमाणीकरणाय पुंसा
कार्यः प्रयत्नो विधुरेऽपि दैवे ।
मज्जन्समुद्रेऽप्यनुपातभीरु-
र्धीरः क्षिपत्येव हि पाणिपादम् ॥

कस्यापि.

२९१५

मुनिरस्मि निरागसः कुतो मे
भयमित्येष न भूतयेऽभिमानः ।

परवृद्धिषु बद्धमत्सराणां
किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ॥

२९१६

व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधा-
नसंवृताङ्गान्निशिता इवेषवः ॥

२९१७

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते
जनानुरागप्रभवा हि संपदः ॥

एते भारवेः.

२९१८

शाठ्येन मित्रं कपटेन धर्मं
परोपतापेन समृद्धभावम् ।
सुखेन विद्यां परुषेण नारीं
वाञ्छन्ति ये नूनमपण्डितास्ते ॥

२९१९

धर्मार्थकामाः सममेव सेव्या
यो ह्येकसक्तः स नरो जघन्यः ।
द्वयोस्तु दाक्ष्यं प्रवदन्ति मध्यं
स उत्तमो यो निरतस्त्रिवर्गे ॥

२९२०

य एव राजन्मृदुमन्दभाषी
स एव दूरात्परिवर्जनीयः ।
अभ्राद्विमुक्तस्य दिवाकरस्य
मरीचयस्तीक्ष्णतरा भवन्ति ॥

२९२१

शिरः सुधौतं चरणौ च निर्मलौ
वराङ्गनासेवनमल्पभोजनम् ।
अनग्नशायित्वमपर्वमैथुनं
चिरप्रनष्टां श्रियमानयन्ति षट् ॥

२९२२

विमानना दुश्चरितानुकीर्तनं
कथाप्रसङ्गे वचनादविस्मयः ।
न दृष्टिदानं कृतपूर्वनाशनं
विरक्तभावस्य नरस्य लक्षणम् ॥

२९२३

प्रकीर्णभाण्डामनवेक्ष्य कारिणीं
सदा च भर्तुः प्रतिकूलभाषिणीम् ।
परस्य वेश्माभिरतामपत्रपा-
मेवंविधां योषितमाशु वर्जयेत् ॥

व्यासस्य.

२९२४

बलोपपन्नोऽपि हि बुद्धिमान्नरः
परं नयेन्न स्वयमेव वैरिताम् ।
भिषङ्ममास्तीति विचिन्त्य भक्षये-
दकारणं को नु विषं विचक्षणः ॥

२९२५

यशस्करे कर्मणि मित्रसंग्रहे
प्रियासु नारीष्वधनेषु बन्धुषु ।
क्रतौ विवाहे व्यसने रिपुक्षये
धनव्ययोऽष्टासु न गण्यते बुधैः ॥

२९२६

शास्त्रं सुनिश्चितधिया परिचिन्तनीय-
माराधितोऽपि नृपतिः परिशङ्कनीयः ।

आत्मीकृतापि युवतिः परिरक्षणीया
शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम् ।

२९२७

रत्नान्यधो नयति जातिगुरूणि मोहा-
दूर्ध्वं सदा वहति काष्ठतृणं समुद्रः ।
तोयानि दूषयति पाति भुजंगलोकं
प्रायो महान्भवति कार्यविमूढचेताः ॥

२९२८

एकं हि चक्षुरमलं सहजं विवेको
विद्वद्भिरेव सह संवसतिर्द्वितीयम् ।
यस्यास्ति न द्वयमिदं स्फुटमेव सोऽन्ध-
स्तस्याप्यमार्गचलने वद कोऽपराधः ॥

२९२९

तन्मित्रमापदि सुखे च समक्रियं य-
त्प्रीणाति यः सुचरितैः पितरं स पुत्रः ।
यद्भर्तुरेव हितमिच्छति तत्कलत्र-
मेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥

२९३०

स्तब्धस्य नश्यति यशो विषमस्य मित्रं
नष्टक्रियस्य कुलमर्थपरस्य भृत्याः ।
विद्याबलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥

२९३१

यस्मिञ्जने मदकरी कलभश्च तुल्यौ
यत्रापि नास्ति हयरासभयोर्विशेषः ।
विद्वज्जनस्तदितरश्च न यत्र भिन्नः
कस्तत्र नाम गुणिनामधिवासरागः ॥

२९३२

वह्निः समुद्भवति निर्मथनेन काष्ठा-
दम्भो ददाति वसुधा च निखन्यमाना ।
गच्छन्प्रयास्यति शनैरपि चाध्वनोऽन्त-
मारब्धकार्य इह किं न नरः करोति ॥

२९३३

अधिगतपरमार्थान्पण्डितान्मावमंस्था-
स्तृणमिव परिलघ्वी तान्न लक्ष्मी रुणद्धि ।
अविरलमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥

२९३४

गुणवदगुणवद्वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामा विपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥

केषामपि.

२९३५

यदपसरति मेषः कारणं तत्प्रहर्तुं
मृगपतिरतिकोपात्संकुचत्युत्पतिष्णुः ।
हृदयनिहितवैरा गूढमन्त्रोपचाराः
किमिव हि गणयन्तो बुद्धिमन्तः क्षमन्ते ॥

मसूराक्षस्य.

२९३६

लघीयः प्राज्यं वा फलमभिमतं प्राप्तुमनसा
निरीहेण स्थातुं क्षणमपि न युक्तं मतिमता ।
कुलालो दण्डेन भ्रमयति न चेच्चक्रमनिशं
शरावः कुम्भो वा नहि भवति सत्यामपि मृदि ।

२९३७

यः श्रोता श्रुतमात्रमर्थमखिलं गृह्णाति स श्लाघ्यतां
यो वेत्ति द्विरुदाहृतं कृतफलं तत्रापि वक्तुर्वचः ।
यस्तु स्पष्टमनेकशोऽप्यभिहितां नावैति लेख्यार्थतां
तस्मिन्वन्ध्यपरिश्रमस्य विदुषो मूकव्रतं शोभते ॥

एतौ हरिभट्टस्य.

२९३८

पत्नीयत्यपि मातरं मदवशात्पत्नीं च मात्रीयति
श्वभ्रीयत्यपि मन्दिरं श्लथशिलं कूपं च गेहीयति ।
स्वल्पं वार्युदधीयतीश्वरमपां मोहात्स्थलीयत्यपि
मित्रीयत्यपि पार्थिवं किमपरं कुर्यान्न यन्मद्यपः ॥

२९३९

यत्पीत्वा गुरवेऽपि कुप्यति विना हेतोस्तथा रोदिति
भ्रान्तिं याति करोति साहसमपि व्याधेर्भवत्यास्पदम् ।
कौपीनं विवृणोति लोकपुरतोऽप्युन्मत्तवच्चेष्टते
तल्लज्जापरिपन्थि मोहजननं मद्यं न पेयं बुधैः ॥

२९४०

क्वचिद्भूमौ शायी क्वचिदपि च पर्यङ्कशयनः
क्वचिच्छाकाहारी क्वचिदपि च मांसौदनरुचिः ।
क्वचित्कन्थाधारी क्वचिदपि विचित्राम्बरधरो
मनस्वी कार्यार्थी गणयति न दुःखं न च सुखम् ॥

२९४१

क्वचिन्नृत्तं गीतं क्वचिदपि च हा हेति रुदितं
क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः ।
क्वचिद्रम्या नारी क्वचिदपि जराजर्जरवपु-
र्न जाने संसारः किममृतमयः किं विषमयः ॥

२९४२

ये तावन्मलयोपकण्ठनिलयास्तेष्विन्धनं चन्दनं

तीरोपान्तनिवासिनां जलनिधे रत्नानि पाषाणवत् ।

काश्मीरेषु निवासिनामपि नृणां नास्त्यादरः कुङ्कुमे

दूरस्थस्य महार्घता परिभवः संवासतो जायते ॥

२९४३

शक्यो वारयितुं जलेन हुतभुक्छत्रेण सूर्यातपो

नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।

व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं

सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥

२९४४

वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता

विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम ।

भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खला-

देते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥

२९४५

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना-

द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।

स्त्री मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रया-

न्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥

२९४६

दाक्षिण्यं स्वजने दया परिजने शाठ्यं तथा दुर्जने

प्रीतिः साधुजने स्मयः खलजने विद्वज्जनेऽप्यार्जवम् ।

शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता

ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥

२९४७

उत्खातान्प्रतिरोपयन्कुसुमितांश्चिन्वँल्लघून्वर्धय-

न्नत्युच्चान्नमयन्पृथून्विदलयान्विश्लेषयन्संहतान् ।

तीक्ष्णान्कण्टकिनो बहिर्नियमयन्स्वारोपितान्पालय-
न्मालाकार इव प्रयोगकुशलो राज्ये चिरं तिष्ठति ।

२९४८

स्नानं नाम मनःप्रसादजननं दुःस्वप्नविध्वंसनं
शौचस्यायतनं मलापहरणं संवर्धनं तेजसः ।
रूपोद्योतकरं रिपुप्रशमनं कायाग्निसंदीपनं
नारीणां च मनोहरं श्रमहरं स्नाने दशैते गुणाः ॥

२९४९

मानुष्यं वरवंशजन्म विभवो दीर्घायुरारोग्यता
सन्मित्रं सुसुता सती प्रियतमा भक्तिश्च नारायणे ।
विद्वत्त्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रति-
स्ते पुण्येन विना त्रयोदश गुणाः संसारिणां दुर्लभाः ॥

---

## अथ वैराग्यपद्धतिः

तत्रादौ

### तावद्धर्मकथा

२९५०

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधारयेत् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

२९५१

कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत् ।
नहि धर्माद्भवेत्किंचिद्दुष्प्रापमिति मे मतिः ॥

२९५२

आहरेज्ज्ञानमर्थांश्च पुमानमरवत्सदा ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥

२९५३

आ धूमाग्रान्निवर्तन्ते ज्ञातयः सह बान्धवैः ।
येन त्वमनुगन्तव्यस्तत्कर्म सुकृतं कुरु ॥

२९५४

मृतं शरीरमुत्सृज्य काष्ठलोष्टोपमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्त्वेकोऽनुगच्छति ॥

२९५५

पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।
तादृशास्ते मनुष्येषु येषां धर्मो न कारणम् ॥

२९५६

यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥

२९५७

धनस्य यस्य राजतो न चौरतोऽपि वा भयम् ।
मृतं च यन्न मुञ्चति त्वमर्जयस्व तद्धनम् ॥

२९५८

व्यापृतेनापि ते धर्मः कार्य एवान्तरात्मना ।
वीथीबद्धोऽपि हि भ्राम्यन्घासग्रासं करोति गौः ॥

२९५९

आर्जवं चानृशंस्यं च दम इन्द्रियनिग्रहः ।
एतं साधारणं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥

२९६०

इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभौ ।
निगृहीतविसृष्टानि स्वर्गाय नरकाय वा ॥

२९६१

कायेन त्रिविधं चैव वाचा चैव चतुर्विधम् ।
मनसा त्रिविधं नित्यं दशाधर्मपथांस्त्यजेत् ॥

२९६२

प्राणातिपातं स्तैन्यं च परदारानथापि च ।
त्रीणि पापानि कायेन नित्यशः परिवर्जयेत् ॥

२९६३

असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
चत्वारि वाचा राजेन्द्र न जल्पेन्नापि चिन्तयेत् ॥

२९६४

अस्पृहां परवित्तेषु सर्वसत्त्वेषु सौहृदम् ।
कर्मणां फलमस्तीति मनसा त्रिविधं चरेत् ॥

२९६५

शारीरैः कर्मदोषैश्च याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥

२९६६

भावशुद्धिर्मनुष्याणां विज्ञेया सर्वकर्मसु ।
अन्यथा चुम्ब्यते कान्ता भावेन दुहितान्यथा ॥

२९६७

न कामान्न च संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ।
धर्म एव परे लोके इह वाप्याश्रयः सताम् ॥

२९६८

दृष्टानुभूतमर्थं यः पृष्टो न विनिगूहते ।
यथाभूतप्रवादित्वमेतत्सत्यस्य लक्षणम् ॥

२९६९

न तत्त्ववचनं सत्यं नातत्त्ववचनं मृषा ।
यद्भूतहितमत्यन्तं तत्सत्यमिति कथ्यते ॥

२९७०

गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
यन्न भूतहितार्थाय तत्पशोरिव चेष्टितम् ॥

२९७१

स्खलितः स्खलितो वध्य इति चेन्निष्ठितं भवेत् ।
द्वित्रा यद्यवशिष्येरन्बहुदोषा हि मानवाः ॥

२९७२

परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित् ।
नहीदृशमनायुष्यं त्रिषु लोकेषु विद्यते ॥

२९७३

द्वाविमौ पुरुषौ लोके स्वर्गस्योपरि तिष्ठतः ।
अन्नदाता च दुर्भिक्षे सुभिक्षे च हिरण्यदः ॥

२९७४

न दद्याद्यशसे दानं न भिया नोपकारिणे ।
न नृत्यगीतशीलेभ्यो हासकेभ्यश्च धार्मिकः ॥

२९७५

पात्रापात्रविवेकोऽस्ति धेनुपन्नगयोर्यथा ।
तृणात्संजायते क्षीरं क्षीरात्संजायते विषम् ॥

२९७६

न्यायेनोपार्जिता दत्ता काकिण्यपि महाफला ।
अन्यायेनार्जिता दत्ता न परार्धाः सहस्रशः ॥

२९७७

अज्ञो न वितरत्यर्थान्पुनर्दारिद्र्यशङ्कया ।
प्राज्ञोऽपि वितरत्यर्थान्पुनर्दारिद्र्यशङ्कया ॥

२९७८

अपहृत्य परस्यार्थान्यः परेभ्यः प्रयच्छति ।
स दाता नरकं याति यस्यार्थास्तस्य तत्फलम् ॥

२९७९

दातृयाचकयोर्भेदः कराभ्यामेव दर्शितः ।
एकस्य गच्छताधस्तादुपर्यन्यस्य गच्छता ॥

२९८०

देशकालागमद्रव्यक्षेत्रदातृमनोगुणाः ।
सुकृशस्यापि दानस्य फलातिशयहेतवः ॥

२९८१

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥

२९८२

कण्टकेनापि ये स्पृष्टा यान्ति कामपि विक्रियाम् ।
तेऽपि शस्त्रनिकृत्तस्य पशोर्मांसानि भुञ्जते ॥

२९८३

अनेन किं न पर्याप्तं मांसस्य परिवर्जनम् ।
यत्पाटितं तृणेनापि स्वमङ्गं परिदूयते ॥

२९८४

योऽत्ति यस्य च तन्मांसमनयोः पश्यतान्तरम् ।
एकस्य क्षणिका तृप्तिरन्यः प्राणैर्वियुज्यते ॥

२९८५

शस्त्रं पत्त्रायते यस्य घातको जनकायते ।
तस्य मुग्धपशोर्मांसमपशुः कोऽत्ति मानवः ॥

२९८६

कृत्वापि पातकं कर्म यो दद्यादन्नमर्थिने ।
ब्राह्मणानां विशेषेण स पापेन वियुज्यते ॥

२९८७

पितरं चाप्यवज्ञाय मातरं च नराधिप ।
गुरुं च भरतश्रेष्ठ नरकं प्रतिपद्यते ॥

२९८८

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ।
निष्कृतिर्विहिता राजन्कृतघ्ने नास्ति निष्कृतिः ॥

२९८९

कृतघ्नस्य कृतज्ञस्य पापस्य सुकृतस्य च ।
अपि वेदनिधी राजन्ब्रह्माप्यन्तं न गच्छति ॥

२९९०

मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च ।
चतुर्णां वयमेतेषां निष्कृतिं नैव शुश्रुम ॥

२९९१

अकृतज्ञमकार्यज्ञं दीर्घरोषमनार्जवम् ।
चतुरो विद्धि चण्डालाञ्जन्मना चैव पञ्चमम् ॥

२९९२

न पुत्रः पितरं द्वेष्टि स्वभावात्स्वस्य रेतसः ।
यः पुत्रः पितरं द्वेष्टि तं विद्यादन्यरेतसम् ॥

२९९३

अमावास्याचतुर्दश्योः पौर्णमास्यष्टमीषु च ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥

२९९४

विषण्णं दीनमाविग्नं भयार्तं व्याधिपीडितम् ।
हृतस्वं व्यसनार्तं च भृशमाश्वासयेन्नरम् ॥

२९९५

आनृशंस्यं क्षमा सत्यमहिंसा च दया स्पृहा ।
प्रीतिः प्रसादो माधुर्यमार्जवं च यमा दश ॥

२९९६

दानमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहौ ।
व्रतोपवासौ मौनं च स्नानं च नियमा दश ॥

२९९७

यज्ञाध्ययनदानानि तपः सत्यं क्षमा दया ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥

२९९८

तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो नामहात्मसु तिष्ठति ॥

२९९९

नवे वयसि यः शान्तः स शान्त इति कथ्यते ।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥

३०००

एकेनांशेन धर्मस्तु कर्तव्यो भूतिमिच्छता ।
एकेनांशेन कामश्चाप्येकमंशं विवर्धयेत् ॥

३००१

धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥

३००२

मृत्तिकानां सहस्रैस्तु जलकुम्भशतैस्तथा ।
भावोपहतचेतस्का न शुद्ध्यन्ति कदाचन ॥

३००३

नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ।
शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥

३००४

यथा कापुरुषश्छिन्द्याद्वृक्षं परशुना वने ।
छेत्तुरेव हि तत्पापं परशोर्न कदाचन ॥

३००५

धर्मश्चार्थश्च कामश्च त्रितयं जीविते फलम् ।
एतत् त्रयमवाप्तव्यमधर्मपरिवर्जनात् ॥

३००६

आरोप्यतेऽश्मा शैलाग्रे कृच्छ्रेण महता यथा ।
निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥

३००७

यच्छ्रुतं न विरागाय न धर्माय न शान्तये ।
सुबद्धमपि शब्देन काकवाशितमेव तत् ॥

३००८

नाच्छादयति कौपीनं न दंशमशकापहम् ।
शुनः पुच्छमिवानर्थं पाण्डित्यं धर्मवर्जितम् ॥

३००९

दुर्बलार्थं बलं यस्य धर्मार्थश्च परिग्रहः ।
वाक्सत्यवचनार्थं च पिता तेनैव पुत्रवान् ॥

३०१०

अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् ।
शमो दानं यथाशक्ति गार्हस्थो धर्म उच्यते ॥

३०११

अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति ।
नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः ॥

३०१२

देवान्पितॄन्मनुष्यांश्च भृत्यान्गृह्याश्च देवताः ।
अर्चयित्वा ततः पश्चाद्गृहस्थो भोक्तुमर्हति ॥

३०१३

येषां नाग्रभुजो देवा न वृद्धातिथिबालकाः ।
राक्षसानेव तान्विद्धि निर्वषट्कारमङ्गलान् ॥

३०१४

क्षुत्तर्षदुःखं यत्प्राप्तं प्रेतलोके सुदारुणम् ।
तत्स्मृत्वा कः सहृदयः स्वमांसान्यपि संत्यजेत् ॥

३०१५

कृते प्रत्युपकारो यो वणिग्धर्मो न साधुता ।
तत्रापि ये न कुर्वन्ति पशवस्ते न मानुषाः ॥

३०१६

चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्सुसूनृताम् ।
उत्थाय चासनं दद्यादेष धर्मः सनातनः ॥

एते व्यासमुनेः.

३०१७

स्वकर्मधर्मार्जितजीवितानां
स्वेष्वेव दारेषु सदा रतानाम् ।
जितेन्द्रियाणामतिथिप्रियाणां
गृहेऽपि मोक्षः पुरुषोत्तमानाम् ॥

३०१८

नादत्तमिच्छेन्न पिबेच्च मद्यं
प्राणान्न हिंस्यान्न वदेच्च मिथ्या ।
परस्य दारान्मनसापि नेच्छे-
द्यः स्वर्गमिच्छेद्गृहवत्प्रवेष्टुम् ॥

श्रीभगवद्वाल्मीकिमुनेः.

३०१९

नाम्नां समासो युक्तार्थः सुसहस्रकृतो हरेः ।
हन्त्यघं यत्खला विष्णोस्तत्स्था लोप्या विभक्तयः ॥

प० पाजकस्य.

३०२०

फलाभिलाषोपहतान्तरात्मा
परीक्षते पात्रविशेषमेव ।
कृपालुकस्त्वर्थितयैव तुष्टः
प्रवर्तते दीनजनाय दातुम् ॥

अश्वदेवस्य.

३०२१

न दानतः किंचिदिहान्यदस्ति
जनस्य दुःखक्षतये निमित्तम् ।
संवर्धनीयं तदतः प्रयत्ना-
न्निरन्तरं मित्रमिवोपकारि ॥

३०२२

इहोपपत्तिर्मम केन कर्मणा
क्व वा प्रयातव्यमितो भवेदिति ।

विचारणा यस्य न विद्यते स्मृतौ
कथं स धर्मप्रवणो भविष्यति ॥

३०२३

पतति नियमवान्यमेष्वसक्तो
न तु यमवान्नियमालसः कदाचित् ।
इति यमनियमौ विचार्य बुद्धया
यमबहुलेऽध्वनि संदधीत बुद्धिम् ॥

३०२४

धर्मे मतिर्भवतु वः सततोत्थितानां
स ह्येक एव परलोकगतस्य बन्धुः ।
अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना
नैवात्मभावमुपयान्ति न च स्थिरत्वम् ॥

श्रीव्यासमुनेः.

३०२५

हेमोज्ज्वलद्विरदवाजिरथाधिरूढः
श्वेतातपत्रविनिवारितभानुरश्मिः ।
यत्तूर्यशङ्खजयशब्दपदातिवृन्दै-
र्निर्याति मन्दिरवरात्तदुशन्ति दानात् ॥

३०२६

यद्धूलिधूसरशिरोरुहसाश्रुकण्ठः
स्कन्धाग्रलग्नगुरुभारविनम्रमूर्तिः ।
शैलोपलस्खलनखण्डितपाणिपादो
निःश्वस्य याति विवशस्तदुशन्त्यदानात् ॥

भदन्तप्रज्ञाशान्तेः.

३०२७

दानं यत्प्रथमोपकारिषु न तन्न्यासः स एवार्पितो
दीने याचनमूल्यमेव दयिते तत्किं न रागाश्रयात् ।

पात्रे यत्फलविस्तरप्रियतया तद्वार्धुषिक्यं न किं
तद्दानं यदुपेत्य निष्प्रणयिनि क्षीणे जने दीयते ॥

कस्यापि.

३०२८

सत्क्षेत्रप्रतिपादितः प्रियवचोबद्धालवालावलि-
र्निर्दोषेण मनःप्रसादपयसा निष्पन्नसेकक्रियः ।
दातुस्तत्तदभीप्सितं किल फलन्कालेऽपि बालोऽप्यसौ
राजन्दानमहीरुहो विजयते कल्पद्रुमादीनपि ॥

कह्लणस्य.

३०२९

निन्द्यं जन्म प्रमोहस्थिरतरतमसां यन्मनुष्यत्वहीनं
बुद्ध्या हीनो मनुष्यः शुभफलविकलस्तुल्यचेष्टः पशूनाम् ।
बुद्धिः पाण्डित्यहीना भ्रमति सदसतोस्तत्त्वचर्चाविचारे
पाण्डित्यं धर्महीनं शुकसदृशगिरां निष्फलक्लेशमेव ॥

३०३०

धर्मः शर्म परत्र चेह च नृणां धर्मोऽन्धकारे रविः
सर्वापत्प्रशमक्षमः सुमनसां धर्माभिधानो निधिः ।
धर्मो बन्धुरबान्धवे पृथुपथे धर्मः सुहृन्निश्चलः
संसारोरुमरुस्थले सुरतरुर्नास्त्येव धर्मात्परः ॥

३०३१

अन्धः स एव श्रुतिवर्जितो यः
षण्ढः स एवार्थिनिरर्थको यः ।
मृतः स एवास्ति यशो न यस्य
धर्मे न धीर्यस्य स एव शोच्यः ॥

३०३२

सत्यं वाचि दृशि प्रसादपरता सर्वाशयाश्वासिनी
पाणौ दानविमुक्तिरात्मजननक्लेशान्तचिन्ता मतौ ।
संसक्ता हृदये दयैव दयिता काये परार्थोद्यमो
यस्यैकः पुरुषः स जीवति भवे भ्राम्यन्ति जीवाः परे ॥

३०३३
प्राणानां परिरक्षणाय सततं सर्वाः क्रियाः प्राणिनां
प्राणेभ्योऽभ्यधिकं समस्तजगतां नास्त्येव किंचित्प्रियम् ।
पुण्यं तस्य न शक्यते गणयितुं यः पूर्णकारुण्यवा-
न्प्राणानामभयं ददाति सुकृती तेषामहिंसाव्रतः ॥

३०३४
लक्ष्मीर्दानफला श्रुतं शमफलं पाणिः सुरार्चाफल-
श्चेष्टा धर्मफला परार्तिहरणक्रीडाफलं जीवितम् ।
वाणी सत्यफला जगत्सुखफला स्फीता प्रभावोन्नति-
र्भव्यानां भवशान्तिचिन्तनफला भूत्यै भवत्येव धीः ॥

३०३५
शीलं शीलयतां कुलं कलयतां सद्भावमभ्यस्यतां
व्याजं वर्जयतां गुणं गणयतां धर्मे धियं बध्नताम् ।
क्षान्तिं चिन्तयतां तमः शमयतां तत्त्वश्रुतिं शृण्वतां
संसारे न परोपकारसदृशं पश्यामि पुण्यं सताम् ॥

क्षेमेन्द्रस्य.

३०३६
यो मानुष्यं कुशलविभवं प्राप्य कल्पैरनल्पै-
र्मोहात्पुण्यद्रविणमिह न स्वल्पमप्याचिनोति ।
सोऽस्माल्लोकात्परमुपगतस्तीव्रमभ्येति शोकं
रत्नद्वीपाद्वणिगिव गतः स्वं गृहं शून्यहस्तः ॥

कस्यापि.

३०३७
उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।
केदारोदरसंस्थानां परीवाह इवाम्भसाम् ॥

कालिदासस्य.

३०३८
अनर्थितर्पणं वित्तं चित्तमध्यानदर्पणम् ।
अतीर्थसर्पणं देहं पर्यन्ते शोच्यतां व्रजेत् ॥

श्रीजोनराजस्य.

३०३९

मृत्पाषाणगणैः सुवर्णमणिभिः शुक्त्यस्थिभिर्मौक्तिकै-
र्लोके मूढतमे धनं धनमिति व्यक्त्या प्रसिद्धिं गतैः ।
यः कोषः क्रियते न तस्य रुचिरं पश्यामि किंचित्फलं
निःशेषाश्रितभृत्यबान्धवसुहृद्दीनार्थिदानं विना ॥

व्यासदासस्य.

३०४०

याचमानजनमानसवृत्तेः
पूरणाय बत जन्म न यस्य ।
तेन भूमिरतिभारवतीयं
न द्रुमैर्न गिरिभिर्न समुद्रैः ॥

३०४१

लोक एष परलोकमुपेता
हा विहाय निधने धनमेकः ।
इत्यमुं खलु तदस्य निनीष-
त्यर्थिबन्धुरुदयद्दयचित्तः ॥

नैषधकर्तुः.

३०४२

मानुष्ये सति दुर्लभा पुरुषता पुंस्त्वे पुनर्विप्रता
विप्रत्वे बहुविद्यता निपुणता विद्यावतोऽर्थज्ञता ।
अर्थज्ञस्य विचित्रवाक्यपटुता तत्रापि लोकज्ञता
लोकज्ञस्य समस्तशास्त्रविदुषो धर्मे मतिर्दुर्लभा ॥

कस्यापि.

३०४३

किं जीवावधिबन्धनैर्गुणगणैराराधितैर्बन्धुभि-
र्ये यान्त्यन्तदिने क्षणाश्रुपतनप्रत्यायनापात्रताम् ।
सद्धर्माधिगमः क्रियाव्युपरमः सत्संगमः संयमः
पर्यन्तेऽप्यचला विरक्तमनसामेते सतां बान्धवाः ॥

क्षेमेन्द्रस्य.

३०४४

कानीनस्य मुनेः स्वबान्धववधूवैधव्यविध्वंसिनो
नप्तारः किल पञ्च गोलकसुताः कुण्डाः स्वयं पाण्डवाः ।
ते पञ्चापि समानजानय इदं दुःस्वप्नविध्वंसनं
तेषां कीर्तनमामनन्ति मुनयो धर्मस्य सूक्ष्मा गतिः ॥

३०४५

स्थाल्यां वैदूर्यमय्यां पचति तिलखलीं चान्दनैरिन्धनौघै-
श्छित्त्वा कर्पूरखण्डान्वृतिमिह कुरुते कोद्रवाणां समन्तात् ।
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कमूलस्य हेतोः
प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः ॥

कयोरपि.

३०४६

दातुर्वारिधरस्य मूर्धनि तडिद्वाङ्क्यशृङ्गारिता
वृक्षेभ्यः फलपुष्पदायिनि मधौ मत्तालिवृन्दस्तुतिः ।
भीतत्रातरि वृत्तिदातरि गिरौ पूजा झरैश्चामरैः
सत्कारोऽयमचेतनेष्वपि विधेः किं दातृषु ज्ञातृषु ॥

राजशेखरस्य.

---

## अथ शीलम्

३०४७

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतद्विदुर्बुधाः ॥

३०४८

वृत्तं यत्नेन संरक्षेद्वित्तमायाति याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥

३०४९

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते ।
एवं चलितवृत्तस्तु वृत्तशेषं न रक्षति ॥

३०५०
न कुलं वृत्तहीनानां प्रमाणमिति मे मतिः ।
अन्तेष्वपि हि जातानां वृत्तमेव विशिष्यते ॥
३०५१
अकुलीनः कुलीनश्च मर्यादां यो न लङ्घयेत् ।
धर्मापेक्षी मृदुर्दान्तः स कुलीनशतैर्वरः ॥
व्यासमुनेः.
३०५२
शीलं रक्षतु मेधावी प्राप्तुमिच्छुः सुखत्रयम् ।
प्रशंसां वित्तलाभं च प्रेत्य स्वर्गे च मोदनम् ॥
कस्यापि.
३०५३
विदेशेषु धनं विद्या व्यसनेषु धनं मतिः ।
परलोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥
क्षेमेन्द्रस्य.
३०५४
पाण्डित्यस्य विभूषणं मधुरता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवतो धर्मस्य निर्व्याजता
सर्वस्यास्य पुनस्तथैव जगतः शीलं परं भूषणम् ॥
३०५५
वरं विन्ध्याटव्यामनशनतृषार्तस्य मरणं
वरं सर्पाकीर्णे तृणपिहितकूपे निपतनम् ।
वरं गर्तावर्ते गहनजलमध्ये विलयनं
न शीलाद्विभ्रंशो भवतु कुलजस्य श्रुतवतः ॥

---

## अथ कलिकालः

३०५६
कलेरन्ते भविष्यन्ति राक्षसा नररूपिणः ।
मानुषान्भक्षयिष्यन्ति वित्ततो न शरीरतः ॥
व्यासस्य.

३०५७

नष्टा श्रुतिः स्मृतिर्लुप्ता प्रायेण पतिता द्विजाः ।
मलेन नाशिताः शिष्टा हा वृद्धो वर्तते कलिः ॥

माधवस्य.

३०५८

तामवस्थामयं नीतः खलेन कलिना जनः ।
यया स्वामिसुहृद्द्रोहनिरतिर्गण्यते गुणः ॥

३०५९

धार्मिको दूर एवास्तां भूयाः परमधार्मिकः ।
अधार्मिकजनोद्यत्वे मा भूदिति वृणोम्यहम् ॥

वल्लभदेवस्य.

३०६०

आसीज्जनः कृतघ्नः क्रियमाणघ्नश्च सांप्रतं जातः ।
इति मे मनसि वितर्को भविता लोकः कथं भविता ॥

३०६१

उपकारिणि विश्वस्ते शुद्धमतौ यः समाचरति पापम् ।
तं जनमसत्यसंधं भगवति वसुधे कथं वहसि ॥

३०६२

विजितात्मनां जनानामभवद्यः कृतयुगे दमो नाम ।
सोऽयं विपरीततया मदः स्थितः कलियुगे पुंसाम् ॥

३०६३

प्राप्ते कलौ राजनि चार्थलुब्धे
धनेन किं जीवितमेव रक्ष्यम् ।
किं नैष लाभो यदि सौनिकेन
मुच्येत मेषो हृतसर्वलोमा ॥

केषामपि.

३०६४

तैस्तैर्घोरैर्व्याधिभिः पीड्यमानः
पापाचारैस्तस्करैर्मुष्यमाणः ।

दुर्भिक्षार्तो राजदण्डावसन्न-
श्चक्रारूढः सांप्रतं जीवलोकः ॥

३०६५

गुणार्जने क्लेशमपार्थकं त्यज
प्रगल्भतामाश्रय जीव्यते यया ।
गतः स कालः सह साधुचेष्टितै-
रकृत्रिमैर्यत्र गुणैरजृम्भ्यत ॥

३०६६

सुहृदयमिति दुर्जनेऽस्ति काशा
बहुकृतमस्य मयेति लुप्तमेतत् ।
सुजन इति पुराणशब्द एष
धनलवमात्रनिबन्धनोऽद्य लोकः ॥

३०६७

दुष्टैर्जितं सुचरितानि खिलीकृतानि
सत्संकथाः खलकथातिमिरेण रुद्धाः ।
नीचाः प्रधानपुरुषत्वमपि प्रपन्ना
हे धर्म साधुजनवल्लभ किं करोषि ॥

३०६८

गच्छ त्रपे विरम धैर्य धियः किमत्र
मिथ्या कदर्थयसि किं पुरुषाभिमान ।
दूरादपास्तगुणमर्चितदोषसैन्यं
दैन्यं यदादिशति तद्वयमाचरामः ॥

धर्मदत्तस्य.

३०६९

अहतहृदयाः सन्तः सत्यं ब्रवीमि निशम्यतां
विपिनमधुना गत्वा वासो मृगैः सह कल्प्यताम् ।
सुजनचरितध्वंसिन्यस्मिन्खलोदयशालिनि
प्रभवति कलौ नायं कालो गृहेषु भवादृशाम् ॥

३०७०

कपटपटुता द्रोहे चित्तं सतां च विमानना
मतिरविनये शाठ्यं मित्रे सुतेष्वपि वञ्चना ।
कृतकमधुरा वाक्प्रत्यक्षं परोक्षविघातिनी
कलियुगमहाराजस्यैताः स्वराज्यविभूतयः ॥

कयोरपि.

३०७१

देशः शोककरो नृपः पशुसमः कालः कलङ्काकुलः
सादः साधुषु दुर्जनेषु च सुखं भृत्या न वृत्त्या युताः ।
दुःसाधं धनमस्थिराश्च सुहृदः कुस्थानलिङ्गं वपुः
शीर्णप्रायमशक्तिरार्तिशमने वार्ता शरीरस्य का ॥

साराशीत्याम्.

३०७२

क भ्रातश्चलितोऽसि यामि कटकं किं तत्र सेवाशया
कः सेव्यो नृपतिः कथं निजगुणैः के ते गुणा ये सताम् ।
किं तैरद्य कुतोऽपरे व्रज वनं किं वा त्वया न श्रुतं
पूज्यन्ते शठमत्सरिप्रभृतयः कर्णेजपाः सेवकाः ॥

३०७३

शीलं शैलतटात्पतत्वभिजनो निर्दह्यतां वह्निना
मा श्रौषं जगति श्रुतस्य विफलक्लेशस्य नामाप्यहम् ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु मे सर्वदा
येनैकेन विना गुणास्तृणबुसप्रायाः समस्ता अमी ॥

माघस्य.

३०७४

या साधून्प्रखलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।
तामाराधय चक्रिकां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो व्यसनिन्गुणेषु विफलेष्वास्थां वृथा मा कृथाः ॥

श्रीवर्धनस्य.

३०७५

यद्यप्युन्नतवंशवान्नवसुधाधामाभिरामं वपुः
संप्राप्तोऽतिशयस्वभावसुभगच्छायः सतां तापहृत् ।
तत्राप्येष विसंस्थुलस्थितिरहो लक्ष्मीं निजात्मोचितां
प्रायश्चक्रिकया विना न लभते पश्यातपत्रं यथा ॥

रणादित्यस्य.

३०७६

धर्मः प्रव्रजितस्तपश्च चलितं सत्यं च दूरं गतं
पृथ्वी मन्दफला जनाः कपटिनो मौढ्ये स्थिता ब्राह्मणाः ।
राजा दण्डपरो विचाररहितः पुत्राः पितृद्वेषिणो
भार्या भर्तृविरोधिनी कलियुगे धन्या जना ये मृताः ॥

कस्यापि.

३०७७

वेश्यावेश्मसु सीधुगन्धिललनावक्त्रासवामोदितै-
र्नीत्वा निर्भरमन्मथोत्सवरसैरुन्निद्रचन्द्राः क्षपाः ।
सर्वज्ञा इति तापसा इति चिरप्राप्ताग्निहोत्रा इति
ब्रह्मज्ञा इति दीक्षिता इति दिवा धूर्तैर्जगद्वञ्च्यते ॥

३०७८

गङ्गातीरतरङ्गशीतलशिलाविन्यस्तभास्वद्बृसी-
संविष्टाः कुशमुष्टिमण्डितमहादण्डाः करण्डोज्ज्वलाः ।
पर्यायग्रथिताक्षसूत्रवलयप्रत्येकबीजग्रह-
व्यग्राग्राङ्गुलयो हरन्ति धनिनां वित्तान्यहो दाम्भिकाः ॥

कृष्णमिश्रस्य.

---

## अथ कर्म

३०७९

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।

फलं कर्मायत्तं यदि किममरैः किं च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥

कस्यापि-

३०८०

यथा छायातपौ नित्यं सुसंबद्धौ निरन्तरम् ।
तथा कर्म च कर्ता च संबद्धौ सर्वजन्तुषु ॥

३०८१

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥

३०८२

अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्तन्ते तथा कर्माणि देहिनाम् ॥

३०८३

कर्मजा हि शरीरेषु रोगाः शारीरमानसाः ।
शरा इव पतन्तीह विमुक्ता दृढधन्विभिः ॥

३०८४

एतदेव महच्चित्रं प्राक्तनस्येह कर्मणः ।
यदनात्मवतामायुर्यच्चानतिमतां श्रियः ॥

३०८५

यं यमिच्छेद्यथा कामं तं तमेव तथाप्नुयात् ।
यदि न स्यात्पराधीनं पुरुषस्य क्रियाफलम् ॥

३०८६

नहि वर्षशतस्यान्तं नरः संभृत्य जायते ।
उपायेन हि जीवन्ति नरा वर्षशतायुषः ॥

३०८७

आपत्सु किं विषादेन संपत्तौ विस्मयेन किम् ।
भवितव्यं भवत्येव कर्मणामेष निश्चयः ॥

२०८८

अन्यथा शास्त्रगर्भिण्या धिया धीरः समीहते ।
स्वामिवत्प्राक्तनं कर्म विदधाति तदन्यथा ॥

२०८९

को दर्शयति पन्थानमितश्चेतश्च गच्छताम् ।
स्वच्छन्दानां च पयसां प्राक्तनानां च कर्मणाम् ॥

२०९०

बुद्धिमन्तो महोत्साहाः प्राज्ञाः शूराः कुलोद्गताः ।
पाणिपादैरुपेताश्च परेषां भृत्यतां गताः ॥

२०९१

न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥

२०९२

महच्च फलवैषम्यं दृश्यते कर्मसंधिषु ।
वहन्ति शिबिकामन्ये यान्त्यन्ये शिबिकारुहः ॥

२०९३

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥

२०९४

न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥

२०९५

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ॥

२०९६

बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥

३०९७

न कालो दण्डमुद्यम्य शिरः कृन्तति देहिनाम् ।
कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥

३०९८

यदेव कर्मकौशलं स्वयं कृतं शुभाशुभम् ।
तदेव तस्य यौतकं भवेदमुत्र गच्छतः ॥

श्रीव्यासमुनेः.

३०९९

यदर्जितं प्राणहरैः परिश्रमै-
र्मृतस्य तत्संविभजन्ति रिक्थिनः ।
कृतं च यद्दुष्कृतमर्थलिप्सया
तदेव दैवोपहतस्य यौतकम् ॥

व्यासस्य.

३१००

नैवाकृतिः फलति नैव कुलं न शीलं
विद्या सहस्रगुणिता न च वाग्विशुद्धिः ।
कर्माणि पूर्वशुभसंचयसंचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥

अश्वघोषस्य.

३१०१

दीर्घा कर्मलता नवैव सततं व्याप्ता पुराणैः फलैः
साश्चर्या सहचारिणी तनुभृतां तत्राप्यलं निश्चला ।
याकृष्टा परिवेष्टिता विघटिता प्रोत्पाटिता मोटिता
निर्घृष्टा कणशः कृतापि कुशलैर्नैव प्रयाति क्षयम् ॥

३१०२

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डान्तरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ।
रुद्रो येन कपालपाणिरनिशं भिक्षाचरः कल्पितो
भानुर्भ्राम्यति यद्वशेन गगने तस्मै नमः कर्मणे ॥

कस्यापि.

३१०३

यत्कर्मबीजमुप्तं येन पुरा निश्चितं स तद्भुङ्क्ते ।
पूर्वकृतस्य हि शक्यो विधिनापि न कर्तुमन्यथाभावः ॥

सोमदेवस्य.

३१०४

विपुलं गगनं तुरंगमाः
पवनस्यापि जवातिशायिनः ।
रविरेति तथाप्यरेर्मुखं
नहि नाशोऽस्ति कृतस्य कर्मणः ॥

३१०५

लब्ध्वा जन्म सह श्रिया स्वयमपि त्रैलोक्यभूषाकरः
स्थित्यर्थं शितिकण्ठमभ्युपगतस्तेनापि मूर्ध्ना धृतः ।
वृद्धिं शीतकरस्तथापि न गतः क्षीणः परं प्रत्युत
प्रायः प्राक्तनमेव कर्म बलवत्कस्योपकुर्वीत कः ॥

कस्यापि.

---

## अथ दैवम्

३१०६

दाता बलिर्याचनको मुरारि-
र्दानं मही वाजिमखस्य मध्ये ।
दातुः फलं बन्धनमेव जातं
नमोऽस्तु दैवाय यथेष्टकर्त्रे ॥

क्षेमेन्द्रस्य.

३१०७

क्षुब्धदैवानिलोद्धूते मर्यादामविमुञ्चति ।
मनस्विहृदयाम्भोधौ हा कल्लोलपरंपरा ॥

गोविन्दराजस्य.

३१०८
गुणा यत्र न तत्रार्था यत्रार्थास्तत्र नो गुणाः ।
अहो परमसामर्थ्यं संविभागविधौ विधेः ॥
श्रीव्यासमुनेः.

३१०९
परीक्ष्य सत्कुलं विद्यां वयः शौर्यं सुशीलताम् ।
विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥

३११०
मनसापि न यत्स्पृष्टं दूरादपि यदुज्झितम् ।
तदप्युपायैर्विविधैर्विधिरिच्छन्प्रयच्छति ॥
कयोरपि.

३१११
न केवलं मनुष्येषु दैवं देवेष्वपि प्रभुः ।
सति मित्रे धनाध्यक्षे चर्मप्रावरणो हरः ॥
रविगुप्तस्य.

३११२
दैवं पुरुषकारेण कोऽतिवर्तितुमर्हति ।
विधातृविहितं मार्गं न कश्चिदतिवर्तते ॥
श्रीवाल्मिकेः.

३११३
दैवोपसृष्टः पुरुषो यत्कर्म कुरुते क्वचित् ।
कृतं कृतं तदेवास्य दैवेन प्रतिहन्यते ॥

३११४
अनयो विनयस्तस्य विधिर्यस्यानुवर्तते ।
नयः सम्यक्प्रयुक्तोऽपि भाग्यहीनस्य दुर्नयः ॥

३११५
यन्मनोरथगतेरगोचरं
यत्स्पृशन्ति न गिरः कवेरपि ।
स्वप्नवृत्तिरपि यत्र दुर्लभा
हेलयैव विदधाति तद्विधिः ॥
कस्यापि.

३११६

आधर्मिकः कदर्यो गुणविमुखः परुषवागनेकमतिः ।
भुङ्क्ते संपदमीदृग्ब्रूत नृकारः किमस्ति दैवं वा ॥

वल्लभदेवस्य.

३११७

राहुरबाहुर्गगनतले दशशतकरमपि हन्ति ।
अन्तःस्थे हि विधौ कुटिले शूराः क्व प्रभवन्ति ॥

चर्पटीनाथस्य.

३११८

दुर्लभलाभोऽप्यद्धा कस्यापि भवत्युपद्रवायैव ।
राहुरहारयदमृतं समवाप्य निजं शरीरमपि ॥

३११९

अल्पेनैव गुणेन हि कश्चिल्लोके प्रसिद्धिमुपयाति ।
एकेन करेण गजः करी न सूर्यः सहस्रेण ॥

प्रकाशवर्षस्य.

३१२०

मत्स्योऽपि हि विजानाति क्षीरनीरविवेचनम् ।
प्रसिद्धं राजहंसस्य यशः पुण्यैरवाप्यते ॥

३१२१

प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभू-
न्न पतिष्यतः करसहस्रमपि ।

माघस्य.

३१२२

मुञ्चत गुणाभिमानं गुणिनो विधिकिंकराः स्थ संसत्सु ।
गुणनिर्भरमपि मूलं मज्जति पङ्के सरोजस्य ॥

रुद्रटस्य.

३१२३

सत्कुलजे पाण्डित्यं विदुषि धनं धनिनि दानसंभोग
इति नियमानकरिष्यद्यद्यभविष्यद्विधिः स्वस्थः ॥

३१२४

स्त्रीणां वैरूप्यं दुर्जनस्याधिपत्यं
साधोर्दारिद्र्यं पण्डितस्याल्पमायुः ।
येनेदं सृष्टं जानताजानता वा
सर्वं दौरात्म्यं तेन कुण्डेन पीतम् ॥

केषामपि.

३१२५

शशिदिवाकरयोर्ग्रहपीडनं
गजभुजंगमयोरपि बन्धनम् ।
मतिमतां च विलोक्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥

३१२६

सृजति तावदशेषगुणाकरं
पुरुषरत्नमलंकरणं भुवः ।
तदनु तत्क्षणभङ्गि करोति चे-
दहह कष्टमपण्डितता विधेः ॥

फल्गुहस्तिन्याः.

३१२७

असमसाहससुव्यवसायिनः
सकललोकचमत्कृतिकारिणः ।
यदि भवन्ति न वाञ्छितसिद्धयो
हतविधेरयशो न मनस्विनः ॥

शङ्कुकस्य

३१२८

संतापो न खलु नरेण जीवलोके
वृत्त्यर्थं क्षणमपि पण्डितेन कार्यः ।
निश्चेष्टः शयनगतोऽप्युपाश्नुते तं
प्राप्तव्यो नियतफलाश्रयेण योऽर्थः ॥

३१२९

सङ्ग्रामे प्रहरणसंकटे गृहे वा
दीप्तेऽग्नौ गिरिविवरे महोदधौ वा ।
सर्वैर्वा सह वसतामुदीर्णसत्त्वै-
र्नाभाव्यं भवति न भाविनो विनाशः ॥

भदन्तवासुदेवस्य.

३१३०

आ जन्मनो विहितभक्तिरनन्यनाथः
सारथ्यकर्मणि च योग्यतया नियुक्तः ।
नाद्याप्यवाप चरणावरुणोऽपि सूर्या-
त्पुण्यैर्विना नहि भवन्ति समीहितार्थाः ॥

वासुदेवस्य.

३१३१

विधुरप्यर्कति चन्दनमनलति मित्राण्यपि रिपवन्ति ।
विधुरे वेधसि खिन्ने चेतसि विपरीतानि भवन्ति ॥

सोमस्य.

३१३२

यः पातार्थमुपार्जितोऽन्यशिरसस्तेनैव सिन्धुप्रभु-
र्वृद्धक्षत्रधराधवो निजशिरःपातं वरेणान्वभूत् ।
देव्याः सैव गदा श्रुतायुधनृपं हन्तावधीदाहवे
यत् त्राणाय विगण्यते विधिवशात्तेनैव नाशो भवेत् ॥

३१३३

यो यं जनापकरणाय सृजत्युपायं
तेनैव तस्य नियमेन भवेद्विनाशः ।
धूमं प्रसौति नयनान्ध्यकरं यमग्नि-
र्भूत्वाम्बुदः स शमयेत्सलिलैस्तमेव ॥

कह्लणस्य.

३१३४

हंहो विधे विविधपण्डितपुण्डरीक-
खण्डावखण्डनकरिन्कलिकालबन्धो ।

यादृक्खलेषु सततं तव पक्षपातः
स्वप्नेऽपि सत्सु स भवेद्यदि किं ततः स्यात् ॥

भट्टवासुदेवस्य.

३१३५

कल्पद्रुमान्विगतवाञ्छजने सुमेरौ
रत्नान्यगाधसलिले सरितामधीशे ।
धात्रा श्रियं निदधता प्रखलेषु नित्य-
मत्युज्ज्वलः खलु घटे निहितः प्रदीपः ॥

प्रकाशवर्षस्य.

३१३६

इह सरजसि मार्गे चञ्चलो यद्विधाता
ह्यगणितगुणदोषो हेतुशून्यत्वमुग्धः ।
सरभस इव बालः क्रीडितः पांसुपूरै-
र्लिखति किमपि किंचित्तच्च भूयः प्रमार्ष्टि ।

कस्यापि.

३१३७

प्रियसखि विपद्दण्डप्रान्तप्रपातपरंपरा-
परिचयचले चिन्ताचक्रे निधाय विधिः खलः ।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालव-
द्भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥

३१३८

विरम विफलायासादस्माद्दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे ।
अयि जड विधे कल्पापायव्यपेतनिजक्रमाः
कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥

विज्जाकायाः.

३१३९

हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं
व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः ।

संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सहसा सर्वे समाप्तिं गुणाः ॥

भर्तृहरेः.

३१४०

कलत्रचिन्ताकुलितस्य पुंसः
श्रुतं च शीलं च गुणाश्च सर्वे ।
अपक्वकुम्भे निहिता इवापः
प्रयान्ति देहेन समं विनाशम् ॥

कस्यापि.

३१४१

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके
वाञ्छन्देशमनातपं विधिवशाद्बिल्वस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र दैवहतकस्तत्रैव यान्त्यापदः ॥

दिविरदेवादित्यस्य.

३१४२

व्यायस्यन्नपि कश्चिदर्थितफलप्राप्तेरभागी भवे-
त्सर्वारम्भनिरुद्यमोऽपि लभते कश्चिद्यथेष्टं फलम् ।
हस्तात्कस्यचिदाशु नश्यति धनं तेनापरो युज्यते
बालोन्मत्तजडोपमस्य हि विधेर्नानाविधं चेष्टितम् ॥

भदन्ताश्वघोषस्य.

३१४३

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन तत्क्षणमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि नृणां वृद्धौ क्षये चोद्यतम् ॥

३१४४

भूपाला गुणविद्विषः कृतधियो मात्सर्यपङ्कप्लुताः
सन्तो दुर्गतयः सदैव धनिनः पापप्रवृत्तस्पृहाः ।

मुग्धाक्ष्यो रजसः पदं सुनियताः प्रेम्णः परावृत्तयः
संसारे किमिवास्ति दुर्मदजुषः शोच्यं विधेनैव यत् ॥

३१४५

दूरोल्लासितसज्जनापदि दृढप्रारब्धनीचोन्नतौ
यः सर्गे क्षणदृष्टनष्टविरसे बद्धादरः सर्वदा ।
पश्येयं यदि तं क्वचित्सकरुणोपालम्भरूक्षोक्तिभि-
र्लज्जानिष्प्रतिपत्तिमूकवचनं कुर्यामहं वेधसम् ॥

३१४६

स एवाहं पार्थस्तदपि वरलब्धं धनुरिदं
त एवामी बाणाः प्रमथितसुरारातिपृतनाः ।
इमास्ता वृष्णीनां हरिबलमुखानां युवतयो
ह्रियन्ते गोपालैर्विधिरतिबलीयान्न पुरुषः ॥

केषामपि॰

३१४७

अवश्यभव्येष्वनवग्रहग्रहा
यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयानुगम्यते
जनस्य चित्तेन भृशावशात्मना ॥

श्रीहर्षस्य॰

३१४८

भवति भिषगुपायैः पथ्यभुङ्नित्यरोगी
धनहरणविनिद्रश्छिद्रगोप्ता दरिद्रः ।
अनयचयविधायी निश्चलैश्वर्यधैर्यः
स्ववशनिशितशक्तेः शासनेनैव धातुः ॥

क्षेमेन्द्रस्य॰

३१४९

शशिनि किल कलङ्कः कण्टकं पद्मनाले
गुणवति विधनत्वं चन्दने कृष्णसर्पाः ।

उदधिजलमपेयं निर्मितं येन लोके
स जगति खलु दृष्टो निर्विवेको विधाता ॥

३१५०

हंहो दैव सदैव विश्वघटनव्यापारबद्धादरं
त्वां याचेमहि बन्धुरेण शिरसा जन्मैव मा मास्तु नः ।
किं चान्यद्यदि संचरेम भुवने भूयोऽपि भूयात्तदा
ब्राह्मण्यं च वदान्यता च वसु च द्व्याातिश्च विद्या च नः ॥

३१५१

नेता यत्र बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वाहनम् ।
इत्याश्चर्यबलान्वितोऽपि बलजिद्भग्नोऽसुरैः संगरे
तद्युक्तं ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ॥

केषामपि.

३१५२

अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां
मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणक्लीबताम् ।
वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया
स्वेच्छादुर्ललिताद्भुतव्यसानिने दैवाय तस्मै नमः ॥

३१५३

परिभ्रमसि किं मुधा क्वचन चित्त विश्रम्यतां
स्वयं भवति यद्यथा भवति तत्तथा नान्यथा ।
अतीतमननुस्मरन्नपि च भाव्यसंकल्पय-
न्नतर्कितगमागमाननुभवामि भोगानहम् ॥

क्षेमेन्द्रस्य.

३१५४

यद्भावि तद्भवति नित्यमयत्नतोऽपि
यत्नेन चापि महता न भवत्यभावि ।
इत्थं विधातृवशवर्तिनि जीवलोके
किं दुःखमत्र पुरुषस्य विचक्षणस्य ॥

३१५५

पुत्रादप्यधिकं च विन्दति विभुर्भृत्यं हि भाग्योदये
पश्चात्सोऽपि तमेव निन्दति यथा शत्रुं विरुद्धे विधौ ।
किं कष्टेन दिवानिशं विहितया भक्त्या भृशं सेव्यया
दैवाधिष्ठितमेव तिष्ठति फलं जन्तोः शुभं वाशुभम् ॥

क्षेमेन्द्रस्य.

३१५६

धिग्दैवममलं नेत्रं पात्रं कज्जलभस्मनः ।
सच्छिद्रः समलो वक्रः कर्णः स्वर्णस्य भाजनम् ॥

कस्यापि.

---

## अथापत्पद्धतिः

३१५७

मौर्ख्यं सर्वापदां निष्ठा का हि नापदजानतः ।
तस्मिन्नप्यविषण्णो यः क्व सोऽन्यत्र विपत्स्यति ॥

३१५८

यदि नाम कुले जन्म तत्किमर्थं दरिद्रता ।
दरिद्रत्वेऽपि मूर्खत्वमहो दुःखपरंपरा ॥

३१५९

कः स्वभावगभीराणां जानीयाद्बहिरापदम् ।
बालापत्येन भृत्येन यदि सा न प्रकाश्यते ॥

कह्लणस्य.

३१६०

इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां जीवतामेव नश्यति ॥

३१६१

सन्तोऽपि न विराजन्ते हीनार्थस्येतरे गुणाः ।
आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥

३१६२

चण्डालश्च दरिद्रश्च द्वावेतौ पुरुषौ समौ ।
चण्डालस्य न गृह्णन्ति दरिद्रो न प्रयच्छति ॥

३१६३

वरं हि नरके वासो न तु दुश्चरिते गृहे ।
नरकात्क्षीयते पापं कुगृहात्परिवर्धते ॥

३१६४

नातः पापीयसीं कांचिदवस्थां शम्बरोऽब्रवीत् ।
यस्यां नैवाद्य न प्रातर्भोजनं तात विद्यते ॥

३१६५

न तथा बाध्यते राजन्प्रकृत्या निर्धनो जनः ।
यथा भद्राणि संप्राप्य तैर्विहीनः सुखोचितः ॥

३१६६

कुब्जस्य कीटखातस्य दावानिष्कुषितत्वचः ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥

३१६७

धर्मार्थकामहीनस्य परकीयान्नभोजिनः ।
काकस्येव दरिद्रस्य दीर्घमायुर्विडम्बना ॥

३१६८

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
इत्थमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥

३१६९

शीतमध्वा कदन्नं च वयोतीताश्च योषितः ।
मनसः प्रातिकूल्यं च जरायाः पञ्च हेतवः ॥

३१७०

सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम् ।
प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ॥

एते व्यासमुनेः.

३१७१
लज्जावतः कुलीनस्य याचितुं धनमिच्छतः ।
कण्ठे पारावतस्येव वाक्करोति गतागतम् ॥

३१७२
कण्ठे गद्गदता स्वेदो मुखे वैवर्ण्यवेपथू ।
म्रियमाणस्य चिह्नानि यानि तान्येव याचतः ।

३१७३
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ।
परचित्तगतान्दारान्पुत्रं च व्यसनातुरम् ॥
केषामपि.

३१७४
वीणा वंशश्चन्दनं चन्द्रभासः
शय्या यानं यौवनस्थास्तरुण्यः ।
नैतद्रम्यं क्षुत्पिपासार्दितानां
सर्वारम्भास्तण्डुलप्रस्थमूलाः ।

३१७५
खशभाष्यं तु काव्येन काव्यं गीतेन हन्यते ।
गीतं तु स्त्रीविलासेन स्त्रीविलासो बुभुक्षया ॥

३१७६
दानं न दत्तं न तपश्च तप्तं
नाराधितौ शंकरवासुदेवौ ।
अग्नौ रणे वा न हुतश्च कायः
शरीर किं प्रार्थयसे सुखानि ॥

३१७७
फलाशिनो मूलतृणाम्बुभक्षा
विवाससो निस्तरशायिनश्च ।
गृहे विमूढा मुनिवच्चरन्ति
तुल्यं तपः किं तु फलेन हीनम् ॥

३१७८

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः ।
सोढा दुःसहशीतवाततपनक्लेशा न तप्तं तपः ।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैरुज्झितम् ॥

३१७९

भग्ना वयं परिभवासिभिरुग्रधारै-
र्दारिद्र्यचण्डदहनेन नितान्तदग्धाः
बन्धूपकारविषमित्थमपीह भुक्तं
जीवाम एव रविजस्य किमस्ति निद्रा ॥

३१८०

अर्था न सन्ति न च मुञ्चति मां दुराशा
दानान्न संकुचति दुर्ललितं मनो मे ।
याञ्चा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं हि विलम्बनेन ॥

केषामपि.

३१८१

शीतेनोद्धूषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः
शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता
सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥

मातृगुप्तस्य.

३१८२

जीवन्त्यर्थक्षये नीचा याञ्चोपद्रववञ्चनैः ।
कुलाभिमानमूकानां साधूनां नास्ति जीवनम् ॥

क्षेमेन्द्रस्य.

३१८३

तावत्सन्ति सहाया यावज्जन्तुर्न कृच्छ्रमाप्नोति ।
अभिपतति शिरसि मृत्यौ कं कः शक्तः परित्रातुम् ॥

रविगुप्तस्य.

३१८४

रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥

कस्यापि.

३१८५

अम्बा तुष्यति न मया न स्नुषया सापि नाम्बया न मया ।
अहमपि न तया न तया वद राजन्कस्य दोषोऽस्ति ॥

भट्टकपर्दिनः.

३१८६

विकसामि रवावुदिते संकोचमुपैमि चास्तमुपयाते ।
दारिद्र्यसरसि मग्नः पङ्कजलीलामनुभवामि ॥

३१८७

रात्रौ जानुर्दिवा भानुः कृशानुः संध्ययोर्द्वयोः ।
इत्थं शीतं मया नीतं भानुभानुकृशानुभिः ॥

३१८८

घृतलवणतैलतण्डुलशाकेन्धनचिन्तयानुदिनम् ।
विपुलमतेरपि पुंसो नश्यति धीर्मन्दविभवत्वात् ॥

३१८९

प्रायः समासन्नपराभवाणां
धियो विपर्यस्ततमा भवन्ति ।
असंभवो हेममयस्य जन्तो-
स्तथापि रामो लुलुभे मृगाय ॥

३१९०

दधति न जनास्तन्नैराश्याददृष्टविभूतयो
यदुचितसुखभ्रंशाद्दुःखं निजच्युतसंपदः ।
भवति हि तथा जात्यन्धानां कुतो हृदि वेदना
नयनविषयं स्मृत्वा स्मृत्वा यथोद्धृतचक्षुषाम् ॥

भट्टानन्दकस्य.

३१९१

सखे खेदं मा गाः कलय किल तास्ता निजकलाः
स्वकीर्त्या वर्धस्व क्व न खलु तवैतद्व्यवसितम् ।
न तन्मोघत्यत्र स्फुरितमिति चेन्नैतदुचितं
विचित्रोत्साहानां किमिदमियदेव त्रिभुवनम् ॥

श्रीवासुदेवस्य.

३१९२

निरन्नस्थालीकं क्षुदुपहतसीदत्परिजनं
विना दीपान्नक्तं सुखगहनसंरुद्धतिमिरम् ।
अनाक्रान्तद्वारं प्रणयिभिरपूर्णोत्सवमहो
गृहं कारातुल्यं भवति खलु दुःखाय गृहिणः ॥

३१९३

दृष्टं दुर्जनचेष्टितं परिभवो लब्धः समानाज्जना-
त्पिण्डार्थे धनिनां कृतं श्वलडितं भुक्तं कपालेष्वपि ।
पद्भ्यामध्वनि संप्रयातमसकृत्सुप्तं तृणप्रस्तरे
यच्चान्यन्न कृतं कृतान्त कुरु हे तत्रापि सज्जा वयम् ॥

विक्रमादित्यस्य.

३१९४

भद्रे वाणि कुरुष्व तावदमलां वर्णानुपूर्वीं मुखे
चेतः स्वास्थ्यमुपैहि याहि गुरुते प्रज्ञे स्थिरत्वं भज ।
लज्जे तिष्ठ पराङ्मुखी क्षणमहो तृष्णे पुरः स्थीयतां
पापो यावदहं ब्रवीमि धनिनं देहीति दीनं वचः ॥

३१९५

उत्तिष्ठ क्षणमेकमुद्वह सखे दारिद्र्यभारं गुरुं
श्रान्तस्तावदहं चिरं मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन विदुषा गत्वा श्मशानं शवो
दारिद्र्यान्मरणं परं सुखमिति ज्ञात्वा स तूष्णीं स्थितः ॥

केषामपि.

३१९६

दीनां दीनमुखैः स्वकीयशिशुकैराकृष्टजीर्णांशुकां
क्रोशद्भिर्विधुरैः क्षुधार्तिविधुरां पश्येन्न चेद्गेहिनीम् ।
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥

श्रीभर्तृहरेः.

३१९७

मद्गेहे मशकीव मूषकवधूर्मूषीव मार्जारिका
मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः ।
इत्यापन्नशिशूनसून्विजहतः संप्रेक्ष्य झिल्लीरवै-
र्लूतातन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति ॥

कस्यापि.

३१९८

आसे चेत्स्वगृहे कुटुम्बभरणं कर्तुं न शक्तोऽस्म्यहं
सेवे चेत्सुखसाधनं मुनिवनं मुष्णन्ति मां तस्कराः ।
श्वभ्रे चेत्स्वतनुं त्यजामि नरकाद्भीरात्महत्यावशा-
न्नो जाने करवाणि दैव किमहं मर्तुं न वा जीवितुम् ॥

३१९९

मा भूज्जन्म महाकुले तदपि चेन्मा भूद्विपत्सापि चे-
न्मा भूद्भूरि कलत्रमस्ति यदि तन्मा भूद्दयार्द्रं मनः ।
तच्चेदस्ति तदस्तु मृत्युरथ चेत्तस्यापि नास्ति क्षण-
स्तज्जन्मान्तरनिर्विशेषसदसद्देशान्तरेऽस्तु स्थितिः ॥

३२००

यैः कारुण्यपरिग्रहान्न गणितः स्वार्थः परार्थं प्रति
यैश्चात्यन्तदयापरैर्न विहिता वन्ध्यार्थिनां प्रार्थना ।
ये चासन्परदुःखदुःखितधियस्ते साधवोऽस्तं गता-
श्चक्षुः संहर बाष्पवेगमधुना कस्याग्रतो रुद्यते ॥

३२०१

सक्तूञ्छोषयति प्लुतान्प्रतिकरोत्याक्रन्दतो बालका-
न्प्रत्यासिञ्चति कर्परेण सलिलं शय्यातृणं रक्षति ।
धृत्वा मूर्ध्नि पुराणशूर्पशकलं शून्ये गृहे व्याकुला
किं तद्यन्न करोति दुर्गतवधूर्देवे भृशं वर्षति ॥

३२०२

अप्रस्तावस्तुतिभिरनिशं कर्णशूलं करोति
स्वं दारिद्र्यं वदति वसनं दर्शयत्येव जीर्णम् ।
छायाभूतश्चलति न पुरः पार्श्वयोर्नैव पश्चा-
न्निःस्वः खेदं दिशति धनिनां व्याधिवद्दुश्चिकित्स्यः ॥

क्षेमेन्द्रस्य.

३२०३

गते सुहृदि शत्रुतां सततनिर्विवेके प्रभौ
गृहे कुगृहिणीवचःक्रकचदारिते वा हृदि ।
महाजनविवर्जिते सदसि मानिनां श्रेयसे
वरं मरणमेव वा शरणमन्यदेशान्तरम् ॥

३२०४

दारिद्र्यक्षितिपः स मे निजपतिस्तस्य प्रसादादभू-
द्याच्चा जीवनमम्बरं दश दिशो वासश्च देवालये ।
अस्मद्वैरिणि लब्धसंगतिरिति त्वय्याश्रये कुप्यता
मद्वृत्तिं विनियोजितास्त्वदरयः का नाम वृत्तिर्मम ॥

३२०५

तृणादपि लघुस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामपि प्रार्थयेदिति ॥

३२०६

आसीत्ताम्रमयं शरीरमधुना सौवर्णवर्णं गतं
मुक्ताहारलताश्रुबिन्दुनिवहैर्निःस्वस्य मे कल्पिता ।

स्वल्पं स्वल्पमनल्पकल्पमधुना दीर्घं वयः कल्पितं
स्वामिन्दुःख भवत्प्रसादवशतः किं किं न लब्धं मया ॥
केषामपि.

## अथ सेवापद्धतिः

३२०७
शीतवातातपक्लेशान्यत्सहन्ते हि सेवकाः ।
शतांशेनापि हि ततस्तपस्तप्त्वा सुखी भवेत् ॥

३२०८
जडेषु राजचित्तेषु सुलभे पिशुने जने ।
यदि जीवन्त्यहो चित्रं क्षणमप्यनुजीविनः ॥

३२०९
सर्वासामेव वृत्तीनां वृत्ती राजकुलाश्रया ।
अधर्मबहुला ह्येषा नित्योद्वेगा च भारत ॥

३२१०
नृपेणाहूयमानस्य यत्तिष्ठति भयं हृदि ।
तन्न तिष्ठति तुष्टानां वने मूलफलाशिनाम् ॥

३२११
द्वयं जहाति सेवकः सुखं च मानमेव च ।
यदर्थमर्थमीहते तदेव तस्य हीयते ॥

३२१२
आत्मविक्रयिणि क्लीबे सदा शङ्कितचेतसि ।
नित्यमिष्टवियोगार्ते किं सेवकपशौ सुखम् ॥

३२१३
अबुधैरर्थलोभेन पण्यस्त्रीभिरिव स्वयम् ।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥

३२१४
मनुष्यजातौ तुल्यायां भृत्यत्वं नाम गर्हितम् ।
प्रथमो यो न तत्रापि सोऽपि जीवत्सु गण्यते ॥

३२१५
एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता ।
ये पराधीनजन्मानस्ते चेज्जीवन्ति के मृताः ॥
३२१६
जन्मैव तावद्दुःखाय ततो दुर्गततापरा ।
दौर्गत्ये सेवया वृत्तिरहो दुःखपरंपरा ॥
३२१७
द्वारपालकराघातकिणीकृतगलोऽपि सन् ।
तथापि कुरुते सेवामहो तृष्णा गरीयसी ॥
३२१८
लगुडैर्हन्यमानोऽपि यदि जीवति सेवकः ।
तत्क्षणं पुनरायाति धिग्दैन्यमनपत्रपम् ॥
३२१९
कंधरावनतस्योर्वीं गतस्याधोमुखस्य ते ।
लज्जा न नाम निर्लज्जा गर्वो न गलितः कथम् ॥
३२२०
सेवकादपरो मूर्खस्त्रैलोक्येऽपि न विद्यते ।
दिने दिने नमन्मोहादुन्नतिं योऽभिवाञ्छति ॥
श्रीव्यासमुनेः.
३२२१
अतीव कर्कशाः स्तब्धा हिंस्रैर्जन्तुभिरावृताः ।
दुराराधाश्च विषमा ईश्वराः पर्वता इव ॥
३२२२
सेवा श्ववृत्तिर्यैरुक्ता तैर्न सम्यगुदाहृतम् ।
स्वच्छन्दचारी कुत्र श्वा विक्रीतासुः क्व सेवकः ॥
३२२३
करोति लाभहीनेन गौरवेण किमाश्रितः ।
क्षामस्येन्दोर्गुणं धत्ते कमीश्वरशिरोधृतिः ॥

३२२४

या प्रकृत्यैव चपला निपतत्यशुचावपि ।
स्वामिनां बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥

३२२५

पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम् ।
भूपालसेवनं पुंसामसिधारावलेहनम् ॥

केषामपि.

३२२६

भक्ते द्वेषो जडे प्रीतिरुचितं गुरुलङ्घनम् ।
मुखे च कटुता नित्यं धनिनां ज्वरिणामिव ॥

आनन्दवर्धनस्य.

३२२७

प्रभूतं धनमालोक्य यो राज्ञां द्वारि तिष्ठति ।
स बद्धः सौनिकश्वेव संशुष्यति न पुष्यति ॥

कस्यापि.

३२२८

क्षमी दाता गुणग्राही स्वामी दुःखेन लभ्यते ।
अनुकूलः शुचिर्दक्षो राजन्भृत्योऽपि दुर्लभः ॥

श्रीहर्षदेवतत्सेवकयोः.

३२२९

आज्ञा कीर्तिः पालनं ब्राह्मणानां
दानं भोगो मित्रसंरक्षणं च ।
येषामेते षड् गुणा न प्रवृत्ताः
कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥

३२३०

राजवल्लभतयोद्धतचित्ताः
सेवकास्त्यजत मानमुदारम् ।
रन्ध्रदर्शिभिरसंवृतमन्त्रैः
कस्य राजभुजगैः सह सख्यम् ॥

कस्यापि.

३२३१

आराध्यमानो बहुभिः प्रकारै-
र्नाराध्यते नाम किमत्र चित्रम् ।
अयं त्वपूर्वः प्रतिमाविशेषो
यत्सेव्यमानो रिपुतामुपैति ॥

३२३२

हसति हसति स्वामिन्युच्चै रुदत्यपि रोदिति
कृतपरिकरः स्वेदोद्गारं प्रधावति धावति ।
गुणसमुदितं दोषापेतं प्रनिन्दति निन्दति
धनलवपरिक्रीतो भृत्यः प्रनृत्यति नृत्यति ॥

धर्मकीर्तेः.

३२३३

सप्रस्वेदः पुलकपरुषः संभ्रमात्सप्रकम्पः
सान्तर्दाहः प्रशिथिलधृतिः सास्यशोषः सतर्षः ।
संवृत्तो यो गुरुरपि लघुर्हन्त तैस्तैः प्रकारै-
र्याञ्चाशब्दः स्पृशति पदवीं संनिपातज्वरस्य ॥

३२३४

शून्यार्थैर्वचनैर्मया नरपते कर्णौ तवापूरितौ
तेभ्यः शून्यतमस्त्वयापि बहुशो मत्कर्णपूरः कृतः ।
इत्थं वञ्चयतोः परस्परमयं कालो व्रजत्यावयोः
क्षीणा शक्तिरहं जितस्त्वमजितो जेता नृपः शस्यते ॥

किशोरकस्य.

३२३५

उन्नत्यै नमति प्रभुं प्रभुगृहान्द्रष्टुं बहिस्तिष्ठति
स्वद्रव्यव्ययमातनोति जडधीरागामिवित्ताशया ।
प्राणान्प्राणितुमेव मुञ्चति रणे क्लिश्नाति भोगेच्छया
सर्वं तद्विपरीतमेव कुरुते तृष्णान्धदृक्सेवकः ॥

३२३६

सन्ति स्वादुफला वने तरुवराः शुद्धं पयो नैर्झरं
वासो वल्कलमाश्रयो गिरिगुहा शय्या लतापल्लवैः ।
आलोकाय निशासु चन्द्रकिरणाः सख्यं कुरङ्गैः सह
स्वाधीने विभवेऽप्यहो नरपतिं याचन्ति मूढा नराः ॥

केषामपि.

३२३७

सत्ये शङ्काचकितमनसो वञ्चकग्रामलीनाः
शैलस्थूलोपकृतिविफलाः स्वल्पदोषेऽतिकोपाः ।
मग्नोद्विग्नाः पिशुनवचना धर्मनर्मोक्तिदुष्टाः
साधुद्विष्टाः प्रखलपुरुषाः सर्वथा भूमिपालाः ॥

३२३८

द्वारे रुद्धमुपेक्षते कथमपि प्राप्तं पुरो नेक्षते
विज्ञप्तौ गजमीलनानि कुरुते गृह्णाति वाक्यच्छलम् ।
निर्यातस्य करोति दोषगणनां स्वल्पापराधे यमः
स स्वामी यदि सेव्यते मरुतटे किं नः पिशाचैः कृतम् ॥

क्षेमेन्द्रस्य.

३२३९

नमन्नपि हरिर्हन्यादाश्लिष्यन्नपि पन्नगः ।
विहसन्नपि वेतालः स्तुवन्नपि महीपतिः ॥

३२४०

काके शौचं द्यूतकारेषु सत्यं
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता ।
ज्ञाने भ्रान्तिः स्त्रीषु कामोपशान्ती
राजा मित्रं केन दृष्टं श्रुतं वा ॥

---

## अथ तृष्णापद्धतिः

३२४१

मनोरथरथारूढं युक्तमिन्द्रियवाजिभिः ।
भ्राम्यत्येव जगत्कृत्स्नं तृष्णासारथिचोदितम् ॥

३२४२

बलिभिर्मुखमाक्रान्तं पलितै रञ्जितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥

३२४३

यौवनं जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् ।
जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥

३२४४

यथा हि शृङ्गं गोः काले वर्धमानस्य वर्धते ।
एवं तृष्णापि वित्तेन वर्धमानेन वर्धते ॥

३२४५

अकर्तव्येष्वसाध्वीव तृष्णा प्रेरयते जनम् ।
तमेव सर्वपापेभ्यो लज्जा मातेव रक्षति ।।

३२४६

आशा बलवती कष्टं नैराश्यं परमं सुखम् ।
आशा निराशाः कृत्वा तु सुखं स्वपिति पिङ्गला ॥

३२४७

तृष्णाखनिरगाधेयं दुष्पूरा केन पूर्यते ।
या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥

३२४८

तृष्णे त्वमपि तृष्णार्ता त्रिषु स्थानेषु रज्यसि ।
व्याधितेष्वनपत्येषु जरापरिणतेषु च ॥

३२४९

आसन्नान्पुरतो भावान्दर्शयित्वा पुरः पुरः ।
छागो हरितमुष्टयेव दूरं नीतोऽस्मि तृष्णया ॥

३२५०

वर्तते येन न विना नरो वाञ्छतु नाम तत् ।
ततोऽधिकार्थप्रणयी पृष्टो दद्यात्किमुत्तरम् ॥

३२५१

विभूतिरर्थत्यपि याचकानां
न दुर्गतं केचिदिहाद्रियन्ते ।
पीताम्बरोऽब्धेः समवाप लक्ष्मीं
दिगम्बरस्योपनतोऽर्धचन्द्रः ॥

एते व्यासमुनेः.

३२५२

तावद्गुणा गुरुत्वं च यावन्नार्थयते परम् ।
अर्थित्वे वर्तमानस्य न गुणा न च गौरवम् ॥

३२५३

विद्वत्तां चैव शौर्यं च सौजन्यं च कुलीनताम् ।
खलीकरोति याच्ञैका दुःशीलेवाङ्गना कुलम् ॥

३२५४

च्युता दन्ताः सिता केशा वाङ्निरोधः पदे पदे ।
पातसज्जमिमं देहं तृष्णा साध्वी न मुञ्चति ॥

३२५५

इच्छति शती सहस्रं ससहस्रः कोटिमीहते कर्तुम् ।
कोटियुतोऽपि नृपत्वं नृपोऽपि बत चक्रवर्तित्वम् ॥

३२५६

चक्रधरोऽपि सुरत्वं सुरोऽपि सुरराज्यमीहते कर्तुम् ।
सुरराजोऽप्यूर्ध्वगतिं तथापि न निवर्तते तृष्णा ॥

केषामपि.

३२५७

या सा जगत्परिभवस्य निमित्तभूता
हेतुः स्वयं सुरपतेरपि लाघवस्य ॥
सा मां विडम्बयति नाथ सदैव तृष्णा
छिन्धि प्रसह्य भगवन्नपुनर्भवाय ॥

अवधूतस्य.

३२५८

आराध्य भूपतिमवाप्य ततो धनानि
भोक्ष्यामहे किल वयं सततं सुखानि ।

इत्याशया भवविमोहितमानसानां
कालः प्रयाति मरणावधिरेष पुंसाम् ॥

३२५९

दुग्धं च यत्तदनु यत्क्वथितं ततो नु
माधुर्यमस्य हृतमुन्मथितं च वेगात् ।
जातं पुनर्घृतकृते नवनीतवृत्ति
स्नेहो निबन्धनमनर्थपरंपराणाम् ॥

सुभद्रायाः.

३२६०

आसिष्ये सुखितो गृहीति विहितो मोहेन दारग्रह-
स्तत्सङ्गात्सुतदासबान्धवसुहृत्संबन्धिनामुद्भवः ।
तन्निर्वाहकदर्थनापरिभवानौचित्यचिन्ताजुषः
किं सौख्यं कतमा गृहस्थितिरतोऽनर्थो मया स्वीकृतः ॥

कस्यापि.

३२६१

खलोल्लापाः सोढाः कथमपि तदाराधनपरै-
र्निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतो वित्तस्तम्भप्रणिहितधियामञ्जलिरपि
त्वमाशे मोघाशे किमपरमतो नर्तयसि माम् ॥

भर्तृहरेः.

३२६२

देशे भ्रान्तमनेकदुर्गविषमे प्राप्तं न किंचित्फल-
मुत्कण्ठापरिखेदितेन मनसा नीतं वृथा यौवनम् ।
त्यक्त्वा मानकुलानुरूपचरितं सेवा कृता निष्फला
तृष्णे ब्रूहि किमन्यदिच्छसि परं तत्रापि सज्जा वयम् ॥

कस्यापि.

३२६३

अहो तृष्णावेश्या सकलजनतामोहनकरी
विदग्धा मुग्धानां हरति विवशानां शमधनम् ।

विपद्दीक्षादक्षासहतरलतारैः प्रणयिनी-
कटाक्षैः कूटाक्षैः कपटकुटिलः कामकितवः ॥

क्षेमेन्द्रस्य.

३२६४

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषुघटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥

---

## अथानित्यतापद्धतिः

३२६५

अनित्यते जगन्निन्द्ये वन्दनीयासि संप्रति ।
या करोषि प्रसङ्गेन दुःखानामप्यनित्यताम् ॥

कस्यापि.

३२६६

सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः ।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥

३२६७

मस्तकस्थायिनं मृत्युं यदि विन्दत्ययं जनः ।
आहारोऽपि विमुच्येत किमुताकार्यकारिता ॥

३२६८

अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
न ते तव न तेषां त्वं तत्र का परिदेवना ॥

३२६९

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे नानुशोचितुमर्हसि ॥

३२७०

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥

३२७१

अशोच्यः शोचते शोच्यं किं वा शोच्यो न शोच्यते ।
कश्च कस्येह शोच्योऽस्ति देहेऽस्मिन्बुद्बुदोपमे ॥

३२७२

येऽपि नास्तीति मन्यन्ते तदैश्वर्यकदर्थिताः ।
दिनैः कतिपयैरेव तान्समीकुरुतेऽन्तकः ॥

३२७३

प्रबोध्यन्ते च ये तूर्यैर्मधुरैर्गीतवादितैः ।
ये चानाथाः परान्नादाः कालस्तेषां समक्रियः ॥

३२७४

यद्गतं तदतिक्रान्तं यदेष्यत्तच्च दूरतः ।
वर्तमानसुखभ्रान्तिभेदो भोगिदरिद्रयोः ॥

३२७५

क्रिमयो भस्म विष्ठा वा निष्ठा यस्येयमीदृशी ।
स कायः परपीडाभिर्धार्यतामिति को नयः ॥

३२७६

यस्यान्ते श्वापि कुरुते चरणौ मूर्ध्न्यशङ्कितः ।
अपहृत्य परान्पुंभिः कायः सोऽपि हि धार्यते ॥

३२७७

कथं ते व्यक्तदुर्वृत्ताः सुखं रात्रिषु शेरते ।
मरणान्तरिता येषां नरकेषूपपत्तयः ॥

३२७८

दिष्ट्या दूरोज्झितापायां संप्राप्तोऽस्मि जराभुवम् ।
महान्यौवनकान्तारः कुशलेनातिवाहितः ॥

३२७९

कृपणं विलपन्नार्तो जरया जर्जरीकृतः ।
ज्ञातीनां रुदतां मध्ये म्रियते न स पूरुषः ॥

३२८०

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥

३२८१

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
नहि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥

३२८२

लम्बमाने यदादित्ये न दत्तं धनमर्थिनाम् ।
नहि जानामि तद्वित्तं प्रातः कस्य भविष्यति ॥

३२८३

यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥

३२८४

नियतो देहिनां मृत्युरनित्यं खलु जीवितम् ।
को हि जानाति नामाद्य प्रातः कस्य भविष्यति ॥

३२८५

इदं युगसहस्रेषु भविष्यदभवद्दिनम् ।
तदप्यद्यत्वमापन्नं का कथा मरणावधेः ॥

३२८६

अवश्यं भाविनं नाशं भावित्वाद्विद्ध्युपस्थितम् ।
अयमेव हि ते कालः पूर्वमासीदनागतः ॥

३२८७

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥

३२८८

मातापितृसहस्राणि पुत्रदारशतानि च ।
युगे युगे व्यतीतानि कस्य ते कस्य वा वयम् ॥

३२८९

समानानि व्यतीतानि नवानि न समानि मे ।
आत्मानमनुशोचामि सार्थभ्रष्ट इवाध्वगः ॥

३२९०

उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ।
मरणव्याधिशोकानां किमद्य निपतिष्यति ॥

३२९१

सुखास्वादलवः कोऽपि संसारे सत्समागमः ।
यद्वियोगाग्निदग्धस्य मनसो नास्ति भेषजम् ॥

३२९२

किं धनेन करिष्यन्ति मनुष्या भङ्गुराश्रयाः ।
यदर्थं धनमिच्छन्ति शरीरं कस्य तत्स्थिरम् ॥

३२९३

शुक्लानि दिनखण्डानि निपतन्ति तवाग्रतः ।
आयुषश्छिद्यमानस्य मृत्युना किं न पश्यसि ॥

३२९४

आसन्नतरतामेति मृत्युर्याति दिने दिने ।
आघातं नीयमानस्य वध्यस्येव पदे पदे ॥

३२९५

मृत्योर्बिभेषि किं मर्त्य नहि भीतान्विमुञ्चति ।
अजातान्नैव गृह्णाति कुरु यत्नमजन्मने ॥

३२९६

तिष्ठन्तं च शयानं च मृत्युरभ्येति वै यदा ।
किं पल्वले मत्स्य इव सुखं स्वपिषि पुत्रक ॥

३२९७

करिष्यामि करिष्यामि करिष्यामीति चिन्तया ।
मरिष्यामि मरिष्यामि मरिष्यामीति विस्मृतम् ॥

३२९८

तुल्यजातिवयोरूपान्हतान्पश्यसि मृत्युना ।
कथं ते नास्ति निर्वेदो लौहं हि हृदयं तव ॥

३२९९

कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वं पर्यन्तभङ्गुरम् ॥

कस्यापि.

३३००

श्वः श्वः प्राणप्रयाणेऽपि न स्मरन्ति स्मरद्विषम् ।
मग्नाः कुटुम्बजम्बाले बालवन्मोहमोहिताः ॥

श्रीहर्षस्य.

३३०१

अहो संसृतिवेश्येयं रागाद्युद्दीपनोद्यता ।
रसमुत्पाद्य सर्वेषामन्ते वैरस्यकारिणी ॥

३३०२

अज्ञानवलितो बाल्ये मदमूढश्च यौवने ।
वार्द्धके विह्वलाङ्गश्च कदा कुशलभाग्जनः ॥

एतौ. प० श्रीबकस्य.

३३०३

अज्ञानोपहतो बाल्ये यौवने मदनाहतः ।
शेषे कलत्रचिन्तार्तः किं करोतु कदा जनः ॥

३३०४

बाल्यमद्य दिनैरेव यौवनश्रीस्ततो जरा ।
देहेऽपि नैकरूपत्वं कास्था बाह्येषु वस्तुषु ॥

एतौ वाल्मीकिमुनेः.

३३०५

आपन्नया सन्नगिरा वेपमानोरुमूलया ।
जातो मे जरया सार्धं नववध्वेव संगमः ॥

३३०६

धर्मस्यार्थस्य कामस्य यशसो जीवितस्य च ।
अतृप्ताः पुरुषा राजन्याता यास्यन्ति यान्ति च ॥

३३०७

आयुषः क्षण एकोऽपि न लभ्यः स्वर्णकोटिभिः ।
स वृथा नीयते येन तस्मै नृपशवे नमः ॥

३३०८

पृथिवी दह्यते यत्र मेरुश्चापि विशीर्यते ।
शुष्यत्यम्भोनिधिजलं शरीरे तत्र का कथा ॥

३३०९

पुरंदरसहस्राणि चक्रवर्तिशतानि च ।
निर्वापितानि कालेन प्रदीपा इव वायुना ॥

श्रीव्यासमुनेः.

३३१०

एतेन बद्धबलिना संकोचमवाप्य वृद्धदेहेन ।
यातं हरिणेव मया द्वित्राणि पदानि कृच्छ्रेण ॥

३३११

ऋज्वी स्थिरा सुवृत्ता पाणिग्रहणोज्ज्वला सुवंशोत्था ।
संधारयति पतन्तं संप्रति गृहिणीव यष्टिर्माम् ॥

३३१२

इष्टा बालकचेष्टा यौवनदर्पोऽथ वृद्धवैराग्यम् ।
सापि गता सोऽपि गतस्तदपि गतं स्वप्नमायेयम् ॥

केषामपि.

३३१३

क्षणसंपदियं सुदुर्लभा
प्रतिलब्धा पुरुषार्थसाधनी ।
यदि नात्र विचिन्त्यते हितं
पुनरप्येष समागमः कुतः ॥

बोधिसत्त्वस्य.

३३१४

यदि जन्मजरामरणं न भवे-
द्यदि चेष्टवियोगभयं न भवेत् ।
यदि सर्वमनित्यमिदं न भवे-
दिह जन्मनि कस्य रतिर्न भवेत् ॥

३३१५

चला विभूतिः क्षणभङ्गि यौवनं
कृतान्तदन्तान्तरवर्ति जीवितम् ।
तथाप्यवज्ञा परलोकसाधने
नृणामहो विस्मयकारि चेष्टितम् ॥

३३१६

संपदो जलतरङ्गविलोला
यौवनं त्रिचतुराणि दिनानि ।
शारदाभ्रपरिचञ्चलमायुः
किं धनैः परहितानि कुरुध्वम् ।

३३१७

धर्मात्मजेन चरणाविह वन्दितौ मे
भीमेन सार्धमिह संकथिताः कथाश्च ।
अत्रार्जुनश्च यमजौ च सहानुयातौ
स्थानानि तानि खलु सन्ति न ते मनुष्याः ॥

अयं व्यासस्य.

३३१८

चेतोहरा युवतयः सुहृदोऽनुकूलाः
सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः ।
नानाविधोपकरणाः करिणस्तुरंगाः
संमीलिते हि नयने न तदस्ति किंचित् ॥

श्रीविक्रमादित्यस्य.

३३१९

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनु-
र्नरः संसाराङ्के विशति यमधानीजवनिकाम् ॥

भर्तृहरिः.

३३२०

नरकनिलयात्प्रेतावासं ततस्त्रिदशालयं
त्रिदशभवनात्तिर्यग्योनिं परैति शुभक्षयात् ।
पुनरुपरतं तिर्यग्योनेर्मनुष्यगतावपि
भ्रमति विवशं कर्माविद्धं जयद्रथचक्रवत् ॥

साराशीत्याम्.

३३२१

जातोऽहं जनको ममैष जननी क्षेत्रं कलत्रं कुलं
पुत्रा मित्रमरातयो वसु गृहं भ्राता स्वसा बान्धवाः ।
संसारे शयने यथाप्य सुचिरं निद्रामविद्यामयीं
हंहो चित्त विघूर्णितो बहुविधान्स्वप्नानिमान्पश्यसि ॥

कृष्णमिश्रस्य.

३३२२

सेवध्वं विबुधास्तमन्धकरिपुं मा क्लिष्ट कष्टश्रुते
यस्मादत्र परत्र च त्रिजगति त्राता स एकः शिवः ।
आयाते नियतेर्वशादविरले कालात्करालाद्भये
कुत्र व्याकरणं क्व तर्ककलहः कुत्रापि काव्यश्रमः ॥

श्रीमद्राजानकलौलकस्य.

३३२३

ग्रीष्मे हारतुषारचन्दनचयश्चीनांशुकं चन्द्रिका
शीते राङ्कवकुङ्कुमाङ्कतरुणीपीनस्तनालिङ्गनम् ।
रात्रौ वेणुरवाग्र्यवाररमणीगीतं दिने सत्सभा
यस्यैतत्क्रियते स कस्य रुचिरः कायः कृतघ्नः स्थिरः ॥

क्षेमेन्द्रस्य.

३३२४

मृत्यो मुञ्च जराकरेण पुरुषं केशेषु मा मा ग्रहीः
संसारादपलायनप्रतिभुवो रागादयो यत्स्थिताः ।
तृष्णाबन्धनबद्धमानसशिखं किं वेत्सि नेदं जग-
देहीत्यादरजल्पितानि भवतः किं नाशयिष्याम्यहम् ॥

३३२५

माने म्लानिमुपागते विगलिते भोगाकुले यौवने
कालेन क्षपितेषु बन्धुषु शनैर्लब्धे विवेकोदये ।
विच्छिन्नावसरोपभोगलघुतामुक्तस्पृहाणां परं
सत्यं सत्यमभाव एव हि सुखं जाने धनानामहम् ॥

३३२६

रम्यं हर्म्यतलं न किं वसतये श्रव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये ।
किं तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपानल-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥

३३२७

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजरावियोगमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥

केषामपि.

३३२८

भ्रातः कष्टमहो गतः स नृपतिः सामन्तचक्रं च त-
त्पार्श्वे तस्य च सा विदग्धपरिषत्ताश्चन्द्रबिम्बाननाः ।
उद्वृत्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथाः
सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥

श्रीकमलायुधस्य.

३३२९

संसारे सुखितामवाप्य सुचिरं सार्कं सुहृद्बान्धवै-
रन्ते क्रूरकृतान्तदन्तदलनक्लेशस्य भागी जनः ।
कार्यं कार्यमतो विचार्य निपुणैर्मोक्षोपलब्धिक्षमं
सामग्री पुनरीदृशी न घटते कल्पैरनल्पैरपि ॥

३३३०

आयूंषि क्षणिकानि यौवनमपि प्रायो जराध्यासितं
संयोगा विरहावसानविरसा भोगाः क्षणध्वंसिनः ।
जानन्तोऽपि यथाव्यवस्थितमिदं लोकाः समस्तं जग-
च्चित्रं यद्गुरुगर्वभावितधियः क्रुध्यन्ति माद्यन्ति च ॥

३३३१

उत्थायोत्थाय पापे परिणमति मतिर्मन्दबुद्धे यथा ते
न त्रासो नैव लज्जा न च भवति घृणा कुर्वतः कर्म पापम् ।
नूनं सा न श्रुता ते ज्वलदनलशिखा रौरवारावरौद्रा
तीक्ष्णायःकीलचक्रक्रकचपटुरवा राजधानी यमस्य ॥

कस्यापि.

---

## अथ विषयोपहासः

३३३२

जन्मान्तरशताभ्यस्ता विषयेषु मतिर्नृणाम् ।
जरद्गौरिव सस्येभ्यः सा हि दुःखेन वार्यते ॥

३३३३

अपि चण्डानिलोद्भूतप्रसरस्य महोदधेः ।
शक्यते प्रसरो रोद्धुं नानुरक्तस्य चेतसः ॥

श्रीव्यासमुनेः.

३३३४

यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् ।
दण्डमुद्यम्य लोकोऽयं शुनः काकांश्च वारयेत् ॥

३३३५

लालेत्युद्विजते लोको वक्त्रासवमिति स्पृहा ।
प्रवञ्च्यते जनेनात्मा संज्ञाशब्दैः स्वयं कृतैः ॥

३३३६

प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया ।
तृप्ताः कामेन बाध्यन्ते जन्तवो निशि निद्रया ॥

३३३७

या इमाः प्रेक्षसे राजन्मदनव्याधवागुराः ।
आसामेव प्रभावेण ज्वलन्ति नरकाग्नयः ॥

३३३८

रक्ता हरन्ति सर्वस्वं प्राणानपि विरागतः ।
अहो रागविरागाभ्यां कष्टकष्टा हि योषितः ॥

३३३९

प्राज्ञं विनीतं स्वाचारं विद्वांसमपि मन्त्रिणम् ।
छलयन्ति नरं नित्यमेता योषित्पिशाचिकाः ॥

३३४०

नग्नत्वमशुचिस्पर्शो मूढताव्यक्तभाषणम् ।
कामिनः सदृशं सर्वमेतदुन्मत्तकस्य च ॥

३३४१

उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरक्रिमेः कस्य जायते ॥

३३४२

प्रस्वेदमलादिग्धेन वहता मूत्रशोणितम् ।
व्रणेन विकृतेनेदं सर्वमन्धीकृतं जगत् ॥

३३४३

अधोमुखैकदंष्ट्रेण विषशुक्रप्रवाहिणा ।
अनेन दुश्चिकित्स्येन जगद्दष्टं भगाहिना ॥

कस्यापि.

३३४४
ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
तस्मात्संजायते कामः कामात्क्रोधोऽपि जायते ॥

३३४५
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥
व्यासमुनेः.

३३४६
संतोषैश्वर्यसुखिनां दूरे दुर्गतिभूमयः ।
भोगाशापाशबद्धानामवमानाः पदे पदे ॥

३३४७
सर्वत्र संपदस्तस्य संतुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥

३३४८
संतोषामृततृप्तस्य महतः पूर्णचेतसः ।
क्षीराब्धेरिव शुद्धस्य मुखे लक्ष्मीर्विराजते ॥

३३४९
अहो नु चित्रं पद्मोत्थैर्बद्धास्तन्तुभिरद्रयः ।
अविद्यमाना याविद्या तया सर्वे वशीकृताः ॥
एते भगवद्वाल्मीकिमुनेः.

३३५०
जन्मनि क्लेशबहुले किं नु दुःखमतः परम् ।
इच्छायाः पूर्णता नास्ति यच्चेच्छा न निवर्तते ॥

३३५१
दोषान्दोषतया पश्यन्कालेनापि विरंस्यति ।
का कथा दोषविरतौ तद्गुणग्रहमानिनः ॥

३३५२
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

३३५३

अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थान्दुःखभाजनान् ।।

३३५४

संमोहयन्ति संपत्सु तापयन्ति विपत्सु च ।
खेदयन्त्यर्जने काले कदा भोगाः सुखावहाः ।।

३३५५

अहिंसा धाम धर्मस्य दुःखस्यायतनं स्पृहा ।
सङ्गत्यागः पदं मुक्तेर्भोगाभ्यासः पदं शुचः ।।

३३५६

यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि ।
भक्ष्यते सलिले मत्स्यैस्तथा सर्वेण वित्तवान् ।।

३३५७

राजतः सलिलादग्नेश्चौरतः स्वजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ।।

३३५८

अपकारिषु मा पापं चिन्तयस्व महामते ।
स्वयमेव हि नश्यन्ति कूलजाता इव द्रुमाः ।।

३३५९

न द्विषन्तः क्षयं यान्ति यावज्जीवमपि घ्नतः ।
क्रोधमेव तु यो हन्ति तेन सर्वे द्विषो हताः ।।

३३६०

अदीर्घदर्शिभिः क्रूरैर्मूढैरिन्द्रियसायकैः ।
हसद्भिः क्रियते कर्म रुदद्भिरनुभूयते ।।

३३६१

आत्मैव यदि नात्मानमहितेभ्यो निवारयेत् ।
कोऽन्यो हिततरस्तस्माद्य एनं विनिवारयेत् ।।

३३६२

इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा निरौषधं स्थानं स रुजः किं करिष्यति ॥

३३६३

स्वार्थसंप्रतिपत्त्यर्थमात्मीयानीन्द्रियाण्यपि ।
हितं व्यतीत्य वर्तन्ते कास्था मित्राप्तबन्धुषु ॥

श्रीव्यासमुनेः.

३३६४

गोभुजां वल्लभा लक्ष्मीर्मातङ्गोत्सङ्गलालिता ।
सेयं स्पृहां समुत्पाद्य दूषयत्युन्नतात्मनः ॥

कह्लणस्य.

३३६५

श्वस्त्वया सुखसंवित्तिः स्मरणीयाधुनातनी ।
इति स्वप्नोपमान्मत्वा कामान्मा गास्तदङ्गताम् ॥

भारवेः.

३३६६

मातापितृमयो बाल्ये यौवने दयितामयः ।
तदपत्यमयः शेषे मूढो नात्ममयः क्वचित् ॥

३३६७

जायमानो हरेद्भार्यां वर्धमानो हरेद्धनम् ।
म्रियमाणो हरेत्प्राणान्नास्ति पुत्रसमो रिपुः ॥

एतौ श्रीव्यासमुनेः.

३३६८

विषस्य विषयाणां च दूरमत्यन्तमन्तरम् ।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥

चन्द्रगोपिनः.

३३६९

मृगो मृगयुगीतेन नीयते शरगोचरम् ।
विषयास्वादलुब्धानां भवन्तीह विपत्तयः ॥

हरिभट्टस्य.

३३७०

अर्थप्रियतयात्मानमप्रियाय ददाति या ।
तामात्मन्यपि निःस्नेहां कोऽनुरक्तेति मन्यते ॥

३३७१

को नु वेश्याजनात्तस्मात्कुशलेनापयास्यति ।
समृद्धिर्गुह्यकेशानामपि यत्र विहन्यते ॥

एतौ क्षेमेन्द्रस्य.

३३७२

यतो यतो निवर्तते ततस्ततो विमुच्यते ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥

३३७३

अतिवाहितमातिगहनं विनापवादेन यौवनं येन ।
दोषनिधाने जन्मनि किं न प्राप्तं फलं तेन ॥

३३७४

महति कुलेऽपि च जाता योषित्प्रायेण मधुपमालेव ।
दानावर्जितहृदया चुम्बति मातङ्गवक्त्रमपि ॥

कयोरपि.

३३७५

हिंसाप्रभवो विजयस्तस्य फलं श्रीस्तस्यः सुखं क्षणिकम् ।
तत्प्राप्तये हि शुद्धं धर्मं च यशश्च को जह्यात् ॥

भदन्तभास्करस्य.

३३७६

अभ्यासो रतिहेतोर्भवति नराणां न वस्तुसद्गुणतः ।
सत्यपि मांसोपचये रागाय कुचौ स्फिजौ न पुनः ॥

३३७७

दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः ।
कोऽयं जनस्य मोहो ये रिपवस्तेषु सुहृदाशा ॥

कयोरपि.

३३७८

शमसुखशीलितमनसामशनमपि द्वेषमेति किमु कामः ।
स्थलमपि पचति झषाणां किमङ्ग पुनरङ्गमङ्गारः ॥

शङ्ककस्य.

३३७९

यथा हि कश्चित्क्षुदुपद्रुतः श्वा
शुष्कास्थिसंघट्टविचूर्णितास्यः ।
स्वं शोणितं विन्दति तत्प्रसूतं
तथेन्द्रियान्धः सुखमङ्गनानाम् ॥

कस्यापि.

३३८०

मधु तिष्ठति वाचि योषितां
हृदि हालाहलमेव केवलम् ।
अत एव निपीयतेऽधरो
हृदयं मुष्टिभिरेव ताड्यते ॥

कालिदासमाघयोः.

३३८१

यदेव ते लाघवहेतुरर्थिता
पतन्ति यन्मूर्ध्नि निकारपांसवः ।
स्पृशन्त्यधिक्षेपशराश्च यन्मन-
स्तदङ्गनाभिः क्रियते शरीरिणाम् ॥

३३८२

स्थितासनस्था शयिता पराङ्मुखी
स्वलंकृता वाप्यनलंकृताथवा ।
निरीक्ष्यमाणा प्रमदा सुदुर्बलं
मनुष्यमालेख्यगतापि कर्षति ॥

३३८३

स्मितेन हावेन च लज्जया भिया
पराङ्मुखैरर्धकटाक्षवीक्षितैः ।

वचोभिरीर्ष्याकलहेन लीलया
समस्तभावैः खलु बन्धनं स्त्रियः ॥

३३८४

कामं विषं च विषयाश्च निरीक्ष्यमाणाः
श्रेयो विषं न विषयाः परिसेव्यमानाः ।
एकत्र जन्मनि विषं विनिहन्ति पीतं
जन्मान्तरेषु विषयाः परितापयन्ति ॥

चन्द्रगोपिनः.

३३८५

विरमत बुधा योषित्सङ्गात्सुखात्क्षणभङ्गुरा-
त्कुरुत करुणामैत्रीप्रज्ञावधूजनसंगमम् ।
न खलु नरके हाराक्रान्तं वधूस्तनमण्डलं
शरणमथवा श्रोणीबिम्बं रणन्मणिमेखलम् ॥

कस्यापि.

३३८६

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥

जयादित्यस्य.

३३८७

तृषा शुष्यत्यास्ये पिबति सलिलं शीतसुरभि
क्षुधार्तः सञ्छालीन्कवलयति मांसपाकवलितान् ।
प्रदीप्ते रागाग्नौ घननिविडमाश्लिष्यति वधूं
प्रतीकारे व्याधेः सुखमिति विपर्यस्यति जनः ॥

३३८८

समाश्लिष्यत्युच्चैः पिशितघनपिण्डं स्तनधिया
मुखं लालापूर्णं पिबति चषकं सासवमिति ।

अमेध्यक्लेदार्द्रे पथि च रमते स्पर्शरसिको
महामोहान्धानां किमिव कमनीयं त्रिजगताम् ॥

३३८९

सुधौतं कौशेयं सुरभि कुसुमं कौङ्कुममपि
क्षणात्तद्यस्मिन्पतितमशुचित्वे निपतति ।
विगन्धान्निःष्यन्दान्वमति नवभिर्यो व्रणमुखैः
कथं तस्मिन्काये सुभग बहुमानोऽत्रभवताम् ॥

धारनागस्य.

३३९०

कृशः काणः खञ्जः श्रवणविकलः पुच्छरहितः
क्षुधाक्षामो वृद्धः पिठरककपालार्पितकरः ।
व्रणैः पूयक्लिन्नैः क्रिमिकुलकृतस्रावबहुलैः
शुनीमभ्येति श्वा तमपि मदयत्येव मदनः ॥

कस्यापि.

३३९१

परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ।
कुणपः कामिनी मांसमिति तिस्रो विडम्बनाः ॥

३३९२

अशनैरशनैर्बाल्ये यौवने घस्मरात्स्मरात् ।
कल्यवैकल्यतः शेषे स्फुटं नष्टं वयो नृणाम् ॥

---

## अथ परिदेवना

३३९३

मनोरथैकसाराणामेवमेव गतं वयः ।
अद्यापि न कृतं किंचित्सतां संस्मरणोचितम् ॥

३३९४

यातं यौवनमधुना वनमधुना शरणमस्माकम् ।
स्फुरदुरुहारमणीनां हा रमणीनां गतः कालः ॥

३३९५

स्वस्ति सुखेभ्यः संप्रति सलिलाञ्जलिरेव मन्मथकथायाः ।
ता मामतिवयसं बत तरलदृशः स्खलितमीक्षन्ते ॥

३३९६

भोगा न भुक्ता वयमेव भुक्ता-
स्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव याता-
स्तृष्णा न जीर्णा वयमेव जीर्णाः ॥

केषामपि.

३३९७

लावण्यपण्यसुरतक्रयविक्रयस्य
कालो गतः प्रथमयौवनविभ्रमस्य ।
गात्रं हि मे वलितरङ्गसहस्रचित्रं
लज्जामपास्य तरुणायत एव चित्तम् ॥

३३९८

निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्योत्थानं घनतिमिररुद्धे च नयने
अहो धृष्टः कायस्तदपि मरणापायचकितः ॥

३३९९

स्फुटापायः कायः सखिसुतसुखं स्थैर्यविमुखं
महारोगा भोगाः कुवलयदृशः शल्यसदृशः ।
गृहावेशः क्लेशः प्रकृतिचपला श्रीरपि खला
यमः स्वैरी वैरी तदपि च हितं नैव विहितम् ॥

३४००

न प्राप्ता भुवि वादिदन्तिदमनी विद्या विनीतोचिता
खड्गाग्रैः करियूथकुम्भदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलतया शून्यालये दीपवत् ॥

## अथ मनोरथः

३४०१

कदा संसारजालान्तर्बद्धं त्रिगुणरज्जुभिः ।
आत्मानं मोचयिष्यामि शिवभक्तिशलाकया ॥

३४०२

वाङ्मनःकायकर्माणि विनिवेश्य त्वयि प्रभो ।
त्वन्मयीभूय निर्द्वन्द्वः कश्चित्स्यामपि कर्हिचित् ॥

३४०३

मलतैलाक्तसंसारवासनावर्तिदाहिना ।
ज्ञानदीपेन देव त्वं कदा नु स्यामुपस्थितः ॥

३४०४

एकाकी निस्पृहः शान्तः पाणिपात्रो दिगम्बरः ।
कदा शंभो भविष्यामि संसारोन्मूलनक्षमः ॥

३४०५

सुशान्तशास्त्रार्थविचारचापलं
निवृत्तनानारसकाव्यकौतुकम् ।
निरस्तनिःशेषविकल्पविप्लव
प्रपत्तुमन्विच्छति चक्रिणं मनः ॥

३४०६

कृष्ण त्वदङ्घ्रियुगलाम्बुजभक्तिरेणु-
पुञ्जान्तरालपरिधूसरविग्रहोऽहम् ।
भृङ्गः कदा निजपतत्रविधूननेन
प्रेतेशदिक्तिमिरपातपटुर्भवेयम् ॥

३४०७

विजृम्भमाणे तमसि प्रगल्भे
यथा भवासक्तमतिः स्थितोऽहम् ।
गतेऽपि तस्मिन्नुदितावबोध-
स्तथा भवासक्तमतिर्भवेयम् ॥

३४०८

गुहाश्रितो धर्मरतिर्गिरीश-
प्रथां दधानो भवतः प्रसादात् ।
सख्याहितप्रीतिरहीनभक्ति-
र्भवानिवाहं भगवन्भवेयम् ॥

प० जगद्धरस्य.

३४०९

दिनेषु दानपरमः परकार्यदक्षः
क्षेत्रज्ञचिन्तनपरो निरतः समाधौ ।
कर्हीशसंस्तुतिपरः प्रणतो गुरुभ्यः
स्यां सर्वदा सकलभोगविरक्तचित्तः ॥

कस्यापि.

३४१०

परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा
प्रसादं किं नेतुं विशसि हृदय क्लेशकलिलम् ।
प्रसन्ने त्वय्येव स्वयमुचितचिन्तामणिगुणे
विविक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥

३४११

पाणौ पावनमक्षसूत्रमुचितं रुद्राक्षमाला गले
भस्माङ्कं सुभगं शिरस्यपि तडित्पिङ्गत्विषोऽग्रे जटाः ।
जीर्णं वल्कलमंसयोस्तरुतले वासः प्रशान्तस्य मे
भूयादाश्रमवर्तिनः किमपरं कर्णे कथा शांभवी ॥

३४१२

गङ्गातीरकृतोटजस्य नियमक्षामस्य शान्तात्मनो
नीवारप्रसृतिंपचस्य दधतो मेध्यां त्वचं तारवीम् ।
दर्भप्रस्तरशायिनः शिव शिवेत्याक्रन्दतः प्रत्यहं
भस्मस्नानकृतः कदा मम मनो निर्वाणमभ्येष्यति ॥

३४१३

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
कदा पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥

३४१४

घनोद्यानच्छायामिव मरुपथाद्दावदहना-
त्तुषाराम्भोवापीमिव विषविपाकादिव सुधाम् ।
प्रवृद्धादुन्मादात्प्रकृतिमिव निस्तीर्य विरहा-
ल्लभेयं त्वद्भक्तिं निरुपमरसां शंकर कदा ॥

श्रीहर्षदेवात्मजवाक्पतेः.

३४१५

सान्द्रानन्दास्तिमितकरणः पुण्यनैपुण्यभागी
भागीरथ्यास्तटविटपिनः क्वापि मूले निलीनः ।
सर्वाकारं गिरिपतिसुताकान्तमेकं प्रपन्नः
स्वात्मारामः शमसुखसुधास्वादमभ्येति धन्यः ॥

३४१६

सुरस्रोतस्वत्यास्तटविटपिपुष्पौघसुरभौ
गिरिग्रावग्रामस्खलनमुखरस्रोतसि जले ।
शमक्षामैरङ्गैरगणितभवक्लेशविपदः
कदा मे स्यात्तृप्तिर्हरचरणसेवासुखरसैः ॥

३४१७

उदारैर्मन्दारै रचितशिखरं चन्द्रशिखरं
समभ्यर्च्य प्रेम्णा विपुलपुलकालंकृततनुः ।
कदा गन्धाबन्धप्रमदमुदितोद्दाममधुप-
स्फुरद्गुञ्जागर्भैर्विभुमभिभजेयं नुतिपदैः ॥

३४१८

अमन्दानन्दानां गलदलघुसंतापत्रिपदां
पदाम्भोजद्वन्द्वं शिरसि दधतामिन्दुशिरसः ।
कदा नः कालिन्दीसलिलशबलैरम्बरसरि-
त्तरङ्गैरङ्गारीभवति भवबन्धेन्धनचयः ॥

एते प० जगद्धरस्य.

३४१९

लक्ष्मीपङ्ककलङ्किताः परिमितक्ष्माखण्डपिण्डीभुजो
गर्वग्रन्थिविसंस्थुलैरवयवैर्नैपथ्यकन्थाभृतः ।
एते कीदृश ईश्वराः कुपतयः किं वानया चर्चया
यस्त्रैलोक्यविलक्षणः फलतु नः सत्यं स एवेश्वरः ॥

३४२०

वाराणस्याममी वारा नीवाराशनसुस्थितेः ।
नवारामनिषण्णस्य वारा स्नातस्य यान्तु मे ॥

३४२१

स्वजनवसतेर्निःसृत्याराच्छलेन बलेन वा
लघु विरचयन्गेहं भूमेस्तलेन दलेन वा ।
विदधदतुलं प्राणत्राणं फलेन जलेन वा
वनभुवि कदा स्यां शून्योऽहं मलेन खलेन वा ॥

प० पाजकस्य.

३४२२

स्वः सिन्धुतीरेऽथविघातवीरे
लसत्समीरे करलभ्यनीरे ।
वसन्कुटीरे परिधाय चीरे
करोम्यधीरे न रुचिं शरीरे ॥

कस्यापि.

३४२३

शरीररोगं प्रियविप्रयोगं
पापौघयोगं कुविभोर्नियोगम् ।

भिक्षाप्रयोगं च खलोपयोगं
कदन्नभोगं हर मे हराशु ॥

रैरुप्पकस्य.

३४२४

भोगेच्छाविरिरंसया मलमुषामादित्सया श्रेयसां
नो ब्रह्माण्डजिगीषया भवमहासिन्धोस्तितीर्षाधिया ।
पात्रं पर्णपुटी गृहं गिरितटी वल्कप्रकारः पटी-
स्त्वैश्वर्यारभटी सदा मम भवेत्सेव्या च गङ्गातटी ॥

---

## अथ संकीर्णवस्तुवर्णनम्

३४२५

निवासः क्रियतां गाङ्गे पापवारिणि वारिणि ।
स्तनद्वन्द्वे मृगाक्ष्या वा मनोहारिणि हारिणि ॥

३४२६

विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥

३४२७

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ।
अश्रेयसि प्रपन्ने तु क्वापि यान्ति विनायकाः ॥

केषामपि.

३४२८

अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥

३४२९

अनेकदोषदुष्टोऽपि कायः कस्यास्ति न प्रियः ।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ॥

३४३०

विषं वेश्म दरिद्रस्य वृद्धस्य तरुणी विषम् ।
विषं त्वशिक्षिता विद्या ह्यजीर्णे भोजनं विषम् ॥

२४३१

सत्काव्यभूषणा वाणी रजनी चन्द्रभूषणा ।
सुशीलभूषणा नारी लक्ष्मीर्विनयभूषणा ॥

२४३२

विद्याविक्रमजं योऽत्ति साधु सोऽस्तीह मानवः ।
श्वापि नाम स्वलाङ्गूलवलनात्फलमश्नुते ॥

२४३३

प्रवर्धमानः पुरुषस्त्रयाणामसुखावहः ।
पूर्वार्जितानां मित्राणां दाराणामथ वेश्मनाम् ॥

२४३४

प्रलीयन्तेऽल्पपुण्यानां शरीरेष्वखिला गुणाः ।
बालवैधव्यदग्धानां कुलस्त्रीणां स्तना इव ॥

२४३५

उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः ।
बालवैधव्यदग्धानां कुलस्त्रीणां स्तना इव ॥

२४३६

ये बालभावे न पठन्ति विद्यां
ये यौवनस्था अधना अदाराः ।
ते शोचनीया इह जीवलोके
मनुष्यरूपेण मृगाश्चरन्ति ॥

केषामपि.

२४३७

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नासौ मुनिर्यस्य वचोऽप्रमाणम् ।
धर्मस्य मूलं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥

दिङ्नागस्य.

३४३८

एको हि दोषो गुणसंनिपाते
निमज्जतीत्येतदयुक्तमुक्तम् ।
रूपादिकान्सर्वगुणान्निहन्ति
किं मौर्ख्यमेकं न शरीरभाजाम् ॥

३४३९

एको हि दोषो गुणसंनिपाते
निमज्जतीत्येतदयुक्तमुक्तम् ।
तेनापि नूनं कविना न दृष्टं
दारिद्र्यमेकं गुणपूगहारि ॥

३४४०

वरं दरिद्रः श्रुतिशास्त्रपाठको
न चार्थयुक्तः श्रुतशीलवर्जितः ।
सुलोचनः क्षीणपटोऽपि शोभते
न नेत्रहीनः कनकाद्यलंकृतः ॥

३४४१

अर्थातुराणां न सुहृन्न बन्धुः
कामातुराणां न भयं न लज्जा ।
विद्यातुराणां न सुखं न निद्रा
क्षुधातुराणां न वपुर्न तेजः ॥

३४४२

क्षुधासमा नास्ति शरीरवेदना
चिन्तासमा नास्ति शरीरशोषणा ।
विद्यासमा नास्ति शरीरभूषणा
वृत्त्या समा नास्ति शरीरपोषणा ॥

३४४३

विजृम्भितोद्दामरसेन चेतसा
निरूप्यमाणं किमपि प्रियावपुः ।

तथैव वैराग्यवता विभागशो
निरूप्यमाणं किमपि प्रियावपुः ॥

३४४४

अहितहितविचारशून्यबुद्धेः
श्रुतिसमयैर्बहुभिर्बहिष्कृतस्य ।
उदरभरणमात्रकेवलेच्छोः
पुरुषपशोश्च पशोश्च को विशेषः ॥

३४४५

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय दुःखम् ।
कीर्तिं च दिक्षु वितनोति तनोति लक्ष्मीं
किं किं न साधयति कल्पलतेव विद्या ॥

केषामपि.

३४४६

लोकोत्तरं चरितमर्पयति प्रतिष्ठां
पुंसां कुलं नहि निमित्तमुदारतायाः ।
वातापितापनमुनेः कलशात्प्रसूति-
र्लीलायितं पुनरमुद्रसमुद्रपानम् ॥

३४४७

पातालमाविशसि यासि नभो विलङ्घ्य
दिङ्मण्डलं भ्रमसि मानस चापलेन ।
भ्रान्त्वापि देशमपरं हि तदात्मनीनं
न ब्रह्म संस्पृशसि निर्वृतिमेषि येन ॥

अर्गटस्य.

३४४८

दुर्गन्धिपूतिविकृतैररविन्दमिन्दु-
मिन्दीवरं च तुलयन्ति यदङ्गनाङ्गैः ।

तस्यानपायि फलमुग्रमिदं कवीनां
तास्वेव गर्भनिलयं यदमी विशन्ति ॥

चन्द्रगोपिनः.

३४४९

केचिद्गुये हि भजन्ति विनीतभाव-
मन्ये जना विभवलोभकृतप्रयत्नाः ।
केचिच्च साधुजनसंसदि कीर्तिलोभा-
त्सद्भाववाञ्जगति कोऽपि न साधुरस्ति ॥

चन्द्रगोपिनः.

३४५०

दम्भेन लोभेन भिया ह्रिया वा
प्रायो विनीतो जन एष सर्वः ।
वैराग्यतस्त्वा हृदयं विनीतं
नरं वरं दुर्लभमेव मन्ये ॥

भट्टश्रीदत्तस्य.

३४५१

प्राप्ता श्रियः सकलकामदुघस्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संतर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥

३४५२

तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म वाञ्छसि सदा यदि चेतनास्ति ।
यस्यानुषङ्गिण इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति ॥

भर्तृहरेः.

३४५३

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै-
र्द्वयमिह पुरुषाणां सर्वदा सेवनीयम् ।

अभिनवमदलेखालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥

भट्टोद्भटस्य.

३४५४

प्रतिदिनमिह लोके किं किमभ्यस्यमानं
नवनवमिव चेतो ह्लादयत्येव पुंसाम् ।
मम तु विदितमेतत्संगतं सज्जनाना-
मभिनववनिताभिर्वा रतं भारतं वा ॥

कस्यापि.

३४५५

न संसारोत्पन्नं चरितमभिपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृषतः ।
महद्भिः पुण्यौघैश्चिरपरिगृहीता हि विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥

३४५६

यदा किंचिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित्किंचिद्गुरुजनसकाशादधिगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥

भर्तृहरेः.

३४५७

मणिः शाणोल्लीढः समरविजयी हेतिनिहतो
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवश्चार्थिषु नरः ॥

३४५८

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।

प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥

भट्टवृद्धेः.

३४५९

हर्तुर्याति न गोचरं किमपि शं पुष्णाति सर्वात्मना
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं वृद्धिं परां गच्छति ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥

भर्तृहरेः.

३४६०

फलमुपशमो विद्वत्तायास्ततो धनमिच्छतां
भवति विदुषां व्यर्थः क्लेशो यदत्र किमद्भुतम् ।
न नियतफलारम्भः कर्तुं फलार्थिभिरन्यथा
भवति हि खलु व्रीहेर्बीजं न जातु यवाङ्कुरः ॥

३४६१

यद्वित्ताढ्याः प्रखलपुरुषाः साधवो वित्तहीना
नास्मिन्नर्थे वचनपटुभिर्निन्दनीया खलु श्रीः ।
वित्तभ्रष्टाञ्जगति गणयेत्कस्तृणेनापि मूर्खा-
न्विद्वांसस्तु प्रकृतिसुभगाः कस्य नाभ्यर्हणीयाः ॥

३४६२

स्थितो मध्ये सूरिः सुरगुरुसमानोऽप्यविदुषा-
मुदारो निर्वृत्तः कृपणजनसंपातपतितः ।
अलब्धाजिः शूरो भयविधुरचित्तैः सह वस-
न्नहो दुःखं जीवत्यविदिततदाचारविमनाः ॥

केषामपि.

३४६३

योऽर्थः स्यात्पुरुषस्य केनचिदिह व्याजेन तत्किल्बिष
शास्त्राण्यागमितानि यानि रजसो नोच्छित्तये स श्रमः ।

आस्ते यत्सह दुर्जनेन हृदयद्वेषेण तद्बन्धनं
या श्रीर्बन्धुसुहृज्जनप्रणयिनां न प्रीतये सा विपत् ॥

३४६४

यान्येतानि धनानि येऽपि च गुणा दुःसंघटैषा द्वयी
येनैकेन च योगमिच्छसि मनस्तस्मिन्सहायोऽस्मि ते ।
तत्किं तेऽभिमतं प्रजागररुजा क्रूरं समाक्रन्दितं
किं वाप्यासितुमादरा – – – – – – – – – – ॥

कस्यापि.

३४६५

सत्काव्यार्थनिरूपणं प्रियकथालापा रहोऽत्रस्थितिः
कण्ठान्तर्मृदुगीतमादृतसुहृद्दुःखोद्गमावेदनम् ।
उद्बाष्पं रुदितं प्रसुप्तमभवन्निद्रं रसार्द्रात्मनां
ता एता हृदयस्य हारितमतेराश्वासनाभूमयः ॥

३४६६

रम्यं हर्म्यं यदि कुलवधूस्त्यागभोगाय वित्तं
वक्त्रे वाणी सरसमधुरा केशवे चित्तवृत्तिः ।
यद्यस्त्येवं भज भवसुखं चित्त मा चिन्तयान्य-
द्धिग्धिग्दूरादनशनपदं स्वर्गमेकान्तदुःखम् ॥

३४६७

अग्रे गीतं सरसमधुरं पार्श्वयोर्गीतनादाः
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम् ।
अस्त्येवं चेत्कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥

३४६८

प्रायेणेह कुलान्वितं त्वकुलजाः स्त्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूननृजवस्तेजस्विनं कातराः ।
वैरूप्योपहताश्च कान्तवपुषं वृत्तिस्थितं दुःस्थिता
नानाशास्त्रविचारिणं च पुरुषं निन्दन्ति मूढाः सदा ॥

३४६९

दैवं केन विलङ्घ्यते क्व विपदो न्यस्यन्ति नो तत्पदं
कः कामस्य न लक्ष्यतामुपगतः कस्य स्थिराः संपदः ।
कश्चित्तग्रहणं जनस्य गुणवान्सर्वस्य कर्तुं क्षमः
का योषित्स्वयमर्थिनी बहुमतः पुंसः क्व दानं वृथा ॥

३४७०

कोऽर्थान्प्राप्य न गर्वितो भुवि नरः कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं बत मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरो धनकृते कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरानिपतितः क्षेमेण यातो गृहम् ॥

पञ्चतन्त्रे.

३४७१

ये नैकाङ्गुलितर्जनामपि गुरोः सोढुं समर्था नरा
नामाप्युन्नतमानसाश्च सकलं पश्यन्त्यधस्ताज्जगत् ।
ते रागेण कदर्थिता धृतिभिदा पादैर्हता योषिता-
माज्ञां मूर्धभिरुद्वहन्ति कृपणा मालामिवाम्लायिनीम् ॥

कस्यापि.

३४७२

किं शाकानि न सन्ति भूधरसरित्कुञ्जेषु मूलानि वा
किं वा जीवनमेतदेव विहितं याच्ञैव नान्यत्क्वचित् ।
येन श्रीमदमोहमूढमनसां स्थित्वाग्रतो भूभृतां
श्वासोत्कम्पकदर्थिताक्षरपदैर्देहीति वागुच्यते ॥

३४७३

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।
इत्थं मानद नातिदूरमुभयोरस्त्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥

३४७४

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं
शूरस्त्वं वादिदर्पव्युपशमनविधावक्षतं पाटवं नः ।
सेवन्ते त्वां धनान्धा मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ॥

३४७५

वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषो निर्विशेषो विशेषैः ।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि तु परितुष्टे कोऽर्थवान्को दरिद्रः ॥

३४७६

सेवादैन्यान्न जातु प्रणिपतितशिरा नार्थितामेति लघ्वीं
स्वामिन्नाज्ञापयेति द्रविणमदवतां नाग्रतो वक्ति वाचः ।
मध्ये नायात्यसूयां विषदहनमुचां दुर्जनाशीविषाणा-
मेकः सर्वोपलम्बी नयति फलवतीं जन्मवत्तां सुखेन ॥

केषामपि.

३४७७

राज्ञामव्याहताज्ञा यमनियमवती चित्तवृत्तिर्मुनीनां
भृत्यानां स्वामिभक्तिर्वरविभवभृतां त्यागसंभोगसङ्गः ।
स्त्रीणां चारित्रशुद्धिर्मधुरवचनता सत्कवीनां प्रबन्धे
धर्म्यान्न्यायाच्च मार्गान्मुनिवदचलनं मण्डनं पण्डितानाम् ॥

सुखवर्मणः.

३४७८

शूरं वैधव्यभीता बुधमपि च तथा विग्रयोत्पादितेर्ष्या
मा मां स्प्राक्षीज्जनोऽन्यः क्वचिदिति च सती मुक्तहस्तं विहाय ।
क्लीबं मूर्खं कदर्यं श्रयति यदि नरं श्रीः — — — — — —
— — — — — — — — — — — ॥

३४७९

आशापाशविमुक्तिनिश्चलसुखा स्वायत्तचित्तस्थितिः
स्नेहद्वेषविषादलोभविरतिः संतोषतृप्तं मनः ।
चिन्ता नित्यमनित्यतापरिचये सङ्गेऽपि निःसङ्गता
संवित्सेकविवेकपूतमनसामित्येष मोक्षक्रमः ॥

क्षेमेन्द्रस्य.

३४८०

तर्कः कार्कश्यवश्यस्त्रपयति नितरां सा हि साहित्यकन्था
पन्थाः किं चागमानां निरवधिरधिकं दुर्गमा स्मार्तवार्ता ।
भीमा मीमांसकानां सरणिरपि मुधा भ्राम्यसे ताम्यसे किं
रे चेतश्चेतना चेदमृतकरकलासंश्रयं संश्रयेथाः ॥

कस्यापि.

३४८१

नाम्नामकारि बहुता निजसर्वशक्ति-
स्तत्रार्पिता नियमितः स्मरणे न कालः ।
एतावती तव कृपा भगवंस्तथापि
दुर्दैवमीदृशमिहाजनि नानुरागः ॥

३४८२

निरोधो न द्वारेऽनवसरकथा नैव हृदये
न चावज्ञा नो वा खलजनभयं याचनविधौ ।
न दैन्यं नासिद्धिर्यदपि भजतस्त्वामयि विभो
वयं भूयोपायां तदपि परसेवां वितनुमः ॥

एतौ मधुसूदनस्य.

३४८३

मित्रे क्वापि गते सरोरुहवने बद्धानने तिष्ठति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नां पुरः सारसीम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥

३४८४

येन स्वेन करेण शोकदहने संदीप्य काष्ठावलीं
निःक्षिप्तौ द्विजदंपती प्रतिदिनं यो वारुणीं सेवते ।
पद्मिन्याश्च सुवर्णहारमकरोद्दारा गुरोराहृता
संसर्गश्च कपालिना सखि न किं दोषाकरे दूषणम् ॥

३४८५

आहारे विरतिः समग्रविषयग्रामे निवृत्तिः परा
नासाग्रे नयने यदेतदपरं यच्चैकतानं मनः ।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते
तद्ब्रूयाः सखि योगिनी किमसि वा किं वा वियोगिन्यसि ॥

---

## अथ श्रीभगवत्स्वरूपवर्णनपद्धतिः

३४८६

किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ।
हृदिस्थो यस्य भगवान्मङ्गलायतनं हरिः ॥

३४८७

नमः शिवाय मन्त्रोऽयं वागेषा वशवर्तिनी ।
अहो मोहस्य माहात्म्यं नरकं येन पश्यति ॥

कस्यापि.

३४८८

तद्ध्यानं यत्र गोविन्दः सा कथा यत्र माधवः ।
तत्कर्म यत्तदर्थीयं किमन्यैर्बहुभाषितैः ॥

३४८९

सा जिह्वा या हरिं स्तौति तच्चित्तं यत्तदर्पणम् ।
तावेव केवलं श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥

श्रीव्यासमुनेः

३४९०

कृतगङ्गोदकस्नानं श्रुतभारतसत्कथम् ।
अर्चिताच्युतपादाब्जं दिनं कल्पशताद्वरम् ॥

३४९१

अर्थार्थी यानि दुःखानि सहते कृपणो जनः ।
तान्येव यदि धर्मार्थी न भूयो जन्मभाग्भवेत् ॥

३४९२

स्नातो वा यदि वास्नातः शुचिर्वा यदि वाशुचिः ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरं शुचिः ॥

३४९३

हरिरेव महावैद्यः परमद्रव्यप्रवृद्धमहिमासौ ।
शमयति जन्मव्याधिं वैराग्यमहौषधप्रयोगेण ॥

विद्याधरस्य.

३४९४

रुजासु नाथः परमं हि भेषजं
तमःप्रदीपो विषमेषु संक्रमः ।
भयेषु रक्षा व्यसनेषु बान्धवो
भवत्यगाधे व्यसनाम्भसि प्लवः ॥

श्रीविक्रमादित्यस्य.

३४९५

कस्योदपत्स्यत रुचिर्विरसावसाने
स्तोकस्थितावनुचितप्रभवे भवेऽस्मिन् ।
नारायणस्मृतिकथामृतपानगोष्ठी
चेतो विनोदनमियं यदि नाम न स्यात् ॥

३४९६

यादृङ्मनोऽभिरमते तरुणीषु पुंसां
तादृग्यदि प्रवरचक्रधरे रमेत ।
तत्को भवाम्बुनिधिदुःखमहोर्मिवेग-
मुल्लङ्घ्य धाम परमं पुरुषो न यायात् ॥

३४९७

यादृशं जनमनः परनार्यां
यादृशं परधनग्रहणेषु ।

तादृशं यदि भवेज्जगदीशे
मोक्षवस्तु किमु तिष्ठति दूरे ॥

३४९८

भवजलधिगतानां द्वन्द्ववाताहतानां
सुतदुहितृकलत्रत्राणभारावृतानाम् ।
विषमविषयतोये मज्जतामप्लवानां
भवति शरणमेको विष्णुपोतो नराणाम् ॥

क्षेमेन्द्रस्य.

३४९९

करारविन्देन पदारविन्दं
मुखारविन्दे विनिवेशयन्तम् ।
अश्वत्थपत्रस्य पुटे शयानं
बालं मुकुन्दं सततं स्मरामि ॥

कस्यापि.

३५००

पूजापद्मपरंपरापुलकितौ पाण्योंः परं पेलवौ
पुण्यौ पातकिपापपाटनपटू पृथ्वीं प्रपन्नौ प्रथाम् ।
प्रायः पर्वतपुत्रिकापृथुपटैः पल्ल्ये पुरा पूरितौ
पादौ पण्डितपाजकः पशुपतेः प्रीत्या पुरः पश्यतु ॥

प० पाजकस्य.

३५०१

अलब्धान्तःप्रवेशस्य तारमाक्रन्दतो बहिः ।
प्रभो करुणया कर्णे क्रियन्तां कृपणोक्तयः ॥

अर्चितदेवस्य.

३५०२

कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव ।
संसारार्णवमग्नानां प्रसीद पुरुषोत्तम ॥

३५०३

आर्तो मत्सदृशो नान्यस्त्वत्तो नान्यः कृपापरः ।
तुल्य एवावयोर्योगः कथं नाथ न पासि माम् ॥

३५०४
अभिधावति मां मृत्युरयमुद्घूर्णमुद्गरः ।
कृपणं पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥

गङ्गादत्तस्य.

३५०५
यदि नास्मि महापापी यदि नास्मि भयाकुलः ।
यदि नेन्द्रियसंसक्तस्तत्कोऽर्थः शरणे मम ॥

भट्टसुनन्दनस्य.

३५०६
यत्र यत्राभिजायेयं यदि दुःखाकुले कुले ।
तत्र तत्राक्षयं मेऽस्तु माधवाराधनं धनम् ॥

वररुचेः.

३५०७
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
मा भून्मनः कदाचिन्मे त्वया विरहितं हरे ॥

कस्यापि.

३५०८
स्वकर्मफलनिर्दिष्टां यां यां योनिं व्रजाम्यहम् ।
तस्यां तस्यां हृषीकेश त्वयि भक्तिर्दृढास्तु मे ॥

३५०९
न चिरं मयासि सेवित इति चेन्न त्रायसे न तद्घटते ।
किं सद्य एव पीतं नामृतमजरामरीकुरुते ॥

मलयस्य.

३५१०
पाहि पाहि भगवन्भवभीतं
दुर्विषह्यविषयैः परिभूतम् ।
नाथ नाथ परमेश्वर विष्णो
कृष्ण कृष्ण परमा हि गतिस्त्वम् ॥

३५११

कृष्ण कृष्ण परमेश्वर विष्णो
पाहि पाहि भवकर्दममध्ये ।
कामलोभमदमत्सरकोपै-
र्बाध्यमानमनिशं कृपणं माम् ॥

वल्लभदेवस्य.

३५१२

नश्यति यावदिदं न शरीरं
व्याधिवृतं परमेश्वर तावत् ।
श्रेयसि दर्शय मे शुभमार्गं
येन पुनर्न भवेद्भुवि जन्म ॥

भास्करस्य.

३५१३

त्वयि जनार्दन भक्तिरचञ्चला
यदि भवेदफलप्रवणा मम ।
अभिलषाम्यपवर्गपराङ्मुखः
पुनरपीह शरीरपरिग्रहम् ॥

आनन्दवर्धनस्य

३५१४

ध्यातोऽसि नो मधुरिपो न च कीर्तितोऽसि
नैव स्तुतोऽसि न कथापि कृता त्वदीया ।
भक्त्या तृणैरपि मया न च पूजितोऽसि
तत्रापि मे कुरु दयां शरणागतस्य ॥

भा० शङ्कुस्य.

३५१५

सर्वापदां निलयमध्रुवमस्वतन्त्र-
मासन्नपातमविवेकमसारसंज्ञम् ।

यावच्छरीरकमिदं न विपत्स्यते मे
तावन्नियोजय विभो कुशलक्रियासु ॥

अवधूतस्य.

३५१६

अन्धस्य मे हृतविवेकमहाधनस्य
चौरैर्विभो बलिभिरिन्द्रियनामधेयैः ।
मोहान्धकूपकुहरे विनिपातितस्य
देवेश देहि कृपणस्य करावलम्बम् ॥

राजानककमलाकरस्य.

३५१७

जातौ जातौ पथि पथि तथा मन्दिरे मन्दिरेऽहं
त्वत्स्तोता स्यां त्वयि रतिपरस्त्वत्प्रधानस्त्वदर्थी ।
माभूदेव व्यपगतफलः काललेशोऽपि यस्मि-
न्नन्यासक्ता भवदनुमतौ मन्थरा भारती स्यात् ॥

३५१८

यस्या बीजमहंकृतिर्गुरुतरं मूलं ममेति ग्रहो
नित्यं तु स्मृतिरङ्कुरः सुतसुहृज्ज्ञात्यादयः पल्लवाः ।
स्कन्धो दारपरिग्रहः परिभवः पुष्पं फलं दुर्गतिः
सा मे त्वत्स्मृतिसत्क्रियापरशुना तृष्णालता लूयताम् ॥

कयोरपि.

३५१९

जय कृष्ण महाबाहो संसारनिदाघतापघनसमय ।
नन्दकजलधरधाराशमितासुरदर्पदावाग्ने ॥

आनन्दवर्धनस्य.

३५२०

सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् ।
सामुद्रो हि तरंगः क्वचन समुद्रो न तारंगः ॥

शंकराचार्यस्य.

३५२१

इदमहं करुणामृतसागरं
शशिकिशोरशिरोमणिमर्थये ।
व्रजतु जन्मनि जन्मनि मे वपु-
र्भवदुपासनसाधनतामिति ॥

३५२२

अज्ञानान्धमबान्धवं कवलितं रक्षोभिरक्षाभिधैः
क्षिप्तं मोहमहान्धकूपकुहरे दुर्बुद्धिराभ्यन्तरैः ।
क्रन्दन्तं शरणागतं गतधृतिं सर्वापदामास्पदं
मा मां मुञ्च महेश पेशलदृशा सत्रासमाश्वासय ॥

३५२३

अज्ञस्तावदहं न मन्दधिषणः कर्तुं मनोहारिणी-
श्चाटूक्तीः प्रभवामि यामि भवतो याभिः कृपापात्रताम् ।
आर्तेनाशरणेन किं तु कृपणेनाक्रन्दितं कर्णयोः
कृत्वा सत्वरमेहि देहि चरणं मूर्धन्यधन्यस्य मे ॥

३५२४

पापः खलोऽयमिति नार्हसि मां विहातुं
किं रक्षया कृतमतेरकुतोभयस्य ।
यस्मादसाधुरधमोऽहमपुण्यकर्मा
तस्मात्तवास्मि सुतरामनुकम्पनीयः ॥

प० जगद्धरस्य.

३५२५

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमदनान्याहुतिविधिः ।
प्रणामः संवेशः सकलमिदमात्मार्पणविधौ
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥

श्रीशंकराचार्यस्य.

३५२६

नादायि दानमथ नैव तपो व्यधायि
नासेवि तीर्थदिगसाध्यतरः समाधिः ।
तत्का परत्र गतिरस्त्वनवाप्तपुण्य-
ज्ञानस्य मे भव भवत्स्मृतिमन्तरेण ॥

कस्यापि.

३५२७

आपन्नोऽस्मि शरण्योऽस्मि सर्वावस्थोऽस्मि सर्वदा ।
भगवंस्त्वां प्रपन्नोऽस्मि रक्ष मां शरणागतम् ॥



## श्लोकानुक्रमणिका.

---

### अ ( ३६० )


अंशवस्तव १९२३
अंशुकमिव १८५१
अंशुमानपि १८९४
अकर्णधारा० २५५९
अकर्तव्येष्व० ३२४५
अकलङ्केन २४७१
अकालजलद० १७२३
अकालधृत० २५०४
अकुलीनः ३०५१
अकृतज्ञ० २९९१
अकृतप्रेमैव १३८९
अकृत्रिमप्रेम० १४५३
अकृत्वा पर० २६६०
अक्रोधं २३२३
अक्षदेवन० २०४८
अक्षराणा० २४६०
अक्षिपक्ष्म २७४६
अक्षेष्वियं ९२४
अक्षोटशुण्ठि० २३५७
अक्ष्णोर्विपक्ष० १८२०
अगतीनां ७९२
अगम्यगमना० २४६२
अगुणकणो ४६६
अग्निहोत्रफला ३४२८
अग्रे गीतं ३४६७
अङ्कं केपि १९८२
अङ्के वृद्धि० ७५६
अङ्गणवीथी २२७०
अङ्गानामति० १५८४
अङ्गुलीभिरिव १९६३
अङ्गुल्यग्रनिरोध० १७११
अङ्गुल्या कः १३०
अचोद्यमानानि ३०८२
अच्छिन्नं नयनाम्बु १४०७
अजातमृत० २७२८
अज्ञः सुख० ३९३
अज्ञस्तावदहं ३५२३
अज्ञातपाण्डित्य० १६९
अज्ञातागम० २०६८
अज्ञानवलितो ३३०२
अज्ञानान्ध० ३५२२
अज्ञानोपहतो ३३०३
अज्ञो न वितर० २९७७
अज्ञोऽपि तज्ज्ञता० २६७९
अञ्जनस्य क्षयं २६८४
अटता पृथिवी० २५३१
अणु पूर्वं २७१०
अणुरपि मणिः ३२५
अतः पर० १४९६
अतथ्यास्तथ्य० २७८६
अतसीपुष्प० १७१८
अतिकुपिता २४९
अतितेजस्व्यपि २८६९
अतिथिः पूजितो ३०११
अतिपरिगृहीत० १३८४
अतिपरिचया० २८९४
अतिमलिने ३२८
अतिरिच्यते २८९५
अतिवाह्रित० ३३७३
अतिसंचय० ४७४
अतिसत्कृता ४०४
अतीव कर्कशाः ३२२१
अतो हास्यतरं ३७१
अत्यद्भुत० ५१४
अत्यन्तकृष्णः २५३८
अत्यन्तपरिणाहि० १५६४
अत्यन्तशीतल० ८०७
अत्यन्तोन्नत० १९९६
अत्यर्थवक्रत्व० १७४
अत्यार्यमति० २६४६
अत्युन्नति ६७७
अत्रास्मिन्सुरत० १८६६

अत्रोत्पात० ८४९
अथ चेद्बुद्धि० २७०९
अथ प्रसन्नेन्दु० १८१८
अथ मनसिज० १७५८
अथ लक्ष्मणा० १९७४
अथाससादास्त० १८९८
अदभ्रमभ्रो० १७८१
अदर्शनादाप० ३२६८
अदीर्घदर्शिभिः ३३६०
अदृष्टपूर्व० १७२२
अदृष्टमुख० ५०३
अदृष्टे दर्शनो० १०४३
अदैवं दैवतं २८३५
अद्य द्यूत० २११०
अद्य भौमदिनं ११७९
अद्यापि तत्प्रचल० १२९१
अद्यापि तन्मनसि १३७८
अद्यापि तां सुरत० १२७८
अद्यापि हि नृशं० ११०६
अद्यारभ्य यदि ११५९
अद्येश्वरा० २३९५
अद्रोहः सर्व० ३०४७
अधमं बाधते ३००
अधमर्णशवा० २३२२
अधरामृतेन २३४०
अधर्ममन्यत्र २५४३
अधिगतपर० २९३३
अधीतविद्यै० २२३०
अधोगतिं च ९३६
अधोमुखैक० २३१०-३३४३
अध्वन्यस्य १६८७
अनङ्गशस्त्राणि १७८२
अनन्तनाम० ११
अनन्तोद्भूत० २२५६
अनपेक्षितगुरु० २
अनया जघना० १२०५
अनयो विनय० ३११४
अनर्थितर्पणं ३०३८
अनवरत—घटिताक्ष० १३८६
अनवरत—परिमुषित० १५९५
अनागत० २६५०
अनाघ्रातं १३३२
अनादेयं २८३२
अनारब्धा० १३३३
अनालोच्य ११७०
अनस्वादित० २४२६
अनाहूत० २३४८
अनिःसरन्ती० २५४५
अनित्यते ३२६५
अनिरीक्षण० २०५१
अनीर्ष्याः १०१२
अनुकृत० ६०६
अनुगन्तुं २६४१
अनुदिनमति० १११७
अनुदिनमभ्यास० २०४५
अनुनयगुरो० २१०३
अनुनयमगृहीत्वा २१७५
अनुरञ्जिता २८५२
अनुरागवन्त० १९२३
अनृतमनृत० १११६
अनेकदोष० ३४२९
अनेकैर्नायक० २३८७
अनेन किं २९८३
अनेन वीत० १४२७
अन्तः प्रतप्त० ८०२
अन्तः संतोष० २६०३
अन्तः समुत्थ० ६२६
अन्तःस्थसुरता० २०४४
अन्तर्मलीमसे १२०७-१४९७
अन्तर्यै सततं ८८९
अन्तश्छिद्राणि ९२१
अन्त्यावस्थोऽपि २४३
अन्धः स एव ३०३१
अन्धस्य मे ३५१६
अन्यतो नय २०२९
अन्यथा शास्त्र० ३०८८
अन्ययान्यवनिता० २०१०
अन्यस्मिन्नपि १७४७
अन्यासु ताव० ७३५
अन्योन्यग्रथिता० १०९९

अन्योन्यप्रकटा° २११५
अन्योन्यमुत्पीड° १५४२
अन्योन्यलावण्य° १५०५
अन्योन्यस्य लयं १०२९
अपकारमर्सं° ३७२
अपकारिषु मा ३३५८
अपकुर्वन्नपि २२७
अपगतरजो° १७३८
अपथ्यभोगेषु २३९३
अपराधानुरूपं २८२८
अपराधो न २७३७
अपसारय १०७१
अपहरसि २४९१
अपहृत्य २९७८
अपारपुलिन° २६०७
अपास्य लक्ष्मी° ८६१
अपि कुञ्जर° २७७०
अपि चण्डानिलो° ३३३३
अपि नाम स ५०१
अपि विभव° २६३
अपुत्रत्वं भवे° २७२९
अपूर्वः कोऽपि १२१७
अपूर्वेयं धनु° २४५५
अपूर्वोऽयं कान्ते १३२०
अपेक्षन्ते न च २२४
अपेहि हृदया° १२५२
अप्यापत्समयः २९७
अप्युन्मत्ता° २७१४
अप्रगल्भपद° १३५
अप्रतिबुद्धे° २८८८
अप्रसन्नमप° २०११
अप्रस्ताव° ३२०२
अप्राप्तकालं २७८९
अप्रार्थितानि २६६१
अफलानि २७२०
अबन्धुष्वपि २७०२
अबुधैरर्थ° ३२१३
अब्देभकुम्भे १७३१
अभिजातजन° १७०२
अभिभावति ३५०४
अभिनवं २१६१
अभिनवपल्लव° १६६५
अभिप्रेतार्थ° ९
अभिमुख° २२७२
अभिहिता° २४८९
अभुक्तायां ५३३
अभूत्प्राची २२१८
अभेदेनोपास्ते ३२०
अभ्यस्तेऽपि ११०२
अभ्यस्य पवन° २३०५
अभ्यासः कर्मणां १४५४
अभ्यासो रति° ३३७६
अभ्युपयुक्ताः ४८१
अमन्दानन्दानां ३४१८
अमरैरमृतं ४२९
अमानेनापि २४४०
अमावास्या° २९९३
अमी पान° २४५६
अमी व्यर्था° १७०५
अमुष्मिँल्लावण्या° १५५८
अमुष्मै चौराय १९७९
अमूल्यस्य १५७०
अमृतममृतं १४६६
अमृतरसविसर° ८५८
अमृतरससारभूतः १४५८
अमृतस्येव १४५०
अमृता विगत° ६४७
अम्बरं विनयतः २०९४
अम्बा तुष्यति ३१८५
अम्बा शेतेऽत्र २२४७
अम्बुदः कृत° ८३३
अम्बुधेरुद° ११२४
अम्भोजगर्भ° १२८१
अम्भोधिः स्थलतां ३१५२
अम्भोमुचां सलिल° २४१३
अम्भोराशिरिवा° २५७५
अयं बन्धुः परो ४९८
अयं स भुवन° १०३८
अयं हि तीव्रेण १९०५
अयि चकित° ६७५

अयि लङ्घित० ११०८
अयि वरोरु १२७४
अयि संप्रसीद ११०
अयि हस्तगतैः १५९३
अयि हृदय १२५९
अये वापीहंसा ७०५
अययि साहस० १५४९
अरण्यरुदितं ४४८
अरतिरिय० १११३
अरोदि मधुपै० २००६
अर्थप्रियतया० ३३७०
अर्थाकृष्टधियः २५६६
अर्थातुराणां ३४४१
अर्था न सन्ति ३१८०
अर्थानामर्जनं कार्यं २८१५
अर्थानामर्जने दुःख० ३३५३
अर्थानामीशिषे ३४७४
अर्थार्थी यानि ३४९१
अर्थिभ्रंश० २५१७
अर्थोऽस्ति चेन्न १७६
अर्धं सुप्तो १८२४
अर्धपीतमदिरा २०१७
अलब्धान्तःप्रवे० ३५०१
अलभन्त नभःक्षेत्रे १८२८
अलमलमघृ० १४१८
अलमलमति० १५५६
अलमलमनु० १०४६
अलसयति १२६२
अलसवलित० १२९७
अलसवलितैः १०९८
अल्पश्रुतलव ३९६
अल्पीयः स्खलनेन ६५२
अल्पीयसामेव ५४१
अल्पेनापि १५०८
अल्पेनैव ३११९
अवकाशः २७९५
अवचनं २०५२
अवचितकुसुमा १८६३
वधीरणां १३३९
वलोकन० १२६६
अवश्यं कोपाग्नि० १६०६
अवश्यं भाविनं ३२८६
अवश्यं यातार० ३३८६
अवश्यभव्ये० ३१४७
अवसरपठितं १५०
अविकारिण० ४०९
अविज्ञात० १८८९
अविदग्धः २३३९
अविद्यानाशिनी २६४४
अविधेयो २८५०
अविनयभुवा० ३६४
अविभाव्य० १९२५
अविरतमभि० २१७३
अविरताम्बुज० २८
अविरलधारा० १७३६
अविशदचलं १६२४
अवृत्तिभय० २०४
अवेक्ष्य स्वात्मानं ४५२
अव्यक्तादीनि ३२७०
अव्याद्वो वामनो ५९
अव्यवसायिन० २८४८
अव्यापाररता २५४७
अव्युत्पन्न० १८४७
अशठमलोल० २३३
अशनैरशनै० ३३९२
अशोच्यः शोचते ३२७१
अश्वः शस्त्रं ३१४
असंख्यपुष्पो० १८६८
असतोऽपि २८६६
असत्कवि० २४६९
असत्प्रलापं २९६३
असद्वृत्तो १६०७
असमग्रविलो० १५९६
असमये मति० ११३५
असमसाहस० ३१२७
असहायः समर्थो० २६५६
असामान्योल्लेखं १४७३
असारो निर्गुणो १८०२
असितात्मा १४९०
असुभिरशुभं २०३२

असुरहित० २२००
असौ मरुच्चुम्बित० १६७७
असौ हि संकेत० १८९७
अस्तमितविषय० १३८५
अस्ताद्रिपार्श्व० १९१२
अस्तावलम्बि० १९०९
अस्ति यद्यपि ६९३
अस्त्येव भूभृतां ८३२
अस्थानगामिभि० १९५३
अस्थानाभि० ३९४
अस्थाने गमिता १८५
अस्थिरमनेक० १७३४
अस्पृहां पर० २९६४
अस्मद्वैरी १४८३
अस्माकमस्मा० १३१५-१५१२
अस्मिञ्जडे ६२८
अस्मिन्मरौ ९४१
अस्मिन्सखे ९००
अस्याः कचानां १४८६
अस्याः कान्तस्य १४५५
अस्याः कुशेशय० १५०३
अस्याः सर्गविधौ—न संभाव्यते १४६०
अस्याः सर्गविधौ—नु कान्तिप्रदः १४६७
अस्या मनोहरा० १४८०
अस्या मुखं १५०६
अस्या मुखेन १५१४
अस्या ललाटे १४८७
अहं नश्यामि १११०
अहं वो रक्षिते० २८४२
अहं सदा प्राण० २५६०
अहतहृदयाः ३०६९
अहमिव शून्य० १७०१
अहिंसा धाम ३३५५
अहिंसा सत्य० ३०१०
अहितहित० ३४४४
अहो अहं १२४३
अहो किमपि २४७९
अहो कुटिल० ३४४
अहो तृष्णा० ३२६३
अहो धनानां ४९०
अहो नु चित्रं ३३४९
अहो प्रकृति० ३५३
अहो प्रमादी १५५१
अहो बत खलः ३३४
अहो बत मह० ३६८
अहो बत सरि० ८७६
अहो संसृति० ३३०१
अहो वा हारे ३४१३

आ ( १४१ )

आः किमर्थमिदं २१३
आकर्णमूल० १२९३
आकर्षन्निव २४१९
आकारदारुणो० २८५६
आकारमात्र० ५११
आकाराहीन० २५९९
आकारेण शशी २३८६
आकारेणेङ्गितै० २८०३
आकाशकुण्डे १७८०
आकाशवापी० १९८६
आकृष्टे युधि ९९
आकृष्यादा० ११६४
आकोपितोऽपि २७७
आक्रन्दाः स्तनितै० १७७६
आक्रम्योच्चैः ८४०
आक्षिप्तैः प्रति० २५७२
आखुः कैलास० ४६५
आगत्य प्रणि० २०८३
आगमिष्यन्ति २६६३
आघ्रायाघ्राय २४२२
आजन्मनः कुशल० ९८६
आजन्मनो विहित० ३१३०
आज्ञा कीर्तिः ३२२९
आतुराद्वित्त० २३२०
आत्मरुतादपि ७६५
आत्मविक्रयिणि ३२१२
आत्मायत्ते २६७४
आत्मैव यदि ३३६१
आदरात्संगृही० २७६३
आदाय दण्डं १९३१
आदाय मांस० ६६०

आदाय वारि ८९१
आदायि वारि ९८१
आदित्यस्य ३३२७
आदित्याः किं ५३
आदिमध्य० २५७
आदीप्तवह्नि० १६७८
आदृष्टिप्रसरा० १०५६
आदौ तावद्व्यापार० २४०५
आदौ तु मन्द० २५४
आदौ नम्रस्ततः २२९८
आदौ मज्जन० २१३७
आदौ लज्जयति ३९१
आद्यः प्रवेश० ७७६
आधर्मिकः ३११६
आधाराद्य ५३७
आ धूमाग्रा० २९५३
आनन्दं दधति १८८२
आनन्देन ३९
आनन्दोद्गत० २०६५
आनीलचूचुक० १५४५
आनृशंस्यं २९२५
आन्दोलय० १०३७
आपत्सु किं विषा० ३०८७
आपत्सु मित्रं २७९३
आपन्नया ३३०५
आपन्नोऽस्मि ३५२७
आपूर्यंत ७११
आपृष्टासि १०५४
आप्वाप्यात्म० ४१२
आबद्धकृत्रिम० ९९५
आबद्धपद्म० १९११
आ बाल्यादपि० ६१८
आ बाहूद्गत० ७४
आभाति चन्द्र० ५७२
आभाति रोम० १५५४
आभोगिनौ १२१९
आमूलतो १६७४
आमोदाहृत० २५८५
आमोदैर्मरुतो ८२३
आम्राः किं फल० ९५०
आयाते दयिते मनोरथ० २०७६
आयाते दयिते मरुस्थल० २०७५
आयाते रभसाद्यदि ११७३
आयाते श्रुति० १०५२
आयातो दयित० २०७७
आयातो भवतः २४१५
आयास्य बहुभि० २८३३
आयास्यस्यवधा० १०६१
आयुषः क्षण० ३३०७
आयूंषि क्षणिकानि ३३३०
आरात्कारीष० २४१७
आराध्य भूपति० ३२५८
आराध्यमानो ४२६–३२३१
आरोग्यं विद्वत्ता २३४
आरोपयसि १२८
आरोपितः ९९४
आरोप्यते० ३००६
आर्जवं चानृ० २९५९
आर्तो मत्सदृशो ३५०३
आलि कल्पय १११९
आलेख्यं निज० २६१५
आलोकन्नस्त० २४२१
आलोकयति १७४३
आलोलामल० १३०४
आलोहित० १७४०
आवेपते १९१४
आशङ्क्य प्रणतिं १५९०
आशाः प्रकाश० ५७४
आशापाश० ३४७९
आशा बलवती ३२४६
आश्चर्यं वडवा० ८८४
आश्चर्यधाम० २४९८
आश्रयमाश्रय० २८८१
आश्लिष्टापि करोति १३६८
आश्लिष्टा रभसा० २२४१
आश्लेषाधर० ६८
आश्वासयति १९५६
आसन्नतरता० ३२९४
आसन्नान्पुरतो ३२४९
आसन्नामव० ११००

आसन्नाय सुदू० २२
आ सप्ततेर्यस्य २३३०
आ सर्गात्प्रति० ५६४
आसां जला० १८७४
आसारेण १७८४
आसिष्ये सुखितो ३२६०
आसीज्जनः ३०६०
आसीत्ताम्रमयं ३२०६
आसीददभ्र० २६३४
आसीदासीम० २६०६
आसीन्नाथ २५४६
आसे चेत्स्वगृहे ३१९८
आस्तां क्रमाप० ८६५
आस्तां दूरेण २०८७
आस्तां विश्वसनं ११४८
आस्तेऽत्रैव १०१५
आस्ते दामोदरी० २५२०
आ स्त्रीशिशु० ८६८
आस्यं निरस्य ८३९
आस्यं पिधाय २४११
आ स्वर्लोका० २५९४
आहतं कुच० २१२४
आहते तव २४५४
आहत्याहत्य २४२५
आहरेज्ज्ञान० २९५२
आहवे जग० २४४७
आहारं प्रति १४१५
आहारे विरतिः ३४८५
आहूतेषु १००१
आहूतोऽपि १८३८

इ ( ३६ )

इक्षोर्विकारा २१३८
इच्छति शती ३२५५
इतः काका० ९४५
इतः स्वपिति ८८६
इतरदेव ४३१
इत्थं पशुपति० १२९
इदं किं ते १३३४
इदं कृष्णं ११३८
इदं युग० ३२८५
इद व्योम० १९९७
इदं हि माहा० २६८
इदमपर० २५३२
इदमर्ड ३५२१
इन्दिन्दिरै० १६५९
इन्दीवरेण १६१०
इन्दुं तण्डुल० १८५६
इन्दुः प्रयास्यति ७८२
इन्दुर्यत्र २३९८
इन्दोः संक्षय० १४७५
इन्दोर्लक्ष्म २५६३
इन्द्रगोपै० १७१९
इन्द्राय वीक्ष० २०८९
इन्द्रियाण्येव २२६०
इन्द्रो यच्छत० २५५१
इमे पद्मे १४७८
इयं पल्ली ७६८
इयं मयि २१५९
इयत्यप्येत० ५३०
इयमुन्नत० २५५
इष्टा बालक० ३३१२
इष्टो वा सुकृत० ४३७
इह लोके हि ३१६०
इह सरजसि ३१३६
इहैकश्चूडालो ८७७
इहैव नरक० ३३६२
इहोपपत्ति० ३०२२

ई ( २ )

ईर्ष्याप्रस्फुरिता० १५९१
ईषन्मन्थर० १३६१

उ ( ८९ )

उग्रग्राह० २५५४
उच्चः सत्फल० ५७७
उच्चित्य प्रथम० १८६५
उच्चैः पदमधि० २८५७
उच्चैरध्ययनं २३७८
उच्चैरुच्चरतु ९१२
उच्चैर्यो मधु० ८३०

| | | | |
|---|---|---|---|
| उच्छृङ्खलेन | ६२४ | उद्ग्रीवं खलु | १३४९ |
| उच्यतां स | ११८१ | उद्दामदक्षिण० | १६८० |
| उज्वलचम्पक० | ९६१ | उद्दामाम्बुद० | २५५५ |
| उडुगणा० | ५७६ | उद्भाव्यमानो | १०७७ |
| उडुपरिवृढ: | २२१० | उद्यच्छशी | १९७१ |
| उत्कण्ठितं मनो | १२०४ | उद्यन्त्यमूनि | ५५८ |
| उत्कम्पोऽपि | ११५२ | उद्वृत्त: स्तनभार एष | १३५४ |
| उत्कम्पो हृदये | ११५८ | उद्वृत्तदैत्य० | ५० |
| उत्कूजति | १९९१ | उद्वृत्तस्तनभारभङ्गुर० | १३४४ |
| उत्कोचपारि० | २३४९-२८८९ | उन्नत: प्रोल्ल० | १५३८ |
| उत्खातान्प्रति० | २९४७ | उन्नतानां | २८९९ |
| उत्तमं सुचिरं | ३०३ | उन्नत्यै नमति | ३२३५ |
| उत्तम: क्लेश० | २९१ | उन्नमय्य | २०९० |
| उत्तानोच्छून० | ३३४१ | उन्मीलद्गुड० | १६४० |
| उत्तिष्ठ क्षण० | ३१९५ | उन्मुक्तमान० | १६५० |
| उत्तिष्ठ दूति | १९४० | उन्मृष्टपत्रा | १८७० |
| उत्तिष्ठन्त्या | ७९ | उपकर्तु० | २५२ |
| उत्तुङ्गशैल० | ८३७ | उपकार: | २६४२ |
| उत्थाय हृदि | ३४३५ | उपकारिणि विश्रीणे | १८०८ |
| उत्थायोत्थाय पापे | ३३३१ | उपकारिणि विश्वस्ते | ३०६१ |
| उत्थायोत्थाय बोद्धव्यं | ३३३० | उपकारिणि वीत० | २५६ |
| उत्पत्तिर्मरुतां | ७७५ | उपकारेण | २०२ |
| उत्पन्नपरि० | २६७८ | उपकृतमनेन | ४१६ |
| उत्पन्ना बहव० | ९३३ | उपकृतवता | ८७२ |
| उत्पादयन्ती | २०५० | उपकृतिरेव | ४१७ |
| उत्पादिता स्वय० | ५२३ | उपकृतिसाहृ० | २५० |
| उत्सन्नमापण० | ९६० | उपपत्तिभि० | १४२ |
| उत्साहसंपन्न० | ३१५-२९१२ | उपप्लवोऽसौ | १२६९ |
| उत्साहिता | २०५४ | उपभोग० | ४८२ |
| उदन्वाच्छिन्ना | ३२२ | उपयुक्त० | ३३३६ |
| उदमज्जि | १९७३ | उपरि घनं | १७४४ |
| उदयगिरि० | २०२८ | उपरि निपतिता० | २१३५ |
| उदयति | २१६३ | उपरि पयोधर० | १७४५ |
| उदयनगा० | १९६२ | उपलक्ष्य० | १७३५ |
| उदयमुदित० | २१७७ | उपसर्गा: | २४६७ |
| उदयशिखरि० | २१८७ | उपार्जितानां | ३०३७ |
| उदारैर्मन्दारै | ३४१७ | उपोढरागेण | १९६९ |
| उदिते दृष्टि० | २४८० | उरसि निहित० | १९४७ |
| उदेति सविता | २२० | उर्वी मौर्वी० | २६०८ |
| उद्गर्जन्कुटिल० | १०३५ | उल्लापयन्त्या | १४१६ |

उल्लासिताखिल० ४४४
उल्लेखं निज० २६१८

ऊ ( ३ )

ऊढा येन १०१८
ऊरुमूलगत० २१२५
ऊष्मव्यपेता० २४८५

ऋ ( ३ )

ऋज्वी दृष्टि० २३६७
ऋज्वी स्थिरा २३११
ऋणशेषो० २७६०

ए ( ५५ )

एकं दन्त० ७०
एकं मित्रं २४८१
एकं हि चक्षु० २९२८
एकः स एव २२५३
एकः स व्यसनी १३६५
एक एव खगो ६७४
एकतो दिवसा० १२४५
एकत्र नास्य १६५७
एकत्रासन० १५८३
एकमुत्कण्ठया १२३९
एकस्थं जीविते० ६०
एकस्मिञ्छयने २११२
एकाकिनी वन० ५९४
एकाकिनी यद० २२३४
एकाकी निःस्पृहः ३४०४
एकान्तसुन्दर० १४६४
एकान्ते वनतो २२३९
एकार्थाभिनिवे० २८४६
एकीभावं ४२०
एकेनांशेन ३०००
एकेनाक्ष्णा १९१६
एके वारिनिधौ १९०२
एकैकातिशया० ४९२
एकैव संगमे १२५०
एकैव साम्रत० ५५७
एकोऽपि गुण० २७३०
एकोऽहमस० ५८२
एको हि दोषो—तेनापि नूनं ३४३९
एको हि दोषो—रूपादिका० ३४३८
एतत्कान्त० १२१४
एतत्तस्य १०१४
एतत्प्रचण्डि १९८८
एतदत्र ८३४
एतदेव मह० ३०८४
एतदेवायुषः २६९८
एतद्धभ्रुकचा० १९२८
एतन्नरेन्द्र० २१६६
एतस्मिन्दाक्षि० १६९०
एताँञ्छिनद्मि २३५५
एतावच्छक्य० २४३७
एतावज्जन्म० ३२१५
एतेन बद्ध० ३३१०
एवं चेत्सरस० १००२
एवं चेद्विधिना ९४९
एवं यथाह १६३१
एवमेव नहि ४२८
एष तुडुमर० १९६६
एष बकः ७५९
एष विशेषः २५२९
एष सूर्यांशु० १६९४
एषा ते हर ६७
एषा हि मे २२७५
एषोऽग्निहोत्रीति २३५३
एहि गच्छ—इति वित्रस्त० १२२८
एहि गच्छ—इत्थमाशा० ३१६८

ऐ ( ३ )

ऐन्द्रं धनुः १८१५
ऐरावणानन० ७३६
ऐरावणे २४९३

ओ ( २ )

ॐ कारो मदन० १९८३
ॐ नमः परमा० १२

औ ( १ )

औदार्यं सधने २६२२

## क (३६५)


कंचित्क्षणं १०५३
कंदर्पे नड० २६१६
कः कः कुत्र ६१७
कः कालः कानि २८०४
कः स्वभाव० ३१५९
कचाधर० २३४७
कचग्रहो० १२८३
कटी मुष्टि० २३६०
कटु रटति ६९२
कटु रटसि १०३४
कठिनहृदये मुञ्च क्रोधं १६१९
कठिनहृदये मुञ्च भ्रान्तिं १६२०
कठोर नखरा० ६१०
कण्टकस्य २८०५
कण्टकेनापि २९८२
कण्ठग्रहे १०८५
कण्ठस्य तस्याः १५२८
कण्ठस्य नाकरो० १५२७
कण्ठाद्रक्तं २३६३
कण्ठान्तः क्वणितं २६२३
कण्ठे गद्गदता ३१७२
कथं ते व्यक्त० ३२१७
कथं न लज्जित० ५४७
कथं न्वेषा २१३०
कथं मुग्धे १२२३
कथं स दन्त० ५५३
कथमपि सखि ११४३
कथमियति ८०८
कथय निपुणं १४२०
कदर्थितस्यापि ३१६–३२८
कदाधरदले १३१८
कदान्वहं ११९४
कदा संसार० ३४०१
कंधरावनत० ३२१९
कनकभूषण० ८९८
कनिष्ठास्तं २७२६
कन्या कौतुक० २२३८
कपटपटुता २०७०
कपोले पत्राली १६२७
कपोले मार्जारः १९९४
कमलं भवनं ७२८
कमलमनम्भसि १५१६
कमलिनीमलिनी ७३०–१६७६
कम्पप्रदोऽसौ १८३४
करकिसलयं २१०५
करचरण० १८५२
करजाल० ७२
करपातै० २४३६
करभ किमिदं ६६८
करभदयिते यत्तत्पीतं ६६६
करभदयिते योऽसौ पीलुः ६६७
करभ यदि ६६४
करभ रभसा० ६६९
करसादो० १८८६
करान्प्रसार्य ५५०
करारविन्देन ३४९९
करिकलभ ६२२
करिष्यामि ३२९७
करे विभाति १५३२
करोति पूज्य० ३६५
करोति लाभ० ३२२३
करौ धुनाना—पयस्यगाधे १८७८
करौ धुनाना—वृथा कृथा १८६०
कर्णिकादिष्विव १४
कर्णिकारलताः १६५५
कर्णं तत्कथयन्ति ४६२
कर्णेऽवतंस० १९९०
कर्पूरचन्दन० १०८४
कर्पूरैरिव २६११
कर्मजा हि ३०८३
कर्मणा मनसा २६९६
कलत्रचिन्ता० ३१४०
कलमं फल० १८०५
कलहकलया २०५५
कलावति क्षत० १९४५
कलुषं मधुरं १७२७
कलेरन्ते ३०५६
कल्पद्रुमान्विगत० ३१३५

कल्पयति येन २८९२
कल्पस्थायि ५२१
कल्लोलैर्विकिर० ८८०
कवीनां महतां १४८
कवेरभिप्राय० १५८
कश्मीरान्गन्तु० ६०८
कस्तूरीतिलकं २७
कस्त्वं भोः ८२२
कस्त्वं लोहित० ७६३
कस्त्वं शूली १०३
कस्मात्सत्यवती० २५७३
कस्माद्दूति १४४१
कस्माद्दोलैतिके ११७२
कस्माद्भग्नाः १४४३
कस्यादेशा० २८२
कस्यानिमेष० ९८५
कस्योदपत्स्यत ३४९५
काकः कोकिल० ७७३
काकः स्वभाव० ९८०
काकतालीय० २६७५
काकाल्लौल्यं २३२४
काकुत्स्थस्य २२८६
काके शौचं ३२४०
काकैः सह ७१९
का खलेन ३७४
काचित्पुरा १०९४
काचो मणिर्मणिः २१४
काञ्चीगुणै० १५५३
काञ्चीदामक० १३७२
काञ्च्या गाढतरा २०८१
का नाम बुद्धि० २३०७
कानि स्थानानि १७१७
कानानस्य ३०४४
कान्तः पुत्रि ११७४
कान्तवेश्म १९३८
कान्ता ददाति १२६१
कान्तानवाधर० २०१८
कान्तानां कुवलय० १८८३
कान्तामुखं १२८९
कान्ताया विकस० २२४९
कान्तारेषु च २६२७
कान्ते तल्प० २१४७
कान्ते सागसि २१४६
कामं प्रियानपि ५१३
कामं भवन्तु ९३०
कामं विषं च ३३८४
कामव्याघ० १६३४
कामार्थौ लिप्स० २९५१
कामिनीकाय० १२५६
कामिनीवदन० २०१५
कायः संनिहिता० ३२९९
कायस्थेनोदर० २३२६
कायेन त्रिविधं २९६१
कारणात्प्रियता० २६५८
कारणैः सदृशं २४३९
कारणोत्पन्न० १८४८
कार्यगतेर्वैचित्र्या० २८५१
कार्यज्ञः प्रष्टव्यो० २८७६
कार्यमालोचिता० २७१७
कार्याकार्ये २८६१
कार्यो न प्रति० २१३२
कार्यार्थिनो २३९४
कालः किरातः १९२७
कालकूटमधुनापि ११२२
कालकूटमिह ११२१
कालक्रमं १२७२
कालप्राप्तं ८९२
कालिन्दीपुलिनो० ३८
कालुष्यं पयसां १०२६
काले नील० १५९२
काव्यामृतं १७२
काशाः क्षीर० १७९७
किं कण्टकैक० ८०४
किं कण्ठे क्रियता० १६८४
किं करिष्य० २७९०
किं करोतु २४६५
किं कवेस्तस्य १३४
किं कुपितोऽसि १२१
किं कूर्मः क ५८५
किं कृतेन २४३१

| | | | |
|---|---|---|---|
| किं केकीव | ७७४ | किं वा बाहुलता | १४०८ |
| किं कौमुदीः | १४६३ | किं वृत्तान्तैः | २५४४ |
| किं गतेन यदि | १७४८ | किं शाकानि | ३४७२ |
| किंचित्कुञ्चित॰ | ३७ | किंशुकव्यप॰ | १६४५ |
| किंचित्प्राप्त॰ | ११७७ | किंशुके किं | ४७२ |
| किं चित्रं यदि | १५३७ | किं सुन्दरे॰ | १४६५ |
| किं चित्रमुन्नत॰ | १५३६ | किं स्वाद्वास्वा॰ | ७५ |
| किंचिन्निर्मुच्य | ४५ | किं हास्येन | २५७० |
| किंचिन्मुद्रित॰ | १७६९ | किमनया | १०८२ |
| किंजल्कामोद॰ | १४१२ | किमनेन | ५४९ |
| किंजल्केन व्यप॰ | १४८२ | किमपि कान्त॰ | २१६२ |
| किं जीवावधि॰ | ३०४३ | किमप्यवज्ञात॰ | १८८५ |
| किं तया क्रियते | ५०७ | किमसि विमतिः | ९४६ |
| किं तस्य दानैः | ३४८६ | किमामोद॰ | ७४३ |
| किं तारुण्य॰ | १४७१ | किमिदमुचितं | ९९९ |
| किं तेन काव्य॰ | १३६ | किमिह बहुभि॰ | ३४५३ |
| किं तेन किल॰ | १३३ | किमु परिगता | २०९९ |
| किं तेन हेम॰ | १००६ | किमेवमविशङ्कितः | ६०९ |
| किं त्वं दूति | १४२४ | किरणनिकरै॰ | ९०६ |
| किं त्वं निगूहसे | १४२८ | किराटोऽटति | २२९५ |
| किं त्वं हालिक | १०३१ | किरति मुख॰ | ७६९ |
| किं दीर्घदीर्घेषु | ९२२ | कीर्तिस्ते जात॰ | २४५७ |
| किं दूरेण | ६८२ | कुङ्कुमपङ्क॰ | १२७५ |
| किं द्वारि दैव॰ | १६८२ | कुचस्पर्शा॰ | २११८ |
| किं धनेन | ३२९२ | कुटजकटवो | १७६४ |
| किं नु काल॰ | १९३० | कुन्दं क्षणक्षयि | २५०० |
| किं नु मे स्या॰ | २७१६ | कुन्दः कन्दलित॰ | २५३५ |
| किं नु लीना | १४५२-२०८८ | कुप्यत्यकस्मा॰ | २२२६ |
| किं नैव सन्ति | ६८१ | कुब्जस्य कीट॰ | ३१६६ |
| किं पान्थ निर्मथन॰ | ९४० | कुमुदवन॰ | २१८८ |
| किं पृष्टेन | १४०२ | कुमुदामोदी | १३८८ |
| किं बाले मुग्ध॰ | १३८० | कुमुदेष्वधिकं | १९५८ |
| किं भूषणं | २५३७ | कुरबक | २५६४ |
| किं भूषणेन | २१६५ | कुरुकरे | ११३१ |
| किं मामेवं | १०८ | कुरुते याव॰ | २१५५ |
| किं मे दुरो॰ | १२४ | कुलजोऽयं | २८५९ |
| किं मौनं ननु | २६०९ | कुलममलिनं | २५०७ |
| किं युक्तं बत | ४१ | कुलशैलदलं | १३ |
| किं योगिनीयं | १९३२ | कुलीनः शील॰ | २८२१ |
| किं राकेन्दु॰ | २६२० | कुसुमस्तबक॰ | २०१-५०९ |

| | | | |
|---|---|---|---|
| कुसुमानीव | २८८७ | केचिद्भयेन | ३४४९ |
| कुसुमे कुसुमो० | १४९५ | केचिन्मृगमुखा | २७३८ |
| कुसृतिभिरल० | ११९ | केतकीकुसुमं | ७२४ |
| कूजत्कोकिल० | १६८६ | केतक्य: कण्टकै० | २२९९ |
| कृच्छ्राद्दत्ते | ८४५ | केन क्रमेण | १४४६ |
| कृतं कलौ | २४३० | केनाघ्रात० | ७४६ |
| कृतककृतकै० | १६२८ | केलिं कुरुष्व | ६२३ |
| कृतकमधुरा | १०४७ | केशा: किमप० | २२९४ |
| कृतगङ्गोदक० | ३४९० | केशानाकुल० | १८५४ |
| कृतगुरुतर० | २१८३ | केशै: केसर० | १३४५ |
| कृतघ्नस्य | २९८९ | केषांचिद्वाचि० | १४३ |
| कृतशत० | ३४० | कैलासायित० | २००२ |
| कृतसरस० | ११८३ | कोकिलश्चूत० | १६४३ |
| कृतान्तपाश० | ३०९३ | कोटरान्त: | १६९७ |
| कृते प्रत्युप० | ३०१५ | कोटरे तिमिर० | ११२० |
| कृतोपकारं | १९०० | कोऽतिभार: | ३१३-२८०० |
| कृत्वा चुम्बन० | ८४१ | को दर्शयति | ३०८९ |
| कृत्वापि कोष० | ७२५ | को धन्य: सखि | ११०४ |
| कृत्वापि पातकं | २९८६ | को नु वेश्या० | ३३७१ |
| कृत्वापि येन | ४११ | कोपस्त्यक्तुं | १३२ |
| कृत्वा बलवता | २६५७ | कोपात्कोमल० | १३५१ |
| कृत्वा विग्रह० | २१५० | कोपादेक० | ५९० |
| कृत्वोपकारं | ४७७ | कोपापाटल० | १६०९ |
| कृपणं विलप० | ३२७९ | कोपो यत्र | १६३० |
| कृपणसमृद्धी० | ४८४ | कोऽयं द्वारि | १०४ |
| कृपणेन समो | ४६८ | कोऽयं भ्रान्ति० | १०३२ |
| कृश: काण: | ३३९० | कोऽर्थान्प्राप्य | ३४७० |
| कृशा केनासि | १३२६ | कोशद्वन्द्व० | १३५६ |
| कृशाशया | २४८७ | कोष: स्फीततर: | १५२३ |
| कृशासीत्यालीना | १३२५ | कौर्मं संकोच० | २७५३ |
| कृष्णं वपुर्वहतु | ७६६ | कर्तुं धनानां | १४७७ |
| कृष्ण: क्रीडित० | २२९१ | क्रमेलकं | ६७३ |
| कृष्ण कृष्ण कृपालु० | ३५०२ | क्रयादौषध० | २३८१ |
| कृष्ण कृष्ण परमेश्वर | ३५११ | क्रान्तकान्त० | २००८ |
| कृष्ण त्वदङ्घ्रि० | ३४०६ | क्रामन्त्य: क्षत० | २५८३ |
| कृष्णेनाम्ब | ४० | क्रिमयो भस्म | ३२७५ |
| कृष्णोऽयं मथना० | २६३२ | क्रुद्धोलूक० | ७१७ |
| केका: कला | ६७८ | क्रोधाद्भवति | ३३४५ |
| केकाभिर्नाट्ट० | ६८७ | क्लेशै: क्लेशै० | २४०४ |
| केचिदज्ञानतो | २७६४ | क्व कठिनर् | ७०३ |

क क्रीडति ६६२
क गतो मृगो ९५७
क्वचिज्झिल्ली० ७२३
क्वचित्ताम्बूला० २१३१
क्वचित्सस्यै० १८२३
क्वचिदपरिस्फुटं २०६४
क्वचिदपि वस्तु० २८६३
क्वचिद्भूमौ २९४०
क्वचिन्नृत्तं २९४१
क्वचिन्मृगशिरः० १८९१
क्वचिन्मोहा० १३२७
क तत्तेजः ५६२
क दृष्टमन्धेन ८३६
क दोषोऽत्र १४१
क पिशुनस्य ४३२
क प्रास्थितासि १९४६
क भ्रातश्चलितोऽसि २०७२
क्काकारो गिरि० ६३४
क्वाकार्यं शश० १३४३
क्कान्तः शून्यो ९५२
क्काम्भोदः क २२४०
क्केदानीं दर्पिता० ५८
क्षणं बालो ३१३९
क्षणक्षयिणि २९९
क्षणभङ्गि ११९८
क्षणमतुहिन० २१८९
क्षणमप्यनु० २४४९
क्षणमयमुप० २१८६
क्षणसंपदियं ३३१३
क्षपाः क्षामीकृत्य १७६५
क्षमी दाता २८१९-३२२८
क्षान्तं न क्षमया ३१७८
क्षामा तनुर्गतिः १४३३
क्षारं राद्धमिदं २३७९
क्षारत्वैव हि ८६०
क्षिपतोऽप्यन्य० १२३७
क्षीणः क्षीणः समी० ५४६
क्षीणः क्षीणोऽपि १६११
क्षीणश्चन्द्रो ५६०
क्षुत्क्षामेण १०२४
क्षुत्क्षामोऽपि ६१४
क्षुत्तर्षदुःखं ३०१४
क्षुद्राः संत्रास० २२८३
क्षुद्राः सन्ति २८५
क्षुधासमा ३४४२
क्षुधितोऽपि ६९४
क्षुब्धदैवा० ३१०७

## ख ( २० )

खचित्रमपि ३३८
खट्वा नितान्तं २३५६
खड्गास्तिष्ठन्तु २२५२
खण्डक्षोद० १६३९
खमिव जलं १८०१
खरघनमपि २०४१
खरनखर० ६०५
खलः सुजन० ३३५
खलानां कण्टका० ३८०
खलेन धन० ३३९
खलेषु सत्सु ३४५
खलोल्लापाः ३२६१
खल्वाटो दिवसे० ३१४१
खशभार्ष्यं तु ३१७५
खे खेदमन्दां १३९४
खेदः किं खलु १३१
खेदाय स्तन० २०३४
ख्याता नराधि० १६०
ख्यातिं गमयति १५४
ख्यातिं यत्र २८४

## ग ( ८१ )

गगनशयन० ५७३
गङ्गातीरकृतोटज० ३४१२
गङ्गातीरतरङ्ग० ३०७८
गङ्गाधौतशिला० २२४४
गङ्गाविग्रह० १२२
गच्छ गच्छसि १०४०
गच्छतस्तिष्ठतो—मा भून्मनः ३५०७
गच्छतस्तिष्ठतो – यन्न भूत० २९७०
गच्छ त्रपे ३०६८
गच्छन्पिपीलको २६८६

| | |
|---|---|
| गच्छेत्युन्नतया | २०७९ |
| गजतुरग० | ४३३ |
| गणयति गगने | २३०२ |
| गणयन्ति नाप० | १५२ |
| गतं तद्गाम्भीर्यं | ७०७ |
| गतप्राया रात्रिः | १६१२ |
| गतमतिजवा० | ९४४ |
| गतानि हन्त० | १२११ |
| गतास्ते जीमूता | ८४६ |
| गतेऽपि वयसि | २६४५ |
| गते प्रेमाबन्धे | ११४१ |
| गते सुहृदि | ३२०३ |
| गतोऽस्तं घर्मांशुः | ११४० |
| गन्तव्यं यदि | १०५९ |
| गन्तुं सत्वर० | १७१२ |
| गन्धाढ्यां नव० | ७५३ |
| गन्धैकसारो | ९५६ |
| गम्भीरस्यापि | १८३७ |
| गर्जन्हरिः | २४१२ |
| गर्ज वा वर्ष | १७२४ |
| गर्जित्वा बहुदूर० | २५७८ |
| गर्जित्वा बहु संनिरुध्य | ८४८ |
| गर्जित्वा मेघधीरं | २४२४ |
| गवादीनां | ८५४ |
| गाढालिङ्गन० | २११४ |
| गाढाश्लेष० | २०८२ |
| गायति विहसति | २४०८ |
| गायन्ति किंनर० | २४९४ |
| गुण एव नाल० | २८५३ |
| गुणदोषा० | ३४९ |
| गुणमयोऽपि | १७५६ |
| गुणराशिमहा० | २१६ |
| गुणवज्जन० | २१८ |
| गुणवत्त्वे | २४६४ |
| गुणवदगुण० | २९३४ |
| गुणवानस्मि | २८७७ |
| गुणावान्सुचिर० | ३०१ |
| गुणवृद्धिवर्ण० | १३८३ |
| गुणाः खलु—अर्थसंचय० | २६७२ |
| गुणाः खलु—सगुणो | २६७३ |
| गुणा गुणज्ञेषु | २६० |
| गुणानां सा | ४५१ |
| गुणानामन्तरं | २९३ |
| गुणा यत्र न | ३१०८ |
| गुणार्जुने क्लेश० | ३०६५ |
| गुणिनः समीप० | २४७ |
| गुणिनामपि | ३१२ |
| गुणिनि गुणज्ञो | २५३ |
| गुणेषु यत्नः | २६७१ |
| गुणैः सर्वज्ञ० | २६८३ |
| गुरुः प्रकृत्यैव | १५५० |
| गुरुणा स्तन—मुख० | १२३३ |
| गुरुणा स्तन—सोपविष्टा | १२३४ |
| गुरुनटदैवज्ञ० | २३०१ |
| गुर्वन्तिके ह्रिया | २०४६ |
| गुहाश्रितो धर्म० | ३४०८ |
| गृध्री निर्भर० | २३७७ |
| गृहं श्मशानं | ९९१ |
| गृहमध्य० | ४७१ |
| गेह दुर्गत० | ३०९ |
| गोपायन्ती | १०९५ |
| गोभुजां वल्लभा | ३३६४ |
| गोवर्धनोद्धरण० | ३४ |
| गौरः सुपीवरा० | २३०४ |
| ग्रथित एष | ७९९ |
| ग्रामोऽस्मिन्पथि० | १७७१ |
| ग्रावाणो मणयो | ८६४ |
| ग्रीष्मं द्विषन्तु | ८६३ |
| ग्रीष्माभा श्वसितैः | १४०६ |
| ग्रीष्मे हारतुषार० | ३३२३ |
| ग्रीष्मोष्मप्लोष० | १७१५ |


## घ (१२)


| | |
|---|---|
| घञ्झढधम० | २३९७ |
| घटनं विघटन० | ५२० |
| घटयसि घन० | २५०३ |
| घटे जन्मस्थानं | २२७९ |
| घनसंतमस० | ७७८ |
| घनोद्यानच्छाया० | ३४१४ |
| घासग्रासं | ६४० |
| घुसृणसुमनः० | २२०५ |

घृतलवण० ३१८८
घृतेन भोजनं २३१२
घ्नन्तः शपन्तः २९०९
घ्रात्वा श्रोणी० २४२३

च ( ५६ )

चकाशिरे १८७१
चक्रधरोऽपि ३२५६
चक्र ब्रूहि ८७
चक्राह्वो विरही १९१९
चक्रिता च २३३१
चक्षुः किं कम्पसे ११०७
चक्षुः प्रीत्या २०८४
चक्षुर्दद्या० ३०१६
चक्षुर्द्रक्ष्यति १३५२
चञ्चुस्तृणेन २३४६
चटुलचातक० ९३९
चटुलनयने १०९७
चण्डचाणूर० ३३
चण्डालश्च ३१६२
चतुरः सृजता २७६९
चन्दनं स्तन० २१५८
चन्दने विष० ७९८
चन्द्रः सुधांशु० ६६३
चन्द्रग्रहणेन १२६
चन्द्रश्चण्ड० १२७७
चपलहृदये ११७६
चरणपतनं ११३७
चरतवृषभा ६११
चराचरजग० २३
चरितैः कौलेये० १७४२
चलतु तरला० १५७५
चलत्कुचं २१३६
चला विभूतिः ३३१५
चातक तात ६८४
चारुता पर० ३५६
चारुमधुव्रत० १२६७
चिकुरप्रकरा १४८५
चित्तज्ञः कुरुते २८४५
चित्रं कारण० २४३४
चित्रं कियद्यदय० ९७७
चित्रं यदेव १५२०
चित्रैर्यस्य ८१०
चिन्तनीया २६८७
चिन्ताकुलः १९९२
चिन्ताचक्रिणि ८८
चिन्तामणे भुवि ९०२
चिन्तामणेस्तृण० ९०३
चिरं शीत० १६५६
चिरमाविष्कृत० ७६
चिरविरहिणो० २०६३
चिराय सत्संगम० २६२
चिरारूढप्रेम० २१२९
चुम्बतो गण्ड० १८५५
चूतोद्यानं २२५१
चेतः प्रसाद० १६१
चेतांसि चपल० १६७०
चेतोहरा ३३१८
चैत्रं मा स्मर २६१३
च्युता दन्ताः ३२५४
च्युतामिन्दो० ६६
च्युतोऽप्युद्गच्छन्ति २२३

छ ( १० )

छन्दोरहिता २३३७
छाया नात्मन ८२१
छायामम्भसि १९९५
छायावन्तो ७९१
छायास्यैव ८१७
छित्त्वा पाश० ६५५
छित्त्वा हार० १८४४
छिद्यन्तां वन० १७७०
छिद्रेष्वनर्था २३५१
छिन्नस्तम० ८१५

ज ( ६१ )

जगति मिथुने २२०३
जगत्सिसृक्षा० ४
जघनमुन्नत० ११६८
जङ्घे तदीये १५६८
जटाभाभि० १९९९
जडे प्रभवति २९२

जडेषु राज० ३२०८
जडोऽयमिति २७९८
जनमजित० १४६२
जनमनुरागि १२०
जनस्थाने ३२६४
जन्मनि क्लेश० ३३५०
जन्मान्तरशता० ३३३२
जन्मैव ताव० ३२१६
जपो जल्पः ३५२५
जय कृष्ण ३५११
जयन्ति कान्ता० १५४१
जयन्ति जित० १९८
जये धरित्र्याः १४७६
जरामरण० ४९९
जर्जरतृणाग्र० ७७९
जलकण० ६८५
जलजभिदुरी० २२०८
जलतरुतृण० ९४३
जलधिजलान्ता २८९०
जलसेकेन २०३
जलान्तराणि ९५१
जलान्तर्नलिनी० १६४६
जल्पन्ति सार्धं० २७७१
जाड्यं ह्रीमति ४६४
जातः कूर्मः १०३३
जातवैरस्तु २६९५
जातश्च नाम ५२९
जातस्य हि ३२६९
जाताः पक्ष० २१६९
जातोऽहं जनको ३३२१
जातौ जातौ ३५१७
जात्युज्ज्वले ७३९
जाने कोपतरङ्गिता० २१५१
जाने कोपपराङ्मुखी १३६२
जाने न्यासहितं १४२२
जायमानो ३३६७
जिघांसवः २८३०
जितेन्दुभासो ८६२
जितेन्द्रियत्वं २९१७
जिह्वादूषित० ३३३
जिह्वायाश्छेदनं २३००
जीयन्तां दुर्जया २६५१
जीवञ्जीवयति ५१७
जीवतो निगर० ७५७
जीवनग्रहणे ३३१
जीवन्त्यर्थक्षये ३१८२
जीवन्नपि न ३८१
जीवन्नेव २२७१
जीवामीति ११८६
जीवित इव १५६
ज्ञातीनां वक्तु० २७०४
ज्येष्ठो भ्राता २७२५
ज्वलितं कुसुम १६६४
ज्वलितं न २२६८
ज्वालौपम्य० २२१६

## झ (१)

झगिति वीक्ष्य १३९७

## त (१४१)

तं राजान० २५७१
तटतरुखग० २२०१
ततश्चाभिज्ञाय १३२४
ततोऽरुण० २१५३
तर्किं काव्य० १६३
तत्तादृशं १२८४
तत्तावदेव ५५५
तत्र पूर्वं० २९९८
तत्त्रिविष्टप० १५४८
तत्प्रत्यक्ष० १००८
तथाभूदस्माकं १६२२
तथा संतुष्टः ६७०
तदङ्कुराणि ९३७
तदवितथ० २१८२
तदात्वस्नातानां १७१४
तदेवाजिह्माक्षं १५७७
तद्ध्यानं यत्र ३४८८
तद्रूपामृत० १३७३
तद्वक्त्राब्जजितः १३५८
तद्वक्त्राक्षिमुखं १५८९
तद्वैदग्ध्यं ७६२१

| | | | |
|---|---|---|---|
| तनुतृणागृ० | ९७३ | तापयिता | २८८६ |
| तन्नास्ति कारयति | २१२८ | तापापहे | ९३१ |
| तन्मित्रमापदि | २९२९ | तापोपशम० | १०६९ |
| तन्मे निष्प्रश्रय० | १५९७ | तामवस्थामयं | ३०५८ |
| तन्वीकटाक्ष० | २२२५ | ताराप्रसून० | १९९८ |
| तन्वीमुज्झित० | २५४८ | तारुण्योष्मणि | १३०७ |
| तन्वी विग्रहिणी | २५८६ | तावत्सन्ति | ३१८३ |
| तन्वङ्ग्या गज० | १५५७ | तावदाश्रीयते | २२६६ |
| तन्वङ्ग्या गुरु० | १०९१ | तावदेवामृत० | १२४४ |
| तन्वङ्ग्या मुख० | १९५७ | तावद्गर्जति | ५८८ |
| तन्वङ्ग्या विप्र० | १२४७ | तावद्गुणा | ३२५२ |
| तन्व्याः समुत्तुङ्ग० | १५४० | तावद्दालित० | ७१२ |
| तन्व्या संप्रतिपत्ति० | १३६९ | तावद्भयस्य | २७५५ |
| तप्रे महाविरह० | १२७९ | तिमिरविरहा० | २२०२ |
| तमस्तोमः | १४७९ | तिरोहितान्तानि | १८८० |
| तमोग्रस्तं | ५७० | तिष्ठत्येकेन | २७४१ |
| तया गवा | २७२७ | तिष्ठन्तं च | ३२९६ |
| तरलयसि | ६९५ | तीक्ष्णं कटाक्ष० | १२८२ |
| तरुणी रमणी | १३११ | तीक्ष्णं रविस्तपति | १८२१ |
| तरौ तीरोद्भूते | ७०६ | तीव्राताम्र० | २५६५ |
| तर्कः कार्कश्ये० | ३४८० | तुङ्गात्मतास्त० | ९९० |
| तर्कोऽप्रतिष्ठः | ३४३७ | तुङ्गात्मनां तुङ्ग० | २५९ |
| तव कुसुम० | १२९८ | तुलामारुह्य | २४२८ |
| तव शत्रु० | २४६८ | तुल्यजाति० | ३२३८ |
| तवैष विद्रुम० | १५०७ | तुल्यवर्ण० | ७६४ |
| तवोच्छ्रिता० | २२९३ | तुल्या सुख० | ५७८ |
| तस्मात्सभ्यः | २८२७ | तुल्येऽपराधे | २२६३ |
| तस्मादनन्त० | ३४५२ | तूष्णीमास्व | २१४८ |
| तस्याः पद्म० | १५५९ | तृणमणेर्मनु० | ९७१ |
| तस्याः शलाका० | १४९१ | तृणादपि लघु० | ३२०५ |
| तस्याः सान्द्र० | २१०९ | तृणानि नोन्मूलयति | २६१ |
| तस्या महा० | १३९९ | तृषा शुष्यत्यास्ये | ३३८७ |
| तस्या मुखस्या० | १५१७ | तृष्णाखनि० | ३२४७ |
| तस्या विनापि | १५३४ | तृष्णे त्वमपि | ३२४८ |
| तस्याः स्तनान्तर० | १०६८ | ते गच्छन्ति | २५८७ |
| तां भवानीं | १ | तेजसा सह | २२५९ |
| तादृग्दीर्घ० | २५२७ | तेजस्विनि | २६५५ |
| तानुन्नता० | ९७६ | तेऽनन्तवाङ्मय० | १८२ |
| तापं हन्ति | २०५ | ते मूर्खतरा० | ४८३ |
| तापः स्वात्मनि | ९४८ | ते वन्द्यास्ते कृतिन० | २३२ |

ते वन्द्यास्ते महात्मानः १४६
ते साधवो भुवन० २७५
तैलाक्तानलका० ११४६
तैस्तैर्गुणैः १५६२
तैस्तैर्घोरै० ३०६४
तैस्तैश्चाटुभि० १३६७
त्यक्तं जन्मवनं ६५४
त्यजति भय० २८४७
त्यज रुष० ११२
त्यागो गुणो० ५०८
त्यागोपभोग० ४७०
त्यागो हि सर्व० १२७१
त्राता भीतिभृतां ९६
त्रिदशमिथुन० २१९६
त्रिनयनजटा० १९९३
त्रिभिर्नेत्रैः १३०८
त्रुट्यद्गुणोऽपि ९२९
त्रैलोक्यभूषण० १८३
त्रैलोक्योपकृति० १०३०
त्वं तस्यां यदि १३४८
त्वं तावद्बहु० १६३२
त्वं द्वित्राणि २५१६
त्वं भोगी यदि १००३
त्वं राजा वय० ३४७३
त्वदरिपुर० २५०१
त्वदर्थिनी १३९३
त्वदासचामीकर० २५६१
त्वद्यशःपुण्डरीक० २४७६
त्वद्यशोजलधौ २४७८
त्वद्यात्रासमये २५१२
त्वद्वक्त्रं नेत्र० १५७१
त्वद्बाहुदण्ड० २४९५
त्वन्मूले पुरुषा० ८१६
त्वमिव कोऽपि० ११३४
त्वया कर्म १४३२
त्वया सह २४७३
त्वयि जनार्दन ३५१३
त्वां कृत्वोपरतो २०२४
त्वां ध्यात्वा विजने १४०४
त्वामालिख्य १३३७

## द (१७२)

दक्षः श्रिय० २८४९
दग्धा पूर्वमहं १७८६
दत्तं येन ८८१
ददतो वाञ्छित० २५३०
ददृशेऽपि भास्कर० १९२६
दधति न जना० ३१९०
दधदसकल० २१७८
दन्ताग्रग्रहणं २१११
दन्ताग्निर्दल० २३७२
दन्ते न्यस्य करं ६३८
दम्पत्योर्निशि २२१४
दम्भेन लोभेन ३४५०
दयस्व किं १३१६
दयितभुजगेन १७३७
दयिताबाहु० १५२९
दर्शयन्ति शर० १७९२
दर्शितानि कल० २६९९
दलानि वासः १६७९
दशशत० २१९७
दहनजा० ११३२
दहनमविश० २२०६
दह्यमानाः ३४७
दह्यमानेऽपि १०६७
दाक्षिण्यं स्वजने २९४६
दाता बलि० ३१०६
दातुर्वारिधर० ३०४६
दातृयाचक० २९७९
दानं क्षमा धृतिः २८११
दानं दरिद्रस्य २९०८
दानं दृढतर० २५४९
दानं न दत्तं ३१७६
दानं भोग च विना ४७९
दानं भोगो नाश० ४७८
दानं यत्प्रथमो० ३०२७
दानपरोऽप्युन्नति० २८६८
दानमिज्या २९९६
दाने तपसि० २७३१
दानोपभोग० ४७३
दाराः परिभव० ३३७७

दारिद्र्यक्षितिपः ३२०४
दारिद्र्यानल० ५०४
दावाग्निप्लोष० ८२७
दाहज्वरेण २३२१
दाहोम्भः प्रसृतिं० १४११
दिक्कालाद्यव० ३
दिक्षु भूमौ १२४२
दिग्दक्षिणार्क० १६६२
दिग्दन्तावल० २५५७
दिग्दाहैकरते १०२३
दिग्वधूवदन० २४८८
दिग्वासा यदि २३९९
दिङ्मुखानि २४८३
दिनमिव दिवा० २२०९
दिनेषु गच्छत्सु १५४३
दिवसं भृशोष्ण० १९७६
दिवि निवेशित० १७५३
दिव्यचक्षुरहं १२०८
दिशां हाराकाराः १७६६
दिशि दिशि मृग० २१६८
दिश्यात्स शीत० ६४
दिश्यात्सुखं ८५
दिश्यान्महासुर० ७७
दिष्ट्या दूरोज्झिता० ३२७८
दीनं रौति १९२०
दीनां दीनमुखैः ३१९६
दीनायां दीन १०६६
दीनार एकोऽस्ति २३७०
दीनेषु दानपरमः ३४०९
दीपाः स्थितं वस्तु २५८
दीप्तिमोषधि० १८८८
दीर्घा कर्मलता० ३१०१
दुःखदशां १३९०
दुःखार्ते मयि १३५३
दुःखी दुःखाधिका० २६६८
दुःखेन श्लिष्यते २७३३
दुःसहसंताप० १६९९
दुग्धं च यत्खलु ३२५९
दुनोति त्वा० २४५८
दुर्गन्धिपूति० ३४४८
दुर्जनः परि० ३५५
दुर्जनः सुजनी० ३८७
दुर्जनदूषित० ३९०
दुर्जनहुताश० १५१
दुर्जनेनोच्य० ३५८
दुर्दिननिशीथ० १९३७
दुर्बलार्थं ३००९
दुर्योधनः २४४३
दुर्लभलाभो ३११८
दुर्वाराः स्मर० ११५६
दुष्टैर्जितं ३०६७
दूति किं तेन १४२९
दूति त्वं तरुणी ११८८
दूरं श्वेतगुणै० २५१८
दूरं सुन्दरि १०६३
दूरमंशु० १९६०
दूरस्था यस्य १२१८
दूरागतं दयित० १९१५
दूराज्ञातविकल्प० २०८०
दूरादुच्छ्रित० ३४२
दूरादुत्कण्ठन्ते २०४७
दूरादवकृता० १७०९
दूराभोगभरेण १३४१
दूरारूढप्रणय० २१४४
दूरीकृतस्वार्थ० ७९७
दूरे कस्यचिदेष ९०७
दूरे क्षीरकथा २४०३
दूरेऽपि परस्या० ४०७
दूरोल्लासित० ३१४५
दूर्वाङ्कुर० ६४६
दृशा दग्धं १३०९
दृशा सपदि २०९७
दृशा सार्धं १६०३
दृष्टं दुर्जन० ३१९३
दृष्टः क्वापि १००
दृष्टदुर्जन० २२८
दृष्टमङ्कुरित० २४८४
दृष्टस्य यस्य ४९
दृष्टा दृष्टिमधो २०७२
दृष्टानुभूत० २९६९

दृष्टा सा वर० १३६०
दृष्टे चन्द्रमसि १९८७
दृष्ट्वापि दृश्यते २२८
दृष्ट्वैकासन० २०६९
दृष्ट्वैव यं ५६९
दृष्ट्वैव रोष० ४९८
देव त्वद्भुज० २६४०
देव त्वद्यश एव २४११
देव त्वद्विजयं २५१०
देवद्रव्य० २९८१
देवाकर्णय २५१४
देवान्पितॄ० ३०१२
देवारिप्रकर: २५२६
देवी क्व दुर्गति० ९८९
देवोर्वीरमणेन्द्र० २५५२
देशं बलं २३१३
देश: शोककरो ३०७१
देशकालागम० २९८०
देशे भ्रान्तमनेक० ३२६२
देशैरन्तरिता १७६८
दैत्यास्थिपञ्जर० ५२
दैन्यमिदं २५३४
दैवं केन ३४६९
दैवं पुरुष० ३११२
दैवयोगादुप० २७२२
दैवाद्दासो १३७६
दैवीर्गिर: १९४
दैवोपसृष्ट: ३११३
दोषमपि गुण० २४४
दोषानपि गुणी० २१५
दोषान्दोषतया ३३५१
दोषो गुणाय २३७
दौर्जन्यमात्मनि ८०३
दौर्भाग्यं वचसां ७७०
दौर्मन्त्र्यान्नृपति० २९४५
द्रविणमापदि २४९०
द्रविणार्जनज: ५२४
द्रव्याणामधरो० १०२८
द्रुततरकर० २१७४
द्रुततरमितो ६४९
द्रव्यं जहाति ३२११
द्रव्यमिदमत्यन्त० १८१३
द्वारं गृहस्य १८५३
द्वारं वेत्रिभि० २५६९
द्वारपालकरा ३२१७
द्वारि चक्षु० ११८२
द्वारे रुद्ध० ३२३८
द्वाविमौ पुरुषौ २९७३
द्विगुरपि २३४३
द्विजपति० ११२८
द्विजसंगति० १५१०
द्वित्राणि स्खलता २४१४
द्वेष्याकीर्ति० २६०५


ध (४४)


धत्सेऽङ्गानि २३७५
धनिनोऽप्यदान० ४८०
धनबाहुल्य० ५२२
धनमपि पर० ३०७
धनमस्तीति २६६४
धनस्य यस्य २९५७
धनुर्माला मौर्वी ८२
धन्या: शुचीनि १८१
धन्या सा विरहे ११४९
धन्यासि या २१४२
धन्यास्ते पुरुष० २६८०
धन्यास्ते ये ३१७३
धर्म: प्रव्रजित० ३०७६
धर्म: शर्म ३०३०
धर्मकामार्थ० २८२४
धर्मश्चार्थश्च ३००५
धर्मस्यार्थस्य ३३०६
धर्मात्मजेन ३३१७
धर्मार्थं यस्य ३००१
धर्मार्थकामहीन० ३१६७
धर्मार्थकामा: २९१९
धर्मार्थसहितं २८३७
धर्मे मतिर्भवतु ३०२४
धाता यदि १४५७
धान्यं मे कनकं २३०६
धार्मिको दूर ३०५९

धिक्तस्य मूर्ख० १९७७
धिग्दैवममलं ३१५६
धिग्धिग्धिगम्बुधि० ८६९
धिग्वाडवं ९७८
धिग्व्योम्नो १०२२
धीरः श्रोत्र० ९१५
धीशालिनां १३१९
धूमः पयोधर० ४४३
धूमानल० १७३९
धूर्तेन प्रथमं २०७४
धूलीधूसर० २४०९
धूलीभिर्दिव० २६०१
धृतघनरुचिर० १५३९
धृतधनुषि २२६९
धृतमपि मधु १०८३
ध्यातोऽसि नो ३५१४
ध्यायतो विषया० ३३४४
ध्वान्तेन ग्रथितैः ५६८

## न (२३१)

न कदाचित्सतां ३०५
न कश्चिच्चण्ड० २७९९
न कामान्न च २९६७
न कालो दण्ड० ३०९७
न कुलं वृत्त० ३०५०
न केवलं तवै० १४९४
न केवलं मनु० ३१११
न कोकिलाना० ७६१
नक्रः स्वस्थान० ९५४
नखदन्तक्षत० १४३१
नखदशननिपात० २१२६
नखानखि १४४८
न गुरुवंश० ९७०
न गृह्णाति ग्रासं ६२९
नग्नत्वमशुचि० ३३४०
नग्नाः सदा १८३३
न चिरं मयासि २५०९
न चेर्ष्या स्त्रीषु २७७८
न जातु कामः ३३५२
न जाने संमुखा० २०३८
न तज्जलं १८१९
न तत्त्ववचनं २८६९
न तथा बाध्यते ३१६५
न तथेच्छ० ३६९
न तदनुकृतं ९५९
नतशातकौम्भ० २०२३
न तु हन्यान्मही० २८२२
न तृणादुद्धारे २५२३
न दद्याद्यशसे २९७४
न दानतः किंचि० ३०२१
न दानेन न २७७३
नदीवप्रान्भित्त्वा ६३१
न देवा यष्टि० ३०९४
न दैवमिति २७२३
न द्विषन्तः क्षयं ३३५९
न निर्निर्यासान्ति० ४८६
न निष्ठुरत्वं १०७४
नन्दयति कस्य १७४१
नन्वाश्रयस्थिति० ४४१
न पङ्कादुद्भूति० ९३२
न परं फलति ४१८
न पालयति ८५३
न पाहि पाहीति २५२४
नपुंसकमिति १२३२
न पुत्रः पितरं २९९२
न प्रस्रवन्ति १६९५
न प्राप्ता भुवि ३४००
न प्राप्तो रत्न० २५९०
न बुद्धिर्धन० ३०९१
न भवति भवति २३६
नभसि जलद० १२९५
नभसि महसां २१९८
न भ्रूभङ्गकटाक्ष २३८०
नमः खलेभ्यः ३२६
नमः शिवाय निःशेष० १६
नमः शिवाय मन्त्रोऽयं ३४८७
नमः स्वतन्त्र० २१
नमन्नपि हरि० ३२३९
नमस्तस्मै वरा० ७
नमस्तुङ्गशिर० ८
नमस्त्रिभुवनो० ५

